वैश्वासिकजनात् प्रयत्नेन प्रयोगग्रहणं यात्रोत्सवादिष्वादरप्रसाधितायाः स्फीतपरिबर्हायाः प्रकाशनं, प्रसङ्गवत्यां सङ्गीतादिक्रियायां पूर्व्वसङ्गहीतैर्ग्राह्यवाग्भिः सिद्धिलम्भनं, दिङ्मुखेषु तत्तच्छिल्पवित्तकैर्यशःप्रख्यापनं, कार्त्तान्तिकादिभिः कल्याणलक्षणोपघोषणं, पीठमर्द्दविटविदूषकैर्भिक्षुकीभिश्च नागरिकपुरुषसमवायेषु रूपशीलमाधुर्य्यप्रस्तावना, युवजनमनोरथलक्ष्यप्रभूतायाः प्रभूततमेन शुल्केनावस्थापनं, स्वतो रागान्धाय तद्भावदर्शनोन्मादिताय वा जातिरूपवयोऽर्थशक्तिशौचत्यागदाक्षिण्यशिल्पमाधुर्य्ययोपपन्नाय स्वतन्त्राय प्रदानमधिकगुणायास्वतन्त्रय प्राज्ञतमायाल्पेनापि बहुव्यपदेशेनार्प्पणं, अस्वतन्त्रेण वा गन्धर्व्वसमागमेन गुरुभ्यः शुल्कापहरणं, अलाभेऽर्थस्य कामस्वीकृते स्वामिन्यधिकरणे वा साधनं, रक्तस्य हि दुहित्रैकचारिणीव्रतानुष्ठापनं, नित्यनैमित्तिकप्रीतिदायकतया हृतशिष्टानां गम्यधनानां चित्रैरुपायैरपहरणं। अददता लुब्धप्रायेण च विगृह्यासनं, प्रतिहस्तिप्रोत्साहनेन लुब्धस्य रागिणस्त्यागशक्तिसन्धुक्षणं, असारस्य वाक्सन्तक्षणैर्लोकोपक्रोशनैर्दुहितुनिरोधनैर्व्रीडोत्पादनैरन्याभियोगैरपमानैश्चापवाहनं, अर्थदैरनर्थप्रतिघातिभिश्चानिन्द्यैरन्यैरनुबद्धार्थानर्थसंशयान् विचार्य्य भूयो भूयः संयोजनमिति। गणिकायाश्च गम्यं प्रति सज्जतैव न सङ्गः; सत्यामपि प्रीतौ न मातुर्मातृकाया वा शासनाऽतिवृत्तिः। एवं स्थितेऽनया प्रजापतिविहितं स्वधर्म्ममुल्लङ्घ्य क्वचिदागन्तुके रूपमात्रधने विप्रयूनि स्वेनैव धनव्ययेन रममाणया मासमात्रमत्यवाहि। गम्यजनश्च भूयानर्थयोग्यः प्रत्याचक्षमाणयानया प्रकोपितः स्वकुटुंबकञ्चावसादितं। एषा कुमतिर्नकल्पाणीति निवारयन्त्यां मयि वनवासाय कोपात्प्रस्थिता। सा चेदियमहार्य्यनिश्चया सर्व्व एष जनोऽत्रैवानन्यगतिरनशनेन संस्थास्यत इत्यवादीत्। अथ सा वारयुवतिस्तेन तापसेन भद्रे ननु दुःखाकरोऽयं वनवासः तस्य फलमपवर्गः स्वर्गो वा। प्रथमस्तु तयोः प्रहृष्टज्ञानसाध्यःप्रायो दुःसम्पाद एव। द्वितीयस्तु सर्व्वस्यैव सुलभः कुलधर्म्मानुष्ठायिनस्तदशक्यारम्भादुपरम्य

मातुर्मते वर्त्तस्वेति सानुकम्पमभिहिता।सा तु प्रत्यवादीत्। यदि भगवत्पादमूलमशरणं शरणमस्तु मम कृपणायाः हिरण्यरेता एव इत्युदमनायत। स तां मुनिरनुविमृश्य गणिकामातरमवदत्-सम्प्रति गच्छ गृहान्, प्रतीक्षस्व कानिचिद्दिनानि, यावदियं सुकुमारा सुखोपभोगसमुचिता सत्यरण्यवासोद्वेजिता भूयो भूयश्चास्माभिर्विबोध्यमाना प्रकतावेव स्थास्यतीति। तथेति तस्याः प्रतियाते स्वजने सा गणिका तमृषिमलघुक्तिधौतोद्गमनीयवासिनी नात्यादृतशरीरसंस्कारा वनतरुपोतकालवालपूरणैर्देवताार्च्चनकुसुमोच्चयावचयप्रयासैरनेकविकल्पोतहारकर्म्मभिः कामशासनार्थे च गन्धमाल्यधूपदीपनृत्यगीतवाद्यादिभिः क्रियाभिरेकान्ते च त्रिवर्गसम्बन्धिनीभिः कथाभिरध्यात्मवादैश्चानूरूपैरल्पीयसैव कालेनान्वरञ्जयत्।

## अवन्तिवर्मण कथा

साहाय्यकं। अस्य हि मे प्राणापहारिणीं पिपासां प्रतिकर्त्तुमुदकमुदञ्चन्निह कूपे कोऽपि निष्फलः ममैकशरणभूतः पतितः तमलमस्मि नाहमुद्धर्त्तुमिति। अथाहमभ्येत्य व्रतत्या कयापि बद्धमुत्तार्य्य तञ्च बालं वंशनालीमुखोद्धृताभिरद्भिः फलैश्च पञ्चषैः शरक्षेपोच्छ्रितस्य लिकुचवृक्षस्य शिखरात्पाषाणपातितैः प्रत्यानीतप्राणवृत्तिमापद्य तरुतलनिषणस्तं जरन्तमब्रवम्। तात क एष बालः को वा भवान् कथञ्चे यमापदापन्नेति। सोऽश्रुगद्गदत् श्रूयतां महाभाग।।

विर्दभो नाम जनपदस्तस्मिन् भोजवंशभूषणमंशावतार इव धर्म्मस्यातिसत्त्वः सत्यवादी वदान्यो विनीतो विनेता प्रजानां रञ्जितभृत्यः कीर्त्तिमानुदग्रो मूर्त्तिबुद्धिभ्यामुत्थानशीलः शास्त्रप्रमाणाकः शक्यभव्यकत्यारम्भी सम्भावयिता बुद्धान् प्रभावयिता सेवकानुद्भवयिता बन्धून् न्यग्भावयिता शत्रूनसम्बद्धप्रलापेष्वदत्तकर्णः, कदाचिदप्ययितृष्णो गुणेषुअतिनदीष्णाः कलासु, नेदिष्ठो

धर्म्मार्थसंहितासु, स्वल्पेऽपि सुकृते सुतरां प्रत्युपकर्त्ता, प्रत्यवेक्षिता कोशवाहनयोर्यत्नेन परीक्षिता सर्व्वाध्यक्षाणामुत्साहयिता कृतकर्म्मणामनुरूपैर्दानमानैः, सद्यः प्रतिकर्त्ता दैवमानुषीणामापदां, षाड्गुण्योपयोगनिपुणो, मनुमार्गेण प्रणेता चातुर्वर्ण्यस्य, पुण्यश्लोकः, पुण्यवर्म्मा नामासीत्। स पुण्यैः कर्म्मभिः प्राण्य पुरुषायुषं पुनरपुण्येन प्रजानामगण्यतामरेषु। तदनन्तरमनन्तवर्म्मा नाम तदायतिरवनिमध्यतिष्ठत्। स सर्व्वगुणैः समृद्धोऽपि दैवाद्यण्डनीत्याम् नात्यादृतोद्यऽभूत्। तमेकदा रहसि वसुरक्षितो नाम मन्त्रिवृद्धः पितुरस्य बहुमतः प्रगल्भवागभाषत। तात सर्वैवात्मसम्पदभिजनात् प्रभृत्यन्यूनैवात्रभवति लक्ष्यते बुद्धिश्च निसर्गपद्वी कलासु नृत्तगीतादिषु चित्रेषु च काव्यविस्तरेषु प्राप्तविस्तारा तवेतरेभ्यः प्रतिविशिष्यते। तथाप्यसावप्रतिपद्यात्मसंस्कारमर्थशास्त्रेष्वनग्निशोधितेव हेमजातिर्नातिभाति बुद्धिः। बुद्धिहीनो हि भूभृदत्युच्छ्रितोऽपि परैरध्यारुह्यमाणमात्मानं न चेतयते। न च शक्तः साध्यं साधनं वा विभज्य वर्त्तितुम्। अयथावृत्तश्च कर्म्मसु प्रतिहन्यमानः स्वैः परैश्च परिभूयते। न चावज्ञातस्याज्ञा प्रभवति प्रजानां योगक्षेमाराधनाय। अतिक्रान्तशासनाश्च प्रजा यत्किञ्चनवादिन्यो यथाकथञ्चिद्वर्त्तिन्यः सर्व्वाः स्थितीः सङ्किरेयः। निर्मर्य्यादश्च लोको लोकादितोऽमुतश्च स्वामिनमात्मानञ्च भ्रंशयेत्। आगमदीपदृष्टेन खल्वध्वना सुखेन वर्त्तते लोकयात्रा। दिव्यं हि चक्षुर्भूतभवद्भविष्यत्सु व्यवहितविप्रकृष्टादिषु च विषयेषु शास्त्रं नामाप्रतिहत वृत्तिः। तेन हीनः सतोरप्यायतविशालयोर्लोचनयोरन्ध एव जन्तुरर्थदर्शनेष्वसामर्थ्यात्। अतो विहाय वाह्यविद्यास्वभिषङ्गमागमयस्व दणडनीतिं कुलविद्यां, तदर्थानुष्ठानेन चावर्जितशक्तिसिद्धिरस्खलितशासनः शाधि चिरमुदधिमेखलामुर्व्वीमिति। एतदाकर्ण्य स्थान एव गुरुभिरनुशिष्टं तथा क्रियत इत्यन्तः पुरमविशत्। ताञ्च वार्त्तां पार्थिविन प्रमदासन्निधौ प्रसङ्गेनोदीरितामुपनिशम्य समीपोपविष्टः चित्तानुवृत्तिकुशलः प्रसादवित्तो गीतनृत्तवादित्रादिष्ववाह्यो बाह्यनारीपरायणः पटुरयन्त्रितमुखो

बहुभङ्गिविशारदः परमर्मान्वेषणपरः परिहासयिता परिवादरुचिः पैशुन्यपण्डितः सचिवमण्डलादप्युत्कोचहारी सकलदुर्नयोपाध्यायः कामतन्त्रकर्णधारः कुमारसेवको विहारभद्रो नाम स्मितपूर्व्वं व्यज्ञापयत्। देव दैवानुग्रहेण यदि कश्चिद्भाजनं भवति विभूतेस्तमकस्मादुच्चावचैरुपप्रलोभनैः कदर्थयन्तः स्वार्थं साधयन्ति धूर्त्ताः। तथाहि। केचित्प्रेत्य किल लभ्यैरभ्युदयातिशयैराशामुत्पाद्य मुण्डयित्वा शिरो बध्वा दर्भरज्जुभिरजिनेनाच्छाद्य नवनीतेनोपलिप्यानशनञ्च शाययित्वा सर्व्वस्वं स्वीकरिष्यन्ति। तेभ्योऽपि घोरतराः पाषण्डिनः पुत्रदारशरीरजीवितान्यपि मोचयन्ति। यदि कश्चित्पटुजातीयो नास्यै मृगतृष्णिकायै हस्तगतं त्यक्तुमिच्छेत् तमन्ये परिवार्य्याहुः "एकामपि काकिणीं कार्षापणलक्षमापादयेम, शस्त्रादृते सर्व्वशत्रून् घातयेम, एकशरीरमात्रमपि मर्त्यं चक्रवर्त्तिनं विदधीमहि, यद्यस्मदुद्दिष्टेन मार्गेण चर्य्यत" इति। स पुनरिमान् प्रत्याह। "कोऽसौ मार्गः" इति। पुनरिमे ब्रुवते "ननु चतस्रो राजविद्यास्त्रयीवार्त्तान्वीक्षिकीदण्डनीतिरिति, तासु तिस्रस्त्रयीवार्त्तान्वीक्षक्यो महत्यो मन्दफलाश्चतास्तावदासंताम्। अधीष्व तावद्दण्डनीतिमियमिदानीमाचार्य्यविष्णुगुप्तेन मौर्य्यार्थे षड्भिः श्लोकसहस्रैः संक्षिप्ता सैवेयमधीत्य सम्यगनुष्ठीयमाणा यथोक्तकर्म्मक्षमेति। से तथेत्यधीते; शृणोति च; तत्रैव जरां गच्छति। तत्तु किल शास्त्रं शास्त्रान्तरानुबन्धि सर्व्वमेव वाङ्मयमविदित्वा न तत्वतोऽधिगंस्यते। भवतु कालेन बहुनाल्पेन वा तदर्थाधिगतिः। अधिगतशास्त्रेण चादावेव पुत्रदारमपि न विश्वास्यं। आत्मकुक्षेरपि कृते तण्डुलैरियद्भिरियानोदनः सम्पद्यते, इयतश्चौदनस्य पाकायैतावदिन्धनं पर्य्याप्तमिति मानोन्मानपूर्व्वकं दयम्। उत्थितेन राज्ञा क्षालिते मुखे मुष्टिमर्द्धमुष्टिं वाभ्यान्तरीकृत्य कृत्स्नमायव्ययजातमहः प्रथमेऽष्टमे भागे श्रोतव्यम्। शृण्वत एवास्य द्विगुणमपहरन्ति तेऽध्यक्षधूर्त्ताश्चत्वारिंशतं चाणक्योपदिष्टानाहरणोपायान् सहस्राधात्मबुद्धैव ते विकल्पयितारः। द्वितीयेऽन्योन्यं विवदमानानां प्रजानामाक्रो-

शैर्दह्यमानकर्णः कष्टञ्जीवति। तत्रापि प्राड्विवाकादयः स्वेच्छया जयपराजयौ विदधानाः पापेनाकीर्त्त्या च भर्त्तारमात्मनश्चार्थैर्योजयन्ति। तृतीये स्नातुं भोक्तुञ्च लभते। भुक्तस्य च यावदन्धः परिणामस्तावदस्य विषभयं न शाम्यत्येव भुक्त्या। चतुर्थे हिरण्यप्रतिग्रहाय हस्तं प्रसारयन्नेवोत्तिष्ठति। पञ्चमे मन्त्रिचिन्तया महान्तमायासमनुभवति। तत्रापि मन्त्रिणो मध्यस्था इवान्योन्यं मिथःसम्भूय दोषगुणैर्दूतचारवाक्यानि शक्याशक्यतां देशकालकार्य्यावस्थाश्च स्वेच्छया विपरिवर्त्तयन्तः स्वपरमित्रमण्डलान्युपजीवन्ति। वाह्याभ्यन्तरांश्चकोपान् गूढमुत्पाद्य प्रकाशं प्रशमयन्तः स्वस्वामिनमवशमवगृहन्ति। षष्ठे स्वैरविहारे मन्त्रो या सेव्यः। सोऽस्यैतावान् स्वैरविहारकालो यस्य तिस्रस्त्रिपादोत्तरनाडिकाः। सप्तमे च तुरङ्गबलप्रत्यवेक्षणप्रयासः। अष्टमेऽस्य सेनापतिसखस्य विक्रमचिन्ताक्लेशः। पुनरुपास्यैव सन्ध्यां प्रथमे रात्रिविभागे गूढपुरुषा द्रष्टव्यास्तन्मुखेन चातिनृशंसाः शस्त्राग्निरसप्रणिधयोऽनुष्ठेयाः। द्वितीये भोजनानन्तरं श्रोत्रिय इव स्वाध्यायमारभते। तृतीये तूर्य्यघोषेण संविष्टश्चतुर्थपञ्चमो शयीत किल कथमिवास्याजस्रचिन्ताया सविह्वलमनसो वराकस्य निद्रासुखमुपनमेत्। पुनः षष्ठे शास्त्रचिन्ताकार्य्यचिन्तारम्भः। सप्तमे तु मन्त्रग्रहो दूतादिप्रेषणानि च दूताश्च नामोभयत्र प्रियाख्यानलब्धानर्थान् वीतशुल्कबाधवर्त्मनि वणिज्यया वर्द्धयन्तः कार्य्यमविद्यमानमपि लेशेनोत्पाद्यानवरतं भ्रमन्ति। अष्टमे पुरोहितादयोऽभ्येत्यैनमाहुः। "अद्य दृष्टो दुःस्वप्नो दुःस्थिता ग्रहाः शकुनानि चाशुभानि शान्तयः क्रियन्तां सर्व्वमस्तु सौवर्णमेव होमसाधनम्। एवं सति कर्म्म गुणवद् भवति ब्रह्मकल्पा इमे ब्राह्मणाः कृतमेभिः स्वस्त्ययनं कल्याणतरं भवति ते चामी कष्टदारिद्र्य बह्वपत्या यज्वानो वीर्य्यवन्तश्च अद्याप्यप्राप्तप्रतिग्रहा दत्तञ्चैभ्यः स्वर्ग्यमायुष्यमरिष्टनाशनञ्च भवति" इति। बहु बहु दापयित्वा तन्मुखेन स्वयमुपांशु भक्षयन्ति। तदेवमहर्न्निशमविहितसुखलेशमायासबहुलमविरलकदर्थनञ्च

नयतो नयज्ञस्यास्ताञ्चक्रवर्त्तिता स्वमण्डलमात्रमपि दुरारक्षम्भवेत्। शास्त्रज्ञसमाज्ञातो हि यद्ददाति यन्मानयति यत्प्रियम्ब्रवीति तत्सर्व्वमतिसन्धातुमित्यविश्वासोः। अविश्वास्यता हि जन्मभूमिरलक्ष्म्याः, यावता च नयेन विना न लोकयात्रा स लोकत एव सिद्धः न तत्र शास्त्रेणार्थः। स्तनन्धयोऽपि हि तैस्तैरुपायैः स्तनपानं जनन्या लिप्सते। तदपास्यातियन्त्रणामनुभूयन्तां यथेष्टमिन्द्रियसुखानि। येऽप्युपदिशन्ति। एवमिन्द्रियाणि जेतव्यानि। एवमरिषड्वर्गस्त्याज्यः सामादिरुपापवर्गः स्वेषु परेषु चाजस्रं प्रयोज्यः। सन्धिविग्रहचिन्तयैव नेयः कालः स्वल्पोऽपि सुखावकाशो न देय इति। तैरप्येभिर्मन्त्रिवकैर्युष्मतश्चौर्य्यार्जितं धनं दासीगृहेष्वेव भुज्यते। के चैते वराका येऽपि मतिकर्क्कशास्तन्त्रकारा शुक्राङ्गिरसविशालाक्षबाहुदन्तिपुत्रपराशरप्रभृतयस्तैः किमरिषड्वर्गो जितः। कृतं वा तैः शास्त्रानुष्टाानम् तैरपि हि प्रारब्धेषु कार्य्येषु दृष्टे सिद्धसिद्धी। पठन्तश्चापठद्भिरतिसन्धीयमाना बहवः। नन्विदमुपपन्नं देवस्य यदुत सर्व्वलोकवन्द्या जातिरयातयामं वयो दर्शनीयं वपुरपरिमाणा विभूतिस्तत्सर्व्वं सर्व्वाविश्वासहेतुना सुखोपभोगप्रतिबन्धिना बहुमार्ग्गविकल्पनात्सर्व्वकार्य्येष्वमुक्तसंशयेन तन्त्रावायेनैव मा कृथा वृथा सन्ति हि ते दन्तिनां दशसहस्राणि हयानां लक्षत्रयमनन्तपादातमपि। पूर्णान्येव हेमरत्नैः कोषगृहाणि। सर्व्वश्चैषजीवलोकः समयमपि युगसहस्रं भुञ्जानो न ते कोष्ठागाराणि रेचयिष्यन्ति। किमिदमपर्य्याप्तं यदन्यार्ज्जनायासः प्रस्तूयते। जीवितं हि नाम जन्मवतां चतुःपञ्चान्यहानि। तत्रापि भोगयोग्यमल्पाल्पं वयःखण्डम्। अपण्डिताःपुनरर्ज्जयन्त एव ध्वंसन्ते। नार्ज्जितस्य वस्तुनो लवमप्यास्वादयितुर्मीहन्ते। किम्बहुना! राज्यभारं भारक्षमेष्वन्तरङ्गभूतेषु भक्तिमत्सु समर्प्यार्प्सरसः प्रतिरूपाभिरन्तःपुरिकाभीरममाणो गीतसङ्गीतपानगोष्ठीश्च यथर्त्तु बध्नन् यथार्थं कुरु शरीरलाभमिति पञ्चाङ्गीस्पृष्टभूमिरञ्जलिचुम्बितचूडश्चिरमशेत। प्राहसीच्च प्रीतिफुल्ललोचनोऽन्तःपुरप्रमदाजनः। जननाथश्च सस्मितमुत्ति-

ष्ठन्ननु हितोपदेशाद्गुरवो भवन्तः किमिति गुरुत्वविपरीतमनुष्ठितमिति तमुत्थाप्य क्रीडानिर्भरमतिष्ठत्।

अथैतेषु दिनेषु भूयो भूयः प्रस्तुतेऽर्थे प्रेर्य्यमाणो मन्त्रिवृद्धेन वचसाभ्युपेत्य मनसैवाचित्तज्ञ इत्यवज्ञातवान्।

# अवन्तिसुन्दरी कथा

## राजहंसस्य राजधानी

[आसन्नसङ्कीर्णविविक्तवर्णाश्रम ·····र्यपश्या असूर्यंपश्याः सुरपुरन्ध्रयो निरवहन्ति] स्वारम्भगुरुकुटुम्बिवर्गा रङ्गोद्रङ्गसङ्गताद्यङ्गतुङ्गागारशीफराः सरलकाकुसैरिकजनाः सर्वजनीनसर्वजनास्त्वार्य·····वग्रहं निर्भयाः निराधिव्याधिसम्भवाः स्तम्बकरिहरितसरिभतः (?)तामरसविसरसुरभयो नाव्यनदीप्रवाहा यव्ययवक्यषष्टिक्योद्देशपेशलाः शा·····केदारभागा गोधूमीनक्षेत्रकाण्डाः पृथुलतिल्यस्थल्याभोगाः प्रशस्तकौलस्थ (ली ? की) नस्थला महितमाप्यभक्तय उद्धमौ (गी ? दूगी) नोर्वरा मासुरीण [वरभुवः प्रचुरमञ्जीरकपरिय ?]·····तराजमापाः निष्पावनिकरकर्बुरा गैरसर्षपतधीपरिकरा (?) जरठकुसुम्भकुड्मलविजृम्भणारुणप्रदेशाः प्रसुपानप्रसुरकर प्रेटक (?) प्रकटयो [निपोषा गो] जाविमहिषपोषिणो बाप्पच्छेद्यशष्पकवचितविविधवीथयः प्रासादादीयदाकु (?) वर्धनद्रव्यवनराजयो बहुफलेग्रहिद्रुमसमग्रोदग्रामसीमानः सारसकलहंसावतंससरसकविकटतटाकमण्डलाः प्रच्छायसुखप्रपापङ्क्तयः प्रस्निग्धतलसुभगसद्भावकाः प्रत्युदपानप्रक्लृप्ताटहारिणः (?) पुण्याराममालिनो मगधा नाम जनपदाः।

तस्मिन्नामापि नागृह्यत राजद्रोहस्य। वार्त्तापि नावर्त्ततोपद्रवाणाम्। कथापि नाक्रियत कलेः। स्मृतिरपि नाजायत जन्यस्य। चिन्तापि नासीत् तास्कर्यस्य। प्रसङ्गोऽपि नाभवदभिषङ्गाणाम्। तस्मिंश्च पङ्कः पङ्कस्योपकारमात्रको, न हि न ह्यधिकोऽप्यस्ति वधूनां कुचतटेषु कङ्कुमपङ्कः। केवलमाक्रीडा-

चलतलेषूपलाः। कण्टकः कमलनालेष्वेव दृष्टः, आतिष्ठतु पुनरपि दृष्टः प्रियतमानामालिङ्गनेषु। श्रेणिः प्रासादशिखरारोहणेष्वेवासीत्। दुरवधृतमिदमासन्नं च विहरत्सु जलविहङ्गमेषु तेन (?) चान्योन्यसन्निकृष्टधनधान्यशैलकूटसहस्रलङ्घनायासभयादिवाप्रवेशक्षमो दुर्भिक्षकालकलिकश्च कल्याणोद्यतदुन्दुभिध्वनिप्रबन्धविद्रावितः सरभसमहास्यतेव विकस्वरेण कुमुदकोकनदसरस्सहस्रेण। तस्मिंश्च शङ्के कलशोद्भवपानभयादिबोधस्सु धेनूनां लीनः क्षीरसागरः। हरिकुलिशव्यसनशङ्कयेव तिरस्कृत्यात्मानं सुरभवनीभूतानि भूधरकुलानि। राहुमुखविषनिषेकदूषणभियेव सोमेन सुधारसः पुण्ड्रेक्षुषु क्षिप्तः। प्रबलपवनपर्यासत्रासेनेव चापहाय मरुत्पथमवनिलग्नानि तरुषण्डच्छलेन मेघमण्डलानि।

तस्य चैवंविधस्य मण्डनं मगधविषयस्य, मह्याः स्वर्गविजयसाधनं, अपवर्गसुखतिरस्कारकारणं जीवोज्जीवस्य, जाह्नवीपररिभोगरागरोषितेनोर्मिमालिनेव महता खातवलयोपरुद्धम् उत्तुङ्गधवलप्राकारमध्यवर्तितया पौरतरुणसुन्दरीकान्तिभावनाहेतोरिन्दुमण्डलादिवोत्कीर्य क्षिप्तम् अमलमणिभूमिगर्भसंक्रान्तप्रतिबिम्बतया विततमणिमयूखजालपक्षैस्ताक्ष्यैरिव रसातलमुरगोद्धरणहेतोर्विशद्भिर्दारुसारमयैः महाप्रासादैरुपशोभितम्, उदयसमुद्रगाधदर्शनोत्क्षिप्तपुरदेवताभुजलतानुकारिभिः खातवलयपिनद्धैर्मणितोरणैः समुल्लासितम्, उन्मीलदनेकरत्नरागवलयिभिरतिरभसरतिविहारविच्छिन्नैर्लक्ष्मीमेखलागुणैरिव विपणिपथैरुपेतम्, उन्मदहंसमण्डलचलितेन्दी·····राजिभिरुन्मिषत्तारकागणकरालितान्धकारसन्ध्यारागैरम्बरैकदेशैरिव मण्डलीकृतैः मणित(द ? ट)रश्मिजालसन्दिग्धवारिभिः सरोभिरुद्भ्राजमानम्, उपवन·····तबहुविधकुसुमधूलिपाटलपटम् उपरिलग्नमुष्णीषमिव सकलनगराधिपत्यचिह्नमुद्वहद्भिः, ग्रहणोपरिगमनावलेपवारणायेव प्रकङ्कमानोच्छ्रितप [ताकव्यस्तम् अखिलजम्बूद्वीपलक्ष्मील] तैककुसुमं कुसुम-

पुरं नाम समग्रस्त्रीपुरुषरत्नसारसंभूतिसागरायमाणं नगरमभवत्।

अभ्रंलिहभवनसहस्रोपरुद्धगतिरमर्षज्वलित इवो [त्सर्पदरुणमणिप्रभाप्रवाहोपरक्तवपुर]म्बरमध्यस्थितोऽप्यमुक्तशैशवच्छाय इव यत्र लक्ष्यते भगवान् भानुमाली। यस्य च सारगौरवादिव सप्तसागरतरङ्गसङ्घातघोराभिघातायासिता [पि न कदाचन चलति भूतधात्री। (यं च ? यच्च)] निवसता धनपतिसहस्रेणाराधयत्यलकापुरम्, उपहसत्यनष्टात्मभिश्च वसुभिरमरभवनम्, अनन्तैश्च भोगिभिर्भोगवतीम्।

यस्मिंश्च पौरा न मधुपायिनो दानरुचयश्च, न कृशानुगामिनः प्रकटितभूतयश्च, न भङ्गुरभोगवृत्तयो भोगिनश्च, न बहुभाषिणो बृहत्कथाव्यसनिनश्च, न जलाशयाः सेतुबन्धलग्नाश्च, न प्रमदस्पृशः कादम्बरीरसावितृष्णाश्च, न सुरद्विषः काव्यदर्शनाभिरक्ताश्च, न मन्दृष्टयः समन्दाक्षाश्च विश्रुतबहुश्रुताश्च रामायणविदो रामाशुभापातानभिज्ञाश्च, दृष्टमहाभारता भीमगदाभिधातवार्त्तामुग्धाश्च, प्रमाणविदश्छलव्यवहा (र ? रा) पण्डिताश्च सर्वविरोधैकायतनमधिवसन्तो निर्विरोधरमणीयमभ्यस्यमानपुण्यकर्माणः प्रतिवसन्ति।

यत्र च सरसि चित्रायण्यां कात्यायनस्य भगवतो हुताशनस्यात्मजस्याभिषेकहेतोरमरलोकादंशेनावततार मन्दाकिनी। -

## राजहंसस्य वर्णनम्

यस्मिंश्च बस्वाश्चर्ये सप्तच्छदपादपः कामयमानकामिनीकपोलपाण्डुवति मधूकपुष्पम् (?)। पुष्पपुरं च तत् पुष्कर इवानन्तभोगमुत्कृष्टसैन्यवाहनो हरिवाहन इव सुकृतिनां पदं कृतागस्थिरपक्षच्छेदनः, नरवाहन इव पुण्यजनाश्रयं निधीश्वरः, हरिदश्व इव उदयस्था (न मर्च्यमहाप्रभावर्षिपादः, गन्धवह इव धनक्षयमशेषक्षि (त? ति) परागविकारविध्वं(सि? स)नः, हैमवत इव रत्ना-

करमखण्डपक्षः, शेष इव भोगिनिलयमखिललोकधृतिकरः, कुसुमायुध इवोज्ज्वलप्रमदवनमात्मगुणाभिभूतफाल्गुनश्रीः, चक्रवाक इव पद्मालयं मण्डलैकगतिरध्यतिष्ठद् आत्मयशः कुमुदभूषणभुवनसरःक्रीडैकराजहंसो राजहंसो नाम राजा।

यमतिमानुषाकारसम्पदमसह्य (पा? पौ)रुषं च हरनयनहुतवहोष्मानुबन्धसम्भूतप्रतापशमनं पुनर्जातमिव मीनकेतुं मेनिरे प्रजाः। येन च गोवर्धनधरणीधरारणोद्दामदामोदरदर्पदमनायेवारोपितभुवनभारमधरीतकृतमेरुगौरवं भुजभूधरयुगलमनारतं बिभराञ्चक्रे। यश्च नयनाधरकरचरणप्रभाभिरभिनवबन्धुजीवपाटलाभिर्निजवक्षःस्थलनिवासलाभनिर्वृतलक्ष्मीविस्मृतानि कदर्थयाञ्चकारेव कमलकाननानि। यस्य च मत्तमातङ्गकुम्भकूटपाटनेषु सुभटमण्डलपृथुलोरःकवाटभित्तिभेदनेषु वरतुरगबलप्रलयसागरोर्मिव्यावर्त्तनेषु स्यन्दनवृन्दवज्रपञ्जरभञ्जनेषु च व्यापारितः तदायासपिपासित इव समरमण्डलेषु बाहुदण्डो मण्डलाग्रमेचक·····पुञ्जकुञ्चुकितः केतकीमुकुलधूलिधवलमरियशःक्षीरसागरमशेषमाचूचुषत्। यश्च सम्यक्प्रणीयमानवर्णचतुष्टयोऽपि क्षीरसागरप्रलयपू·····यशाः सर्वश्वेतं जगच्चकार। यस्माञ्च सर्वस्वमर्थिनोऽभयमरयः, पराजयमिन्द्रियाणि, कदर्थनां कलिरास्यं सरस्वती, हृदयं मित्रवर्गः, सर्वमेव च शरीरं महा[पुरुषलक्षणानि प्रत्यव]·····दन्धगजघटाभिः कण्टरज्जुकषणखण्डितत्वचो गण्डमदसिन्धुरंहोजर्जरितजटिलमूलसंहतयः स्थूलकरावलूनकवालप्रवालमुण्ड[मूर्द्धानोद्धृतप्रसूनमुकुलपल्ल]·····लझङ्कारमिलितवल्लरीविश्लेषवि षण्णमदविदाहविनोदाभ्रमस्तकघातभग्नस्कन्धमुक्तरटिताः पटुतरपीडोविप [त्ते व्यस्मिंरन्नपि मन्ये काकुत्स्थकपि](?)·····मुद्रवेलावनद्रुमाः। यश्च कै (पद्म? वल) मवनेरेव गोत्वमापाद्य गर्वितो वेनसूनुरिति ऊर्जिताशयः शशिकरशिशिरगुणैर्दिवं पृथिवीं दिशश्च सर्वाः सुरभी च ·····स्वाख्यातिक्रमश्च न वर्णव्यतिकरो नवर्णव्यतिक (रंच? रश्च) न राजाविनयशङ्का नराजाविनयशङ्काश्च नाशनचिन्ता नाशनचिन्ता चाग्नि

प्रजानाम्। यस्मिंश्च·····पाकशासनोऽपि नावग्रहं शशाक कर्तुं किमङ्ग पुनरन्ये।

स च राजा सकलराजमण्डलग्रासराहुजिह्वया संरम्भदज्वलनसंभारधूमलेखया मानमत्तमतङ्गजदानपट्टिकया प्रतिबलरभसाभिपातविहतिवेलावनरेखया रिपुजीवितमधुचूषणभ्रमरमालया भुवनमहानिधानरक्षणभुजङ्गवध्वा युद्धामृतमथनप्रथमकालकूटोद्गमश्यामिकया निजभुजाचलशिखरनिलीनमेघराशिकया वीरकामुकविजयलक्ष्मीसङ्केताभिसरणात्रेयामया यममहिषविषाणभीषणाकारया खड्गरेखया कामदूत्येव चतुस्समुद्रमेखलां सङ्कुलशैलकु (ञ्च? न्त) लां सकलकुसुमसंभार(ह ? भ) रितारण्यधम्मिल्लबन्धाम् अन्तरिक्षनीलांशुकोत्तरीयां विश्वामेव विश्वंभरां प्रसाध्य विश्रान्तःप्रेमवत्सु पितृपैतामहेषु समस्तशास्त्रविस्तारविविक्तबुद्धिषु सकलकलावगाढवैचक्षण्येषु (दृ? दु) ष्टराजलक्ष्मीकरेणुकाविजयनिवारणाङ्कुशेषु दण्डनीतिप्रयोगचतुरेषु महावराहचरणेष्विव पदबन्धविधुरितभुजङ्गलोकेषु तरङ्गमालिष्विव प्रवरगुणरत्नराशिसंभवेषु निसुम्भसूदनबाहुदण्डेष्विव श्रीरत्नहरणकारणभूतभूभृन्मण्डलावलम्बनेष्वैरावतविषाणकाण्डेष्विव गुरुप्रतिमानेषु सुमतिसुमित्रसुश्रुतसुमन्त्राख्येषु मन्त्रिमुख्येष्वासज्य राज्यभारमभिनवयौवनोपदिष्टेन रागवर्त्मना मन्मथप्रतिमकान्तिरन्तःपुरेष्वरमत।

## वसुमत्याः वर्णनम्

आसीच्च तस्य महीपतेः समस्तसीमन्तिनीवर्गदिवतायमाना मालतीकुसुमदामकक्ष्यामप्यतिक्रम्यान्योन्यसदृशसौकुमार्यैरवयवै [रसाधारणमार्दवाभ्यां च·····मानसाभ्यामुपेता तथा सुकुमा·····भ्रुवै] व कार्मुकं, मुखच्छाययैव चन्द्रमसं, श्वासेनैव सुरभिपरिमलं मलयमारुतमवधून्वती, बिम्बाधररागबालातपभीतकुण्डलितान्धकार भारनिभेन स्वभावसुरभिणा नवाभ्रजालेनेव सरत्नमेखलविपुलशिलोच्चयनितम्बचुम्बिना मदनव्यालहस्तिबालहस्तेन पत्यभिसारदुर्दिनमिव

दर्शयन्ती, वदनचन्द्रमण्डलहठावकृष्टपुण्डरीकलक्ष्मीस्मेहानाद्रुकाभ्यां (?) मृणालिकाभ्यामिव शिरीषदामकोमलाभ्यां भुजलताभ्यामुद्भासमाना, सर्वशरीरसंविभक्तशेषाभ्यां सौन्दर्यपुञ्जाभ्यामिव स्थापिताभ्यां हरदग्धमनोभवौद्धत्यसारकोशाभ्यामिव तथाकृतोपयोगाभ्यां धात्रा चन्दनधवलसुधालेपौचित्याभ्यां निवासकुम्भाभ्यामिव रागस्य स्वच्छमानसरसातिरेकपूरिताभ्यामिव गुरुतराभ्यां पयोधराभ्यां भ्राजमाना, गजकुम्भकठोरपीवरकुचातिभारसाधर्म्यविपरमाणुत्वादे(?) ध्रुवमभङ्गुरां बिभ्रती मध्ययष्टिम्, अतिघनाघनाभोगभारखिन्नो [रुदण्ड]स्थिरीक्रियोपयुक्तभूयोवयवत एव तनुतरीभूतने जङ्घाद्वितयेन राजमाना, प्रणयकलहताडितप्रियतमहृदयोज्ज्वलितरागलिप्तयोरिव न [खचन्द्रदशकरश्मिनालीकसहस्रचूषि] तेनाशेषभुवनवारिजवनप्रभासञ्चयेनैव सततमाप्यायमानपाटलिम्नोरमलरागलावण्यच्छलाद [रुणाशोकपादपेभ्यः स्तबकराशीनिव दोहदपूरण] ताडनेषु दातुं संगृह्णतोः मुखकमलामोदनिर्जितवसन्तकरदत्तमिव सर्वपल्लवसौकुमार्यमुद्वहतोश्चरणारविन्दयोर्द्व [न्द्वेन सैन्धूरीरिव दूरभवः (?) कुर्वती, तरङ्गमयी भ्रूपताकयोः], इन्दीवरमयी नयनयुगे, रक्तोत्पलमयी दन्तच्छदे, कुमुदमयी ईषत्स्मितेषु, सौगन्धिकमयी श्वसितेषु, अमृतमयी वचसि, प्रसादमयी मनसि, चक्रवाकमयी पयोधरयोः, [आवर्त्तमयी नाभिरन्ध्रे, पुलिनमयी] नितम्बतटेषु, पुष्करमयी च पादतलयोः, अमरसद्मन इव राजहंसोपभोगायावतीर्णा मन्दाकिनी, लीला (करा? कला) कान्तिरागचातुर्याणि पञ्चैव प[ञ्चभूतस्था]ने प्रतिविधाय निर्मितेव प्रजापतिना, प्रावृडिव धनगम्भीरस्तननाभिरमणीया, शरदिव सरसां कान्तिमुद्वहन्ती, हेमन्तवृत्तिरिव प्रालम्बिनीहारमालिनी, शिशिरश्रीरिव नवनवमालिका, वसन्तवेलेव चारुभुजवल्युल्लासभूषिततनुलता, धर्मसम्पदिव कोमलपाटलाधरा, सर्वर्त्तुसमवृत्तितयेव नन्दनस्वभावा, सर्वावरोधजनप्रधानभूता रतिरिव कन्दर्पकस्य, शचीव शतमखस्य, शैलसुतेव विश्वेश्वरस्य, लक्ष्मीरिव पुष्करेक्षण स्य, बुद्धिरिव धनाधि-

परस्य, देवसेनेव सेनापतेः, गौरिव प्रचेतसो, रोहिणीव बुधभवनस्या-रुन्धतीव शक्तिगुरोरसरुभ्योऽपि वल्लभा देवी वसूमती नाम ।

## वसन्तवर्णनम्

तस्मिंश्च सम्राजि राजीवलोचनया तयान्याभिरप्यविकलकला-शालिनीभिरविरुद्धानेकधर्मार्था (भ्य? द्य)नतिसङ्गमङ्गजसुख-मश्नुवाने कदाचिदभिषेक्तुमिव दिग्जयाय पुष्पजमाजगाम द्रुमलता-धृतैर्मधुनिवहवाहिभिः कुड्मलपुटघटसहस्रैः कुसुमलक्ष्म्याः समयः। मध्ववतारवेगोद्धूतमिव हिमजलं जगाल। दक्षिणामप्युपेक्ष्य दिग्वधूमुपेयुषि पटौ पतङ्गेऽतीवोरुतरमुत्तराशा सौभाग्यमुवा(च ?) ह। दिनकरविरहे समगृहीताया दिशो दीर्घनिश्वास इव मन्दमन्द-मुत्ससर्प तप्यमानपान्थजनो मलयमारुतः। मलयमरुत्प्रेरितेन स्मर-वैश्वानरेणैकभवन इव त्रिभुवने सुरासुरमुनिमनुजमादीप्यमाने तद्दाहप्रतीकारक्षमाणि पयोधरकलशसहस्राणि शरणमेकमचकमत कामिजनः कामिनीसमाजस्य। चित्तोपसृतप्रियोष्ण बाष्पवा-रिपूरप्लुतेषु प्रोषितानां हृदयेषु पाययितुकाम इव कामज्योत्करः प्रकामदीप्तानिषून् चिक्षेप। सहकारतरुतलास्तीर्णकिसलय-शयनशायिनीनां कायम(मान)कामिनीनां कामश(री?)रक्षतेषु क्षारक्षेप इव मर्मसु मधुरसविसरः परभृतनखमुखोद्दलितकुड्मल-गर्भनिर्गलितः पपात। तस्मिंश्च समये रतिसमरविधिविशारद-कुसुमशरशिबिरनीराजनज्वलनज्वालावलीषु च राजपुरन्ध्रि(ज ?) महारजतोत्तरीयांशुकपदीषु सकलजगत्प्लावनोद्वेलरागसागरतर-ङ्गवेणिकासु विकसन्तीषु रक्तकुरबाशोकशल्मलीपलाशवादिभ-द्रडाडिमजपाराजिषु, रमणीचरणनलिनताडिताशोकरोषप्रोत्साहिता-शेषवनसमाहतशशिकरकलाविभ्रमेषु; निरन्तरपतच्छिलीनुखप्रकरज-र्जरितन्यक्षवनविविधवृक्षविग्रहधवळर्क्षपटुबन्धेषु, अन्धकमथनमन्यु-सन्धुक्षितेक्षणाशुशुक्षणिक्षपितहृच्छ्रयोच्चयभस्मभासुरेषु स्मेरेषु करीर-केसरेषु, सितबिन्दुवारबकुलसा[लतिलक] नवमालिकादिषु; ललित-

माधवपीतवाससि मधूकवनस्थलीदिष्टिवृद्धिपिष्टातकप्रकरेस्सुदन्तिकटकिङ्किरातकर्णिकारचम्पकप्रकरेषु (?) स राजः। मत्तवा[रण इव वशामिर्मत्तकाशिनीभिः परिवृतो] मधुमत्तमधुकरकदम्बकान्धकारितक्रोडानिक्रीडावनान्यवगाहत।

## राज्ञःउद्यानवनविहारः

तत्र च मदरक्त(कत ? तम) कामिनीकपोलरागसन्ध्यागमविधुरितसरश्च [क्रवाकमिथुनकानि बध्नत्पानगोष्ठीमण्डलानि] त्रिदिवमेदिनी(म ? मा) नोज्ञकान्तरदिदृक्षया कौतुकादिवाव्यवस्थितगगनानां खेदस्वेदि[वा ? ता]लक्तकरक्तमेघपल्लवानि भ्रान्तकुन्तलभ्र [मितदुर्दिनो·····गीयमानस्ववि] क्रमापदानानि पश्यन् यन्त्रदोलाप्रेङ्खितानीर(?) कोमलकु(सु)मकिसलयोत्तरच्छदासु विलोलपल्लवान्तरप्रविष्टपवनालोलितलतागृहोदरमणिवे[·····तची] नांशुकान्तरीयाणामपि करनखमणिरश्मिसंवलितरत्नमेखलामयूखजालजल्पितदुकूलकर्मणामन्तः पुरसुन्दरीणामारणितरत्नशक्करीतुलाकोटिपारिहार्याङ्गदानि प्रेङ्खोलितहारदीधितिप्रकरकर्पूरचूर्णावमुच्यमानश्रमस्विन्नकुचतटानि मधुरविवाददत्तदन्तच्छदच्छिन्नसन्धिप्रतिसमाधानदत्तसदयलीलाचुम्बनानि गाढालिङ्ग(न)मृदितकण्ठदामप्रतिनिधीकृतप्रियतमेक्षणकुवलयस्रञ्जि मञ्जुविहङ्गभङ्गिरातिप्रपञ्चमूर्च्छिताङ्गजविदाहवेगानि रागसाम्यसमाहितरसोत्कर्षाणि राजवृषो रतानि निर्विशन्नुपवनविषयिणीमृतुविभूतिमनुबभूव।

प्रवृत्तयोश्च विचित्रपुष्पयोश्चैत्रवैशाखयोर्दैत्यराज्यमिव शुचिशुक्रमयं, यमसौराज्यमिव प्रतिदिनमरुणायमानेननकरविरसीक्रियमाणलोकं, रक्षोराज्यमिव परिलघुप्लवङ्गलङ्घ्यमानहीनवाहिनीजलं, किंपुरुषराज्यमिव द्रुमगणगुरूष्मवारणवनोत्सेकरागदृप्तकिंपुरुषं, मन्मथराज्यमिव मरुद्गणभ्रमितपत्रमण्डलोपरुद्धसुरभव (न)मुग्रातपमनुबुभूषुः उत्फुल्लकमलरक्तोत्पलानि प्रदीप्तानीव धर्म-

भयप्रविष्टेन कन्दर्पानलेन, दलशीतलजालिकाजातशीतलजल-तलानि(?) दारुणनिदाघगलितशिशिरकारागृहाणीव मधुकरकुलब-हलकालान्धकारकालोदराणि करतलोदरीभिः सह सरांस्यवजगाहे।

प्रविशन्तीषु च प्रणयिनीषु प्रियसखीष्विव प्रत्युदस्थुः प्रसारितो-र्मिहस्तदत्तगाढकण्ठग्रहा वाप्यः। प्रबलविपक्षविक्षेपवारिदुर्गप्रस्ति-क्षैः प्रसभमिवोदीर्णदण्डैः पुण्डरीकैर्विमुक्तास्तत्प्रतिद्वन्द्विषु मन्दशब्दं सुन्दरीमुखेषु शिलीमुखा निपेतुः। निजमज्जनाभ्युपायव्यसनितस्य पुरुषपातनिष्पघंरगणस्य भोघा भ्रान्तिदिदृक्षवः कटाक्षा जम्बामो (?) गर्भशायिनीनां पक्ष्मलाक्षीणामुदवर्तन्त क्षोभतरलितास्तरुणशफ-रकाः। नृपनितम्बिनीबिम्बाधरचुम्बिनो नाभिजज्ञुरतिचपलधः सरस्त-रङ्गाः अर्धमानमानमानसम् (?) अपितु विलसन्तो विसर्पिणां रागमूहुः। प्रतिमुखस्थितकुवलयकोपादिवातिवामानि भामिनीना-मरज्यन्त लोचनानि। चकोरलोचनाकुचारोहचक्रसम्मर्देऽपि कलुषी-भवद्भिरम्बुभिरौत्पत्तिकत्वं जलत्वमनक्षरमाचचक्षे। गुरूनपि निर-पेक्षो जघान वारिवेगो वरोरूणामुरोरुहभरान्। न हि विवेकः क्षुभि-तस्य। जलमध्ये मौनमाचरन्तो मेखलाकलापाः स्थान एव गुणत्वं समर्थयाम्बभूवुः। अपास्तालक्तकैरपि रागेणैव दशनच्छदकिसलयैर्व्य-जीयन्त रक्तकुवलयवनानि। ह्येषामनेकशो रतिरणप्रणीतोत्थितानां प्रतिस्पर्धिजये सहायकृत्यम् (?)। इत्थं च वर्त्तमानासु वरपवतुणी-र्तीनां वक्रव्यतिकीर्णापि विकीर्णितोर्मिषु करपुटसलिलसेकलीला-भूतालिकासु प्रहेलिकासु (?) महीशोऽपि महावराह इव वहन् वक्षसा वसुमतीं देवीमाकुलाकुलामालोलयन्नप[श्चचाल। चिकुरांसतट-श्चक्रीड] क्रीडासु प्रकीर्णप्लुतनिम्नगाधवस्यास्थलव्यचारपतित - द्रव्यविचयव्यतिकरभेदादष्टमार्गया जलक्रीडया।

### समरसन्नाहः

अथापरेद्युरुदयमारुरुक्षति क्षतजरागपाटले पादपातपरा (ग?) हतक्षुभितगर्जद्वाहिनीपतौ पटुतरकरास्फालनोल्लस····न्यतेजस्तिर-

स्कारिणि रक्तचक्रधारिणि धरणिमृन्मकुटघटितस्पष्टमण्डलाग्रकिरणसंहतौ प्रतिक्षणविजृम्भमाणदुःसहोष्मणि प्रतिपक्षता······द्याधरमप्रस्तुतस्तुतौ सुभट इव रथवराधिरूढे परिवर्तयति कालमात्मगत्यनुसारेण देवे सप्तसप्तौ कृतप्रभातमङ्गलम(ङ्गले ? ङ्गे) प्रौढगर्भभारमन्थेष्व······षु रचितभूषणामुदयगूढचन्द्रमण्डलामिवाल्पाल्पतारकास्फुरणां शरत्प्रदोष(ब ? वे)लां मौलवृद्धवर्षवराधिष्ठितामनुसृतस्थविरहंसबृन्दामिव मन्दाकिनी देवीमुत्सुकप्रिय(जा ? जना)नुवर्तनमुहूर्तलम्बितपरिजनाङ्गनाससम्भ्रमानुयातां पुरस्कृत्य कालदूतैरिव गतिमनिष्टां गमयद्भिर्भर्तुराज्ञाक्षरैः प्रेर्यमाणाः दुःखोपहतमुखत्विषः कृष्यमाणबलावयवा दक्षिणां दिशमभि प्रत्यद्य(?) सकळत्रा अपि त्राणमन्यदलभमाना विन्ध्यगिरिमभ्यवर्तन्त मन्त्रिणः।

## महोत्पाताः

अनन्तरं च सर्वस्यामेवोर्व्यां सर्वक्षत्रपिशुनाः कालरूपा इव चरितुमारभन्त (चो ? घो)ररूपा महोत्पाताः। तथाहि—प्रथममेव स्वभर्तृकालक्षयासत्तित्रासादिवोदकम्पत क्षितिः। अभ्यर्णर (तो ? णो) दयादिव व्यजृम्भन्त द्विगुणमुद्गर्ज(य ?)न्तो वाहिनीपतयः। जङ्गमभूभृच्छिरोभङ्गसौकर्यप्रत्ययोत्पादनायेव केनाप्यभज्यन्त स्थास्नूनामवनिस्फुरितरत्नोपलानि भूभृतां शिरांसि। समरोत्सुकराजलोकसाहाय्यार्थमिवर्तवः सर्व एव स्वाचिह्नलक्ष्याः समन्ततः समं समाजग्मुः। अखिलमिव धरणिपृष्ठमाहवाङ्कणीकुर्वन्तः प्रसभोत्पाटितनिरस्तवृक्षवीरुधः क्षुण्णपाषाणशर्कराः क्षणमपि नोपरे (मू? मुरु)ग्रस्वनाः भ्रमन्तः प्रभञ्जनाः। कालापसर्पा इव कालसर्पाः प्रसर्पन्तः सर्वपार्थिवामाविविशुः शय्यागृहाणि। अटव्या इव दण्डविक्षेपा व्याघ्रादयः पुराण्यरुन्धन्त। राजास्थानेषूदतिष्ठन्नलक्ष्मीपरिवारार्थमिव स्थूलस्थूला रोहितस्त्रियः। प्रवहदधमहाघबुद्बुदानीवोद्भवद्भङ्गुराणि हीनातिरिक्तपाणिपादान्याशिरांसि

(वि?) विकृतघोररूपाणि मानुषेषु तिर्यक्षु च प्रभूतानि भूतान्यभूतये भुवः प्रतिभयानि भूयसा बभूवुः। अभावचिन्ताकातराणामिव करितुरङ्गमाणामनभिनन्दितयवसपल्लवानामाननादगळन्नश्रु-बिन्दवः। सर्वशक्त्यासङ्ख एव ध्वनिमिव शङ्खदुन्दुभिमुखै-र्निग्रहेऽपि स्वशब्दो न व्यसृजत(?)। प्रभूतप्राणिराशिप्रक्षयशुचेव रुरुदुर्देवताप्रतिमाः। पूर्णशशिभ्रान्तराहुशिर इवातपत्रेषु बभ्राम भ्रमरपटलम्। शस्त्रेष्वेभन्ति(?)दर्पादिव दर्पणेष्वपि पतितुं नेषुः पार्थिवानां मुखानि। तेजस्विनमर्कमप्यभिजग्मुश्च्छायात्मानः मानिमां (?)। संप्रहारत्व(र) येव कोशेभ्यः शस्त्राणि स्वयमेव प्रज्वलन्ति निर्जग्मुः। आहूयमानानामारोहणपरिभवसहिष्णुगन्धहस्तिगर्हणा-येव तन्मदो हस्तिनीनां कपोलमाशिश्लेष। अप्रणिपातप्रणुन्नानीव मुहुर्मुहु(र)वर्तन्त प्रतिष्ठासूनां वहनानि। सुदूरमपि गतेष्वेव मनो भाविनी दुशेत्याद्वेगादिवादावेवावन्नातपत्रध्वजपताकादीनि(?)राज-चिह्नानि। अभज्यन्त च रथशकटादयः। कतिपयज (व?)नापराध-कुपितकाळरात्रिप्रभारचितमेखलाप्रवाळमणय इवाश्रुपाताः शङ्ख-देशेष्वलक्ष्यन्त। क्षत्रपि····· काः कुजश्च नानाविधा रोद्धुमिव साहसं विलेगुरङ्गेषु (?)। सदसत्तामार्गदर्शिनामिव गुणविपर्ययः कार्यकाले मन्दतीक्ष्णानां वाजिनामभूत्। पुंगवत्वादिव प्रणदन्तः ककुद्मन्तः प्रतिमुखं बलान्यभ्यद्रवन्त। अप्रग पापेपि ·····सव्यं पक्षिणः प्रदक्षिणं च वनमृगाः परिपतन्तो निर्भयं चावगाहमाना व्यभजन्निव सैन्यान्य-न्योन्यमामिषत्वेन। काकैरपि कालसामर्थ्यमिव·····तद् ध्यानम्ला-ना वाजिकुञ्जरमनुवाजामखुरलेलिख्यमानभूतलानां च वाजिनाम-ङ्गानि अभिनभवभिन्नानीव पुष्पचुम्बिन(?) इवाभ्यलीयन्त····· रभन करकबन्धादीनि घोरतराणि दर्शयद्भिश्च वलयप्रतिलोम-भीमरूक्षगर्जितानाशनिभि(?) रविरळरुधिरमधुवसातैलोपलोरगम-करा····· तटित्पिशङ्गहेमदण्डैश्चण्ड (र ?)मरुद्भिरभ्यर्दितानां सहस्रधैव सेनिकानामधिन्त हृदयानि। माह्या(?)समाजप्रेक्षार्थिदिक्-पालरचितहेममञ्च ·····दह्यमाना दिशाः। क्षत्रक्षोभभयादुद्वसन्तव

(?) जुघूर्णिरे गन्धर्वनगराणि। प्रबुद्धग्रहायेन्द्रप्रेषितानीवेन्द्रायुधानि यामिनीष्वदृश्यन्त। भैरवस्वरविरसविरासिनीनामशिवानां शिवानां प्रत्युत्थीयमाना इवोन्मुखीनां मुखोल्काभिरुत्काबहुदंष्ट्रापाट्यमान-शशलक्ष्मश(शि? श) रुधिरधाराभ्यक्ता इव प्रज्वलन्त्यः प्रदोषेषु पेतुः(?)। प्रनृत्तमृत्युबाहव इव बहुधा धूमकेतवः प्रावृण्वन् दि(व ?) शः। सर्वभूतक्षयदर्शनाक्षमत्वादिव स्वयं सृततारकान्धकारि(का?ता) द्यौरभूत्। तादृशीं दिवमिवानुशोचन् प्रशान्ताङ्गारनिष्प्रभः प्रभाकरो रिपुणा स्वर्भानुनाभ्यसूयत। रामलक्ष्मणाविव मलिनसन्तापिनौ सोमसूर्यो कबन्धेनोग्रं जग्रसाते। तदेवं भौमान्तरिक्षदिव्यैर्महोत्पातैर्वार्यमाणमपि राजमण्डलं मगधमालवेन्द्रयोराज्ञया कालदूत्येवाकृष्यमाणं समाजगामैव समराय।

## दूतदर्शनम्; तत्संभाषणं च

तदा च राजा राजहंसः सज्जभूयिष्ठसैन्यमण्डलो महादर्शनं (ददा ? मा) लवेन्द्रदूतं द्वारप्राप्तं द्वारमुखादुपलेभे। ज्ञातप्रायप्रयोजनस्तमीषदाविद्धमन्युना मनसा मानवेशः प्रवेशयामास।

प्रविश्य चासौ राजानुभावजनितसाध्वसं हृदयमभिनिगृह्णन् ब्राह्मणायनो दक्षिणपाणिमुद्यम्य स्वस्तिशब्दमुच्चैरुच्चारयामास। रिपुवचोहरं च तमग्राम्याभिजा(त्य)सौम्यरूपमनिष्ठुरप्रगल्भदृष्टिसञ्चारमाकृतिप्रत्ययाद(प्र ? प्रा)कृतोऽयमित्यवधार्य (तग ? द) र्भासने सज्जनादनुजग्राह मगधराजः।

आसीनं च तं मुहूर्तविश्रान्तमुपगृह्य निसर्गस्निग्धया दृशा मालवेश्वरस्य क्षेमारोग्यं पप्रच्छ।

दर्शितादरस्तु दूतस्तथेति क्षेमारोग्यकथनानन्तरमनुक्रमेण स्वमागमनप्रयोजनमित्थमाचचक्षे—देव ! देवेन मालवेन्द्रेणास्मि भवत्सकाशं कुशलवार्तापरिज्ञानार्थं प्रहितः। स्निह्यति स राजा निसर्गतोऽत्र निबद्धपक्षरागः। निष्कारणमे(व)वा जन्मान्तरनिरत्ययप्रवृत्त-

कर्मवासनाबलेन वा देहारम्भकभूतभूमसामर्थ्येन वा दर्शनमात्रेणैव क्वचित् कश्चिदारोपयति पेशलं प्रणयम्। अल्पेतरं चाप्रतिसंहारदारुणं द्रोहमितरत्र। सैषा लोकस्थितिः। स्मरति चासौ माहात्म्यनिबन्धस्य निर्व्याजविजृम्भमाणवीर्याहृतहर्षविस्मयस्य वमद्वह्निवर्षभीषणप्रहरणाभिपातव्यतिकरस्य कातरभयासनस्या [ष्ट ? न्या] दृशोदारपुरुषस्वादीयसः सम्प्रहारपरिचयस्य। तानि तानि तत्प्रतिब (न्धा ? द्धा)नि शौर्यत्यागसत्यौर्जित्यसंहितानि कथान्तराणि रसातिरेकेण पुळकितकपोलः सभासु सम्प्रवर्तयन्न तृप्तिमेति। आह चैव मन्मुखेन स(र ? म)क्षमिव स्नेहचक्षुषा पश्यन्निह भगवन्तम्। धन्यं बत मानुष्यकं यत्रासि·····सुभगा बत भगवती भूतधारिणी या त्वया सनाथीकृता। सैव च देवी महाभागा स(हस्र?) मग्रदोषदुष्टायाः सीमन्तिनीसृष्टेस्तीर्थस्नानशुद्धिरिव पाप·····वानल्पतेजा दिशः प्राच्याः समध्युषितवान् नस्य नादा मा जवं जवेन विकालस्रोतस्यद्यापि(?)किञ्चिदेवंभूतं भूतपूर्वम·····तेजस्वी चक्रवर्ती देवस्तिग्मरश्मिर्न भ(वस्वा? वा)निवानेकराजमण्डलक्षपणयोग्यां शक्तिमुद्वहति, नोच्चलितधातुरागरक्तान·····नेकवर्णानन्दमुदीर्णहंसशब्दो विकरोति नक्षत्रकुलानि चानेन तेजसा तिरस्क्रियन्ते। कामं च महाबलः प्रभञ्जनात्मा चाञ्जनाहृदयवल्लभ·····क्रान्ताश्चपुनरनेन बलजवलुलितसकलजलधिवेलावनेनावनेरवनमयता शिरांस्युच्छ्रितानामनेकशश्चक्रवाळम्, अपि तु नित्यं भवानिवापांसुलै·····यथा प्रवर्तितुं कृतप्रतिज्ञः। कृतार्थजन्मनश्च तानवैमि येषां महाहवेष्वत्रभतवः प्रतिव्यूह्य विरतानमिहाभूतसम्भवस्थास्नु स्थितं यशःशरीरम्। परत्र च वीरकळत्रश्लाघाभावनीभिरनघयौवनाभिः सहाप्सरोभिरुत्फुल्लकल्पपादपपारिजातसन्तानकमन्दारासु नन्दनवनभूमिषु मन्दमन्दं मन्दाकिनीतरङ्गवायुभिरायासितबालचामीकरारविन्दसरः शतैरङ्गानि सुरतखेदसुप्तानि संवाहयद्भिरानुगुण्यसन्ध्युक्ष्यमाणकन्दर्पाशुशुक्षणि रममाणानां प्रदक्षिणीभवत्यखण्डकलकल्याणराशिः। मम तु मन्दभाग्यस्य बहुतिथममलप्रहार-

जनितमोहमूर्च्छान्धकारकुपितचेतसो रणाङ्गणतलास्तीर्णकम्बल-शयितस्य शिरसि मदूर्जितप्रतिगर्जिताजेतामर्षेण त्वया स(ह?)रभ-साभिघातखण्डितकरण्डकोच्छलवृत्तलण्डजटिलिताम्बरं रणमनवशे-षक्षत्रियसमक्षं निक्षिपता निस्तीर्णतुङ्गरभरलघुरात्मा कृतः। तश्चाहं हास्यवस्तु निस्तलवृत्तकीर्तिमुक्तावलिमण्डनानां मन-स्विनाम्। सुभरो भारः क्षितेरुपरिलग्न उच्चैःशिरसां, न तु लघीयान् परस्य पादरेणुः। वरणाक्रान्तमस्तकस्य च मनुष्यस्योष्णी-पमिवोत्तमाङ्गाग्रवर्ती दूरमपनीयते जातिधवलं वीरव्रतम्। उत्तंसमधुकरकुलानीव झटित्युत्पतन्ति स्वभावमलीमसातिनी वक्त्र्चानि (?)। कुसुमस्रज इव कोमलावदाता ग्लायन्ति कीर्तयः। वासचूर्णप्रकर इव प्रयत्नरोपितः प्रक्षरति कुलाभिमानः। चूडामणि-रिव स्फुरितरागश्चूर्णीभवत्यहङ्कारः। केशकलाप इव दीर्घका संवर्धितपर्याकुलीभवति प्रभावः। भावाश्च पुनरभावा एवास्य मन्य परम्पराकस्यास्मिन् मूल एव निकृत्य मस्तकेन महीस्पृशा परेण पातिते छिन्नाशेषपरात्वे शाखिनीव कग्रचग्रधारा(?) दारयन्ती हृदयमतिनिष्ठुरा पतति लोकिकानामवज्ञादृष्टिः। अतस्त्वामेकवीरं भूयोऽपि समरप्रवर्तनाय प्रार्थय। यत्रेषाम चालतवीरबाहुपादपवन-नपवनवाहिनी(?)ममावकीर्येत महानवगानराशिः, तदतिभारनामितं वा दुरुद्वहं शिरः। श्रेयानसावेक एव यः शिलीमुखप्रकरपातकवचिता-शोकपुन्नागनागव्यूहेषु सम्पूर्णे काममूलमित्रपरभृतश्रेणिखलाकु-लारण्यके स्फुरत्प्रभासिलतावनादहासभासुरेषु(?) रणवसन्तवासरेषु वीरगोष्ठीविहारशीलः स्थानदत्तदन्तखरतरनखरप्रहारो रागपाटल-मोचनादरः सरभसदष्टदन्तच्छदो रसकण्टकिताङ्गयष्टिर्लीलाय-मानां विजयलक्ष्मीं सकचग्रहं रन्तुमाकर्षति। तद्बधान परि-करम्, उद्दामदर्पनिर्भरभटार्बुदवृहत्कलेबरोर्तवध। तु बन्धस्खलि-तत्वाहिनीबलकीलालवाहिनी(?) कार्तवीर्य इव कर्तुमशूरमुग्राणि च तानि·····वल्लभानि भूयोऽपि प्रभूताम्भः सम्माराध्यातलम्ब दरा-म्भोधरध्वानगम्भीराणि नर्त्यमानदृप्तभटशिखण्डिमण्डलानि कण्ठ-

गर्जितानि तेन छ·····मुखविहारसिन्दूरालिन्दसुन्दरमिन्दीवरपत्र-नीलवर्ण(ला ? या) कालरात्र्येव त्रासयन्त्या जगद्विजृम्भिकाभिर्वि-कटकुटिला भ्रुकुटिरेखा·····द्वयं लेचनयुगळ गळतुहारो(?) भारतसमर इव सम्प्रत्यपि समस्तदृप्तक्षत्रपक्षसं(र?)क्षयेण क्षितेः क्षरितक्षत-जकुल्या·····लेषु रुधिरचन्दना(र ? नु) लिप्तमूर्तयस्त्रिदशवारविला-सिनीसाभिलाषकटाक्षलक्षिता विलसन्तु विक्रमक्रीडया यौधपुरुषाः। प्रतिरोमकूपनिपतितनि ·····जर्जराणि प्रवीरमांसानि परिहृत्य रक्तपा-नमाचरतु प्रनृत्तश्रान्तः पिशाचवर्गः। संवर्ततां च व्यवशान्तदर्पोष्मणा सुभटजीविताहारोपहारेण भगवान् वैवस्यतः। स्वतन्त्रश्च मुमानि मर्महा वीरमुखस्य सुखाशयः कुलोद्यतो मुखं प्रवावन्ति(?)। इत्येष वः समरसम्बन्धिनो यशःशरीरकल्याणकामस्य माळवेश्वरस्य मदान-नार्पितः सन्देश इति।

उपसंहृते वचसि वचाहरेण स्मयमानमुखो महीपतिः प्रतिव्याज-हार—समर्थमिदं समग्रम्। अर्थो हि महात्मनामनुच्छिन्नसन्त-तिर्यशः प्रवाहः। स च विना पुरुषकारादनन्यसायना(न ?) धीनः क्षत्रबन्धाः। लक्ष्मीरपि बाहुदण्डनिर्दयभ्रमितभूभृन्मण्डलेन चाक-र्षणीयेति सुरासुरामृतमथनमार्गेणैवायमर्थो निर्णीतः। परलोकवि-जयद्वारं च राजन्यस्यालभ्यमानमहापशुकृतरुचिराज्यावर्तनोप-बृंहितप्रतापानलो महावीरविजृम्भणातिभीषणः प्रस्तुतशस्त्रव्यति-करो मदकारणकल्पमनामृतायमाणसुरांशसुचिरयमध्वरो(?) मरणा-त्मको विधिचोदितत्वादाहवो नाम। नेदृशमपरमकृपणमस्ति त्रिवर्ग-साधनं यथैतत् प्रथनकर्मसत्र(प ? वि)जयसाधितचतुरन्ताधिप-त्यजीवनं मरणलभ्यस्याभ्युदयस्य बलप्रतीहारः(?)। किं बहुना युद्धं कामसिद्धिमुखानां प्रथमम्। एवं चातिरमणीये कर्मणि प्रवर्तयि-तुकामेन चाना विशालेश्वरेण यत्तत् प्रियतममतिबहुलकथितं तत्पु-नरमृतवायनोपच्छन्दनमिवक्षयामि।

अथवा नैव जनास्याभिजात्यं प्रियादन्यल्लापयितुम्। इच्छं-

श्चास्ममहितैषिणा मानसारेण माळवेष्वेव सन्निपत्याहवशिरसि तत्सन्देशवस्तुनः प्राप्तरूपं प्रतिव्याहरिष्यामि। अथवा पुण्यतमः प्रयोगोद्देशस्तत्रैव नोस्मागतोऽस्तु(?)। कामं च वासरोऽयमननुकूलस्तदपि न कार्याराधनक्षमः। कालक्षेपो मङ्गलतिथिनक्षत्रेष्टत्वं हि लाभविघ्नमवज्जमध्यपतेर्मध्यचित्तकैः(?)। अतोऽद्यैवाभियोगाय सन्नह्यतां सैन्यम्, उद्घुष्यतां प्रयाणाय पटह इत्युपरचिताञ्जलिमुपस्थितं बलाध्यक्षं हर्षनामानमादिदेश। दूतं महत्यार्थपूजया योजयित्वा हृष्टवर्णं यथादिष्टनिवेदनायाग्रे विससर्ज। स्वयं च सन्नहनग्रहणाय विसर्जितराजलोकः सिंहासनादुत्तस्थौ।

उत्थिते च राजन्युदधिरिवोदचलदुत्क्षेपडोलायमानतरळतरङ्गफेननिकरनिर्गमोत्तरीयसमन्तः सामन्तलोकः। सम्भ्रमोत्थितानां चेतरेतरास्फालचालचालभुग्नभुजारत्नकोटयो जगररिवाभ्यर्णाजिकर्मभूरिगर्वः(?)। भूभुजां भुजार्गळागळितगण्डमूलमदरागनिर्मृजानि भैरवरणवार्ताश्रवणविह्वलानि वामांसावसक्तचारुचामराणां वारसुन्दरीणामासन्नचन्द्रमण्डलपराहतप्रभाणि.....नानोपहारकुसुमभक्तिधूसरच्छवयश्चलितजनचरणशताभिघातभग्नपक्षतीनां षट्चरणकदम्बकानां शिञ्जाननितम्बरत्न.....नाधन्यताघ्रातमात्माननिवानुशोचन्तश्चुक्रुशुर्मणिकुट्टिमाः।

नरपतिरपि कुब्जवामनकिरातप्रायपरिजनगणपरिवृतो.....नमालिनी नीललोहित इव कैलासगह्वरमभ्यन्तरमाविशत्।

## वररुचेः कथा

पञ्चवर्षदेशीये च वररुचौ तद्गृहमुपजग्मतुरुभौ परिव्राजकौ। एकस्तयोर्व्यालिरित(रो रुद्रत्तः ? र इन्द्रदत्तः)। तयोस्तु कात्यायनीम्। भगवति! सावधानमाकर्ण्यताम्। अहं परान्तकस्य भार्गवस्य भानुभर्तस्य ना(म्न ? म) पुत्रः। मामेकपुत्र इति मात्रा

ला(भ्य ? ल्य) मानं निगृ(ह्या ? ह्य ना)ध्यापितवान् पिता। परिणीय च ब्राह्मणीं ब्रह्मदां नाम कामोन्मादिनी पादरञ्जनेन (बा? ला)लयति मस्करी कोऽपि भिक्षार्थं प्रविष्टो मनागस्म(प ? य)त। स्मयमानयैव तयोत्थाय प्रणम्य तस्मै भिक्षा दत्ता। सा तु कौतुकान्मया स्मितहेतुं पृष्टा प्रष्टव्यपक्षे तमेव मुनिम(धि ?) तिष्ठिपत्। तत्तु ह्रीवशादशक्यमिति सैव निर्ब(न्धा ? द्धा) कृच्छ्रादभ्यधत्त। मू(ष्टिता ? वेका)हं मुनिनामुना (बन्धि ? वर्धि) ता तीर्थयात्रोन्मुखस्यास्य मात्रा भाण्डं धारितापि विरहविह्वलत्वादज्ञातं प्रविष्टा दृष्ट्वा च तीं·····शिष्य स्नानायारब्धे पर्यक्तवापलोदिरिति शिरश्श्येनमुखे निपत्य पुनरसम्पल्वने पयसि भागीरथाः (?)। तेन च तीर्थमरणेन तया च भगवद्भक्त्या जाततमं·····र्थ्यञ्च भर्तृवाल्लभ्यमस्यामेवमनुपश्यतो मुनेः स्मितमजनिष्ट। तापि जन्मान्तरं स्मरन्त्याः इत्येवं ध्रुवं सत्यं तस्या निर्याणक्रमो यदसौ जादमूर्छया मदय·····स्तु मे संमोहं भगवानथ निर्नीषुः त(त्का ? त्क)लेवरमनुप्रविश्य धर्मोपदेशै(र्व ? र्वि) रञ्जयन्मां प्रव्रज्यां चाग्राहयत्। अनिर्गमात् पुनरक्षराणामास्यादपास्य शास्त्रविस्तर·····ते च तस्मिन्नुन्मनाः क्वचित् परिव्राजकसमाजे नैकशास्त्राणां सव्यसनिनी(?) मूढयोगीत्युपहास्यमानः स्वामिगृहमुद्वेगादुपेत्य धाराममधारयम्। आदिष्टञ्च स्वामिना श्रुतधरमादायोपव(र्ष) भज(स्वे)ति। सोऽयमसुन्दैकसन्ध्य(?)श्चिरेणाद्य दृष्टः। यथा चास्या(दि ? भि)गमस्तदित एव श्रूयतामिति द्वितीयन्निरदिक्षत।

सोऽप्याचचक्षे। काम्पिल्यनाम्नि नगरे गुरोर्गोपालकस्येन्द्रदत्तो नामाहमासं शिष्यः। तस्य विरूपेति विपरीतनामधेया कन्या। तां च गुरुश्चतुर्भिर्वेदैरङ्गैश्च षड्भिर्विनानुपलभ्यामकल्पयत्। सा तु (त ? म)द्रूपोत्पन्नमदनरागा मदन्येन किल परिणये मरणाय स्थिता। अ(स्यो ? स्या)श्चासिताक्ष्या यौवनमयातया(मि ? मृं निर्वि(व ? वि)क्षुः स्वामिगृहे सुब्रह्मण्यं ब्रह्मविद्याहेतोरभ्यधारयम्। आज्ञप्तं च देवेनैनमेतत्सखं पुरस्कृत्य बोधायनापार्श्वमगमत् अनम्भावी

चायमर्थः (?)। भाजनं च दिव्याध्ययनस्यैष दीर्घायुः। अतो विसृज्येतरप्रमदासुलभं स्नेहकातरत्वमिदमस्मासु पुरुषरत्नं निक्षिप्यताम्। कृते चार्थे हस्त एव ते प्रतयर्पयिष्याम इति। सा तु प्रागेवै(व ? न)मर्थं भगवताग्निना प्रतिबोध्य स्थापिता प्रियतनयविरहविह्वलत्वात् परं विषण्णा मुनिप्रयत्नेनात्मना चोत्पादितसमाधिः कथंकथम(प्य)भ्युपागमत्। कृतोपनयनं च तं स्कन्धेनादाय तावुभौ विदर्भेषु कुटुम्बिनं प्र(ति स्थाने ? तस्थाते)। पृ(ष्ठे ? ष्टे) चोपवर्षगृहे प्रहसता महाजनेन त्वसौ भदवर्षभग्नभवनबहिर्भित्तिभावदत्तपटलकः प्रतिश्रयो यथोद्गतगुरोरुपवर्षस्य (?)। चित्रमिदं तेनापि कश्चिदर्थीति निर्दिष्टेन वर्त्मनोपेत्य तत् तृणशरणमुपाध्यायः क्वेति पृष्टयाचार्या(ण्या ? न्या) च सरुदितमुपहास इत्युपक्रुश्यमाने सोंऽसासक्तहलयुगयोक्रः क्षेत्रादुपावर्ततोपवर्षः। प्रत्यभिवादेनानुगृह्याभिवादितवतस्तान् स विद्वान् वत्साः कतमो वः श्रुतधर इति पप्रच्छ। निर्दिष्टे च वररुचौ परं तुतोष। विश्रान्तश्च स तैर्विविक्त एनानभाषत। नगरेऽस्मिन् वर्षोपव(र्षिम्मामि ? र्षावि)ति द्वौ भट्टपुत्रौ। वर्षस्तयोः कृतमतिः। इतरो नातृण्याकर्णः। कदाचिदसौ ज्येष्ठभार्ययान्यजन्मन्यपि मा भूवं मूर्खजायेति मूर्खस्य कस्यचित् कशिपुदानपारणीये मूर्खव्रते निमन्त्रितो भुक्त्वाध्वावनमहतवस्त्रमतुष्टिमान्(?) स्वभार्यया रुदत्य बहुकदर्थितो लज्जापहृतः स्वामिगृहे प्रिय(स्य ? ङ्गनु)प्त्वा या(वान् ? वत्)पाकमुपावसन् पक्वेषु हव्यं देवाय द(मो ? त्वो)पयुयुक्षमाणः केनापि गोवृषभेण भक्षितं त(त्) सस्यमद्राक्षीत्। भूयश्चायमेव क्रमो द्विरावर्तत। तावदस्य लुप्त(स्य ? धृ)ते (स्तुष्टा ? स्तष्ट्वा) टङ्केन रसनामुदस्रस्रुतावास्ये स्वास्येन किमपि देवः प्रक्षिप्तवान्। आज्ञप्तवांश्च न तावदलब्ध एकसन्धे ब्रह्मोद्गारः कार्य इति। सोऽहमुपवर्षः। लब्धश्चायं ब्रह्मदारभरगः(?) किमन्यदारभ्यतामिति। क्रमात् प्रणुत्य दिव्यमव्ययमुञ्जग्नालकृपणैवेकेन(?) कात्यायनो द्वाभ्यां व्यालिस्त्रिभिरिन्दद (त्तः) कृत्स्नं वाङ्मयमध्यगीषत। स तैः समाज्ञा-

पितो गुरुदक्षिणार्थं विज्ञापितो दुहितृदानहेतोरणीयसीं सुवर्णमात्रामाहृतामियेष। (ति ? निः) सुवर्णतया तु सर्वस्याः पृथिव्याः पृथिवीश्वरं महापद्मं सर्व एव समुपतस्थुः। अपूजयच्चैनानन्यांश्च श्रुतमहिम्नो (महा?)महापद्मः। तेष्वेवाह—स्वदुहितरं सदस्यवस्थाप्य लवमात्रमपि हेमं ददत एषा दत्तेति। राज्ञा व्याहृते कोऽपि वटुर्जविन गत्वा कयाचित् कनकमात्रया प्रत्यागत्य कन्यामयाचत।

(दृ?पृ)ष्टश्च तदागत(तं ? तिं) नृपायाचष्ट कन्यालोभान्मया निर्ब(न्ध ? द्ध)या मात्रा चिरं रुदित्वाभिहितम्। उन्मत्त किं न जानासि निधिदर्शी निरुद्धो नृपेणे तत्रैव ते पिता प्रियान् प्राणानत्यजत्। तन्नः करणमात्रस्यापि काञ्चनस्य कः सम्भव इति। प्राणत्यागभीषितया पितुश्चितामस्मानि प्रगाल्य लब्धोऽयं हिरण्यशकल इति श्रुत्वैव नि(स्सपत्नीकृत्वा? स्सुवणीकृता) क्षितिर्मयेति हर्षमूर्च्छयोपक्रान्तासुरासी(त्)। व्याळिशिक्षितयोगस्त्विन्द्रदत्तस्तच्छरीरं प्रविश्य स एव राजा प्रकृतिसे·····गुर्वर्थं सुवर्णकोटिं कात्यायनं प्रत्यग्राहयत्। अनुमितपरमार्थकेनार्यकाख्येन प्रजोपकारहेतोः कल्पितस्वकायस्तेनैव वररुचिमुखेन मन्त्रिवर्गेणाधिष्ठित·····स्थाय तेष्वेव राजान्तःपुरेष्वरमत। विरूपया च स्मरतापक्षपितरूपया यक्षीभूयोपतस्थे। तां तु सुवर्णकोटिं शरपुङ्खप्ररोहाशङ्कितस्वशिष्यो·····तन शिरकपालकन·····प्रयोजनं कोटचेति प्रत्याख्याय कृतकोटिशब्दमलमतोपवर्षः। स तथैव द्रविणराशिर्जगाम (गोवर ? कुबे)रम्। उपस्थितं तु पद्मं निधिपतिरनुव्याहृत (वान्)। य (त्) त्वया ब्रह्मर्षेः कात्यायनस्य कामो न सम्पादिता·····न्यायेनार्जितं धनम्। अतस्त्वं भूयोऽप्यमुष्मिन्नेव नगरे समाप्तेषु सर्वोपपा(द?त)केषु पोतपस्य वणिक्पतेः पुत्रः पद्मोद्भवो नाम भूत्वा वनान्निवृत्तस्य राजराजर्षे रिपुञ्जयस्य कृत्वा धर्मसाचिव्यं प्रतिविसृष्टवसुधारः प्राक्पुरेषु भर्त्रैव सह मर्त्यलोकं त्युक्त्वासिततत्वया चिरमिति ह सुरलोकनिस्पृहेण वस्तव्यम्(?) एष खल्विदानीमष्टाशीतिमब्दानतीत्य निष्ठिते महापद्मे तत्पुत्रा(व ? न) ष्टावप्यलाभिर्दशभि-

र्वत्सरैरेकैकमुद्धृत्यार्याकाप्योवापकोपितेन मनस्विना चाणक्येन मौर्यचन्द्रगुप्तः प्रतिष्ठापितः तस्यास्य मत्से(?) वर्त्स्यति चतुर्विंशतिवर्षाणि मौर्ये लक्ष्मीः। परं पञ्चविंशतिमचिन्त्यबुद्धिसारो बिन्दुसारः कारयिता राज्यम्। पुनरशोकः शोकमुद्धर्ता षट्त्रिंशतं शरदः शरीरिणाम्। (आदेशोनः(?)सुयशाः)समास्सप्त गोप्ता पृथ्वी(म्)। नव दशरथः। अष्टौ समाः (संयुतः)। शालिशूकस्त्रयोदश। द्वे देवशर्मा। दशधन्वा षट्। बृहद्रथस्तु सप्त। पुनः समुद्धृत्य पुष्यमित्रो नाम शुङ्गस्तस्यैव सेनापतिर्ब्राह्मणायनो भर्तृलक्ष्मीरागदुर्मददुर्मन्त्री वीतभयभञ्जनो ज्वलितमौर्यवंशञ्च(?) मूलदेवं युधि निहत्य षट्त्रिंशति समाः स्थास्यति क्षितिम्। अथाष्टाव(नि ? ग्नि) मित्रः। विशाखः सप्त। वसुमित्रो दशा। द्वे पृथुकः। पुलिन्दस्तिस्रः। तिस्र एव योषवसुः। एकां वज्रमित्रः। द्वात्रिंशतं महाभोगः। दश देवभूतिः। तं त्वमात्यः काण्वायनो वसुदेवः समुत्साद्य व्य(स)निनमवनिमब्दा(न्ना ? न्नवा)धिष्ठिता। भूमिमित्रश्चतुर्दश। नारायणःसुमित्रो (द्वादश) ।दश सुवर्मा। तं च वंशं शुङ्गशे(षिश्चो ? षं चो)च्छिद्य सुमुखो नाम प्रभविष्यति वर्षाणि त्रयोदश। अष्टादश तदवरजः कृष्णः। सातकण्टकिः। अष्टाद(श) लम्बोदरः। द्वादशापि(ल)कः। अष्टादशैव मेघस्वातिः। (शात) स्वातिश्च तावदेव। स्कन्दस्वातिः सप्त। मृगेन्द्रसा(त)कण्ठिस्त्रीणि। कुन्तलसातकण्ठिरष्टौ। (वे?ए) कं स्वातिसेनः। षट्त्रिंशतं पुलोमापिः। पञ्चविंशतिं गरिकृष्णः, पञ्च हालः, पञ्च मा(न्तेल्ल ? न्तल)कः, एकविंशतिं पुळिन्दसेनः। (एकं) सुन्दरसातकण्ठिः, अष्टाविंशतिं शिवस्वातिः, एकत्रिंशतं गौतमेयः, रुजा (?) पुलोमापिः, अष्टत्रिंशतं शिवश्रीः। चारि(?) शिवस्कन्दसातकण्ठिः, एकान्नत्रिंशतं यज्ञश्रीः सातकण्ठिः, षट् विजयः, त्रीणि चण्डश्रीसातकण्ठिः, पु(रु ? लो) मापिः सप्त। तदेवं षट्सु पुटिकेषु दशसु (शि ? शै) शुना(गे ? भे)षु नवसु नन्देषु दशसु मौर्येषु दशस्वेव शुङ्गेषु चतुर्षु काण्वायनेष्वेकान्नत्रिंशति चान्ध्रेषु सातवाहनाख्येष्वतिक्रान्तेषु पुनरुत्पन्नेष्वेवापरेषु तद्भृत्येषु सप्त-

स्वान्ध्रेष्वाभीरेषु दशसु गर्भिषु सप्तसु शकेष्वष्टादशसु य(व) नेप्वष्टसु (तहारे ? तुरुष्के)षु चतुर्दशसु मु(कु ?)ण्डेषु त्रयोदशसु (पौते ? मौने)षु चैकादशसु बह(ल)कलिकलङ्कक्षाळनाय नारायणप्रसाद-प्राप्त(स्तानो? सन्ताने) निवृत्याश्रमान्मगधानधितिष्ठति नृपे रिपु-ञ्जये तं तव तनयं महानिधिं निधाय पद्मोद्भवं भविष्यसि भग-वतो (वर्त ? वित्त)भर्तुः पार्श्ववर्ती। सोऽयमायुष्करो मरकतमणिरङ्-गुलीयकनिबद्धो (धा)र्यः। कार्यश्चास्य वारिणि विसर्गो विसृसृक्षुणा क्षेत्रमिति।

(मति) शर्मधर्मपालपद्मोद्भवास्त्रयस्ते श्वशुरस्य मन्त्रि-णः। तेषु मा परिदाय जातमात्रं तातः प्राव्रा(जि ? जीत्)। ततश्च पद्मोद्भवः कुलधर्मानुपालनाय रत्नोद्भवं नाम ज्येष्ठमात्मजं वाणिज्ये नियुज्यापरौ सुताविमौ सुश्रुतसुमन्त्रौ सखित्वे मे समर्प्य समाप्य कर्माणि पारलौकिकानि प्रायासंन्यस्तभृत्यग्रामः स्वदैवतं ध्यात्वा समग्रीबभूव(?)। मतिशर्मा च सुमतिमेनमन्यं च पुत्रं सत्यशर्माणं मम सहायौ सम्पाद्य चिरोपासनासम्प्रीतेन जातवेदसेव महता दाहज्वरेणोपगुह्य स्वर्गमारोप्यत। अपरस्तु(तो ?) धर्मपालः सुतेनामुना सुमित्रेणान्यैश्च म·····रकैरमैव मा सम्बद्धयन्न मम मन्त्रशक्त्यैव च क्षभितं राजमण्डलमशप्युत्पन्नेषु(?)चास्मासु न्यस्य भारमुपसन्नया ज्येष्ठपत्न्या सहोज्झितानि रत्यर्थ·····तायां कनीयस्यामन्तर्वत्न्यां·····सा धर्मपालपत्नी सापि सुतमसूत कामपा-लम्।

# हर्षचरितम्

## बाणस्य वृत्तान्तः

तेषु चैवमुत्पद्यमानेषु, संसरति च संसारे, यात्सु युगेषु, अवतीर्णे कलौ, वहत्सु वत्सरेषु, व्रजत्सु वासरेषु, अतिक्रामति च काले प्रसवपरम्पराभिरनवरतमापतति विकाशिनि वात्स्यायनकुले, क्रमेण कुबेरनामा वैनतेय इव गुरुपक्षपाती द्विजो जन्म लेभे। तस्याभवन्नच्युत ईशानो हरः पाशुपतश्चेति चत्वारो युगारम्भा इव ब्राह्मतेजोजन्यमानप्रजाविस्तारा नारायणबाहुदण्डा इव सच्चक्रनन्दकास्तनयाः । तत्र पाशुपतस्यैक एवाभवद्भूभार इवाचलकुलस्थितिः स्थिरचतुरुदधिगम्भीरोऽर्थपतिरिति नाम्ना समग्राग्रजन्मचक्रचूडामणिर्महात्मा सूनुः । सोऽजनयुद्भृगुं हंसं शुचिं कविं चेत्येकादश रुद्रानिव सोमामृतरसशीकरच्छुरितमुखान्पवित्रान्पुत्रान्। अलभत च चित्रभानुस्तेषां मध्ये राजदेव्यभिधानायां ब्राह्मण्यां बाणमात्मजम्। स बाल एव बलवतो विधेर्वशादुपसंपन्नया व्ययुज्यत जनन्या। जातस्नेहस्तु नितरां पितैवास्य मातृतामकरोत्। अवर्धत च तेनाधिकतरमाधीयमानधृतिर्धाम्नि निजे।

कृतोपनयनादिक्रियाकलापस्य समावृत्तस्य चास्य चतुर्दशवर्षदेशीयस्य पितापि श्रुतिस्मृतिविहितं कृत्वा द्विजजनोचितं निखिलं पुण्यजातं कालेनादशमीरथ एवास्तमगमत् । संस्थिते च पितरि महता शोकेनामीलमनुप्राप्तो दिवानिशं दह्यमानहृदयः कथंकथमपि कतिपयान्दिवसानात्मगृह एवानैषीत्। गते च विरलतां शोके शनैः शनैरविनयनिदानतया स्वातन्त्र्यस्य, कुतूहलबहुलतया च बालभावस्य, धैर्यप्रतिपक्षतया च यौवनारम्भस्य, शैशवोचिता-

न्यनेकानि चापलान्याचरन्नित्वरो बभूव। अभवंश्चास्य सवयसः समानाः सुहृदः सहायाश्च। तथा च। भ्रातरौ पारशवौ चन्द्रसेनामातृषेणौ, भाषाकविरीशानः परं मित्रम्, प्रणयिनौ रुद्रनारायणौ, विद्वांसौ वारबाणवासबाणौ, वर्णकविर्वेणीभारतः प्राकृतकृत्कुलपुत्रो वायुविकारः, बन्दिनावनङ्गबाणसूचीबाणौ, कात्यायनिका चक्रवाकिका, जाङ्गुलिको मयूरकः, ताम्बूलदायकश्चण्डकः, भिषक्पुत्रो मन्दारकः पुस्तकवाचकः सुदृष्टिः, कलादश्चामीकरः, हैरिकः सिन्धुषेणः, लेखको गोविन्दकः, चित्रकृद्वीरवर्मा, पुस्तकृत्कुमारदत्तः मार्दङ्गिको जीमूतः गायनौ सोमिलग्रहादित्यौ, सैरन्ध्री कुरङ्गिका, वांशिकौ मधुकरपारावतौ, गान्धर्वोपाध्यायो दर्दुरकः, संवाहिका केरलिका, लासकयुवा ताण्डविकः, आक्षिक आखण्डलः, कितवो भीमकः, शैलालियुवा शिखण्डकः, नर्तकी हरिणिका, पाराशरी सुमतिः, क्षपणको वीरदेवः, कथको जयसेनः, शैवो वक्रघोणः, मन्त्रसाधकः करालः असुरविवरव्यसनी लोहिताक्षः, धातुवादविहंगमः, दार्दुरिको दामोदरः, ऐन्द्रजालिकश्चकोराक्षः, मस्करी ताम्रचूडकः। स एभिरन्यैश्चानुगम्यमानो बालतया निघ्रतामुपगतो देशान्तरावलोकनकौतुकाक्षिप्तहृदयः सत्स्वपि पितृपितामहोपात्तेषु ब्राह्मणजनोचितेषु विभवेषु सति चाविच्छिन्ने विद्याप्रसङ्गे गृहन्निरगात्। अगाच्च निरवग्रहो ग्रहवानिव नवयौवनेन स्वैरिणा मनसा महतामुपहास्याताम् ।

अथ शनैः शनैरत्युदारव्यवहृतिमनोहृन्ति बृहन्ति राजकुलानि वीक्षमाण; निरवद्यविद्याविद्योतितानि गुरुकुलानि च सेवामानः, महार्हालापगम्भीरगुणवद्गोष्ठीश्चोपतिष्ठमानः, स्वभावगम्भीरधीर्धनानि विदग्धमण्डलानि च गाहमानः, पुनरपि तामेव वैपाश्चितीमात्मवंशोचितां प्रकृतिमभजत्। महतश्च कालात्तमेव भूयो वात्स्यायनवंशाश्रममात्मनो जन्मभुवं ब्राह्मणाधिवासमगमत्। तत्र च चिरदर्शनादभिनवीभूतस्नेहसद्भावैः ससंस्तवप्रकटितज्ञातेयैरा-

प्तैरुत्सवदिवस इवानन्दितागमनो बालमित्रमण्डलमध्यगतो मोक्षसुखमिवान्वभवत्।

तथाभूते च तस्मिन्नत्युग्रे ग्रीष्मसमये कदाचिदस्य स्वगृहावस्थितस्य भुक्तवतोऽपराह्णसमये भ्राता पारशवश्चन्द्रसेननामा प्रविश्याकथयत्—'एष खलु देवस्य चतुः समुद्राधिपतेः सकलराजचक्रचूडामणि श्रेणीशाणकोणकषणनिर्मलीकृतचरणनखमणेः सर्वचक्रवर्तिनां धौरेयस्य महाराजाधिराजपरमेश्वरश्रीहर्षदेवस्य भ्रात्रा कृष्णनाम्नभवतामन्तिकं प्रज्ञाततमो दीर्घाध्वगः प्रहितो द्वारमध्यास्ते'इति। सोऽब्रवीत्, 'आयुष्मन्, अविलम्बितं प्रवेशयैनम्' इति।

अथ तेनानीयमानम्, अतिदूरगमनगुरुजडजङ्घकाण्डम्, कार्दमिकचेलचीरिकानियमितोश्चण्डचण्डातकम्, पृष्ठप्रेङ्खत्पटच्चरकर्पटघटितगलग्रन्थिम् अतिनिबिडसूत्रबन्धनिम्नितान्तरालकृतलेखव्यवच्छेदया लेखमालिकया परिकलितमूर्धानम्, प्रविशन्तं लेखहारकमद्राक्षीत्। अप्राक्षीच्च दूरादेव—'भ्रद्र, भद्रमशेषभुवननिष्कारणबन्धोस्तत्रभवतः कृष्णस्य ?' इति। स 'भद्रम्' इत्युक्त्वा प्रणम्य नातिदूरे समुपाविशत्। विश्रान्तश्चाब्रवीत्—'एष खलु स्वामिना माननीयस्य लेखः प्रहितः' इति विमुच्यार्पयत। बाणस्तु सादरं गृहीत्वा स्वयमेवावाचयत्—'मेखलकात्संदिष्टमवाधार्य फलप्रतिबन्धी धीमता परिहरणीयः कालातिपात इत्येतावदत्रार्थजातम्। इतरद्वार्तासंवादनमात्रकम्।'अवधृतलेखार्थश्च समुत्सारितपरिजनः संदेशं पृष्टवान्। मेखलकस्त्ववादीत्-'एवमाह मेधाविनं स्वामी—जानात्येव मान्यो यथैकगोत्रता वा, समानज्ञनता वा, समानजातिता वा, सहसंवर्धनं चा, एकदेशनिवासो वा दर्शनाभ्यासो वा परस्परानुराग, श्रवणं वा, परोक्षोपकारकरणं वा, समानशीलता वा, स्नेहस्य हेतवः। त्वयि तु विना कारणेनादृष्टेपि प्रत्यासन्ने बन्धाविव बद्धपक्षपातं किमपि स्निह्यति मे हृदयं दूरस्थेऽपीन्दोरिव कुमुदाकरे। यतो भवन्तमन्तरेणान्यथा चान्यथा

चायं चक्रवर्ती दुर्जनैर्ग्राहित आसीत्। न च तत्तथा। न सन्त्येव ते येषां सतामपि सतां न विद्यन्ते मित्रोदासीनशत्रवः। शिशुचापलापराचीनचेतोवृत्तितया च भवतः केनचिदसहिष्णुना यत्किंचिदसदृशमुदीरितम्। इतरो लोकस्तथैव तद्गृह्णाति वक्ति च। सलिलानीव गतानुगतिकानि लोलानि खलु भवन्त्यविवेकिनां मनांसि। बहुमुखश्रवणनिश्चलीकृतनिश्चयश्च किं करोतु पृथिवीपतिः। तत्त्वान्वेषिभिश्चास्माभिर्दूरस्थितोऽपि प्रत्यक्षीकृतोसि। विज्ञप्तश्चक्रवर्ती त्वदर्थम्—यथा प्रायेण प्रथमे वयसि सर्वस्यैव चापलैः शैशवमाराधीति। तथेति च स्वामिना प्रतिपन्नम्। अतो भवता राजकुलमकृतकालक्षेपमागन्तव्यम्। अवकेशीवादृष्टपरमेश्वरो बन्धुमध्यमधिवसन्नपि न मे बहुतमः। न च सेवावैषम्यविषादिना परमेश्वरोपसर्पणभीरुणा वा भवता भवितव्यम्। यतो यद्यपि—

स्वेच्छोपजातविषयोऽपि न याति वक्तुं
देहीति मार्गणशतैश्च ददाति दुःखम् ।
मोहात्समाक्षिपति जीवनमप्यकाण्डे
कष्टं मनोभव इवेश्वरदुर्विदग्धः ।।३।।

तथाप्यन्ये ते भूपतयः, अन्य एवायम्। न्यक्कृतनृगनलनिषधनहुषाम्बरीषदशरथदिलीपनाभागभरतभगीरथययातिरमृतमयः स्वामी। नास्याहंकारकालकूटविषदिग्धदुष्टा दृष्टयः, न गर्वगरगुरुगलग्रहगदगद्गदा गिरः, नातिस्मयोष्मापस्मारविस्मृतस्थैर्याणि स्थानकानि, नोद्दामदर्पदाहज्वरवेगविक्लवा विकाराः, नाभिमानमहासंनिपरतनिर्मिताङ्गभङ्गानि गतानि, न मदार्दितवीक्रीकृतौष्ठनूष्ठ्यूतनिष्ठुराक्षराणि जल्पितानि। तथा च—अस्य विमलेषु साधुषु रत्नबुद्धिः, न शिलाशकलेषु। मुक्ताधवलेषु गुणेषु प्रसाधनाधीः, नाभरणभारेषु। दानवत्सु कर्मसु साधनश्रद्धा, न करिकीटेषु। सर्वाग्रेसरे यशसि महाप्रीतिः, न जीवितजरत्तृणे। गृहीतकरास्वाशासु प्रसाधना-

सुभटखड्गमण्डलोत्पलवनविभ्रमभ्रमरी लक्ष्मीः क्षीरसागरात्पारिजातपल्लवेभ्यो रागमिन्दुशकलादेकान्तवक्रतामुच्चैः श्रवसश्चञ्चलतां कालकूटान्मोहनशक्तिं मदिराया मंद कौस्तुभमणेरतिनैष्ठुर्यामित्येतानि सहवासपरिचयवशाद्विरहविनोदचिह्नानि गृहीत्वैवोद्गता। नह्येवंविधमपरमपरिचितमिह जगति किंचिदस्ति यथेयमनार्या। लब्धापि खलुदुःखेन परिपाल्यते। दृढगुणपाशसंदाननिस्पन्दीकृतापि नश्यति। उद्दामदर्पभटसहस्रोल्लासितासिलतापञ्जरविधृताप्यपक्रामति। मदजलदुर्दिनान्धकारगजघटितघनघटापरिपालितापि प्रपलायते। न परिचयं रक्षति। नाभिजनमीक्षते। न रूपमालोकयते। न कुलक्रममनुवर्तते। न शीलं पश्यति। न वैदग्ध्यं गणयति। न श्रुतमाकर्णयति। न धर्ममनुरुध्यते। न त्यागमाद्रियते। न विशेषज्ञतां विचारयति। नाचारं पालयति। न सत्यमनुबुध्यते। न लक्षणं प्रमाणीकरोति। गन्धर्वनगरलेखेव पश्यत एव नश्यति। अद्याप्यारूढमन्दरपरिवर्तावर्तभ्रान्तिजनितसंस्कारेव परिभ्रमति। कमलिनीसंचरणव्यतिकरलग्ननलिननाकण्टकेव न क्वचिन्निर्भरमाबध्नाति पदम्। अतिप्रयत्नविधृतापि परमेश्वरगृहेषु विविधगन्धगजगण्डमधुपानमत्तेव परिस्खलति। पारुष्यमिवोपशिक्षितुमसिधारासु निवसति। विश्वरूपत्वमिव ग्रहीतुमाश्रिता नारायणमूर्तिम्। अप्रत्ययबहुला च दिवसान्तकमलमिव समुपचितमूलदण्डकोशमण्डलमपि मुञ्चति भूभुजम्। लतेव विटपकानध्यारोहति। गङ्गेव वसुजनन्यपि तरंगबुद्बुदचञ्चला। दिवसकरगतिरिव प्रकटितविधिसंक्रान्तिः। पातालगुहेव तमोबहुला। हिडिम्बेव भीमसाहसैकहार्यहृदया। प्रावृडिवाचिरद्युतिकारिणी। दुष्टपिशाचीव दर्शितानेकपुरुषोच्छ्राया। स्वल्पसत्त्वमुन्मत्तीकरोति। सरस्वतीपरिगृहीतमीर्ष्ययेव नालिङ्गति जनम्। गुणवन्तमपवित्रमिव न स्पृशति। उदारसत्त्वममङ्गलमिव न बहु मन्यते। सुजनमनिमित्तमिव न पश्यति। अभिजातमहिमिव लङ्घयति। शूरंकण्टकमिव परिहरति। दातारं दुःस्वप्नमिव न स्मरति। विनीतं पातकिनमिव नोपर्सपति। मनस्विनमुन्मत्तमिवोपह-

सति। परस्परविरुद्धं चेन्द्रजालमिव दर्शयन्ती प्रकटयति जगति निजं चरितम्। तथाहि। सततमुष्माणमारोपयन्त्यपि जाड्यमुपजनयति। उन्नतिमादधानापि नीचस्वभावतामाविष्करोति। तोयराशिसंभवापि तृष्णां संवर्धयति। ईश्वरतां दधानाप्यशिवप्रकृतित्वमातनोति। बलोपचयमाहरन्त्यपि लघिमानमापादयति। अमृतसहोदरापि कटुकविपाका। विग्रहवत्यप्यप्रत्यक्षदर्शना। पुरुषोत्तमरतापि खलजनप्रिया। रेणुमयीव स्वच्छमपि कलुषीकरोति।

यथा यथा चेयं चपला दीप्यते तथा तथा दीपशिखेव कज्जलमलिनमेव कर्म केवलमुद्वमति। तथाहीयं संवर्धनवारिधारा तृष्णाविषवल्लीनां व्याधगीतिरिन्द्रियामृगाणां परामर्षधूमलेखा सच्चरितचित्राणां विभ्रमशय्या मोहदीर्घनिद्राणां निवासजीर्णवलभी धनमदपिशाचिकानां तिमिरोद्गतिः शास्त्रदृष्टीनां पुरःपताका सर्वविनयानामुत्पत्तिनिम्नगा क्रोधावेगग्राहाणामापानभूमिर्विषयमधूनां संगीतशाला भ्रूविकारनाट्यानामावासदरी दोषाशीविषाणामुत्सारणवेत्रलता सत्पुरुषव्याहाराणामकालप्रावृड्गुणकलहंसकानां विसर्पणभूमिर्लोकापवादविस्फोटकानां प्रस्तावना कपटनाटकस्य कदलिका कामकरिणो वध्यशाला साधुभावस्य राहुजिह्वा धर्मेन्दुमण्डलस्य।

न हि तं पश्यामि यो ह्यपरिचितयानया न निर्भरमुपगूढो यो वा न विप्रलब्धः। नियमियामालेख्यगतापि चलति पुस्तकमय्यपीन्द्रजालमाचरत्युत्कीर्णापि विप्रलभते श्रुताप्यभिसंधत्ते चिन्तितापि वञ्चयति। एवंविधयापि चानया दुराचरया कथमपि दैववशेन परिगृहीता विक्लवा भवन्ति राजानः। सर्वाविनयाधिष्ठानतां च गच्छन्ति। तथाहि। अभिषेकसमय एवैषां मङ्गलाकलशजलैरिव प्रक्षाल्यते दाक्षिण्यम्। अग्निकार्यधूमेनेव मलिनीभवति हृदयम्। पुरोहितकुशाग्रसंमार्जनीभिरिवापनीयते क्षान्तिः। उष्णीषपट्टबन्धेनेवाच्छाद्यते जरागमनस्मरणम्। आतपत्रमण्डलेनेवापवार्यते परलोकदर्शनम्। चामरपवनैरिवापह्रियते सत्यवादिता। वेत्रदण्डैरि-

वोत्सार्यन्ते गुणाः। जयशब्दकलकलैरिव तिरस्क्रियन्ते साधुवादाः। ध्वजपटपल्लवैरिव परामृष्यते यशः। तथाहि। केचिच्छ्रमवशशिथिलशकुनिगलपुटचपलाभिः खद्योतोन्मेषमुहूर्तमनोहराभिर्मनस्विजनगर्हिताभिः संपद्भिः प्रलोभ्यमाना धनलवलाभावलेपविस्मृतजन्मानोनेकदोषोपचितेन दुष्टासृजेव रागावेशेन बाध्यमाना विविधविषयग्रासलालसैः पञ्चभिरप्यनेकसहस्रसंख्यैरिवेन्द्रियैरायास्यमानाः प्रकृतिचञ्चलतया लब्धप्रसरेणैकेनापि शतसहस्रताभिवोपगतेन मनसाकुलीक्रियमाणा विह्वलतामुपयान्ति। ग्रहैरिव गृह्यन्ते। भूतैरिवाभिभूयन्ते। मन्त्रैरिवावेश्यन्ते। सत्त्वैरिवावष्टभ्यन्ते। वायुनेव विडम्ब्यन्ते। पिशाचैरिव ग्रस्यन्ते। मदनशरैर्मर्माभिहता इव मुखभङ्गसहस्राणि कुर्वते। घनोष्मणा पच्यमाना इव विचेष्टन्ते। गाढप्रहाराहता इवाङ्गानि न धारयन्ति। कुलीरा इव तिर्यक्परिभ्रमन्ति। अधर्मभग्नगतयः पङ्गव इव परेण संचार्यन्ते। मृषावादविपाकसंजातमुखरोगा इवातिकृच्छ्रेण जल्पन्ति। सप्तच्छदतरव इव कुसुमरजोविकारैरासन्नवर्तिनां शिरःशूलमुत्पादयन्ति। आसन्नमृत्यव इव बन्धुजनमपि नाभिजानन्ति। उत्कुपितलोचना इव तेजस्विनो नेक्षन्ते। कालदष्टा इव महामन्त्रैरपि न प्रतिबुध्यन्ते। जातुषाभरणानीव सोष्माणं न सहन्ते। दुष्टवारणा इव महामानस्तम्भनिश्चलीकृता न गृह्णन्त्युपदेशम्। तृष्णाविषमूर्च्छिताः कनकमयमिव सर्वं पश्यन्ति। इषव इव पानवर्धिततैक्ष्ण्याः परप्रेरिता विनाशयन्ति। दूरस्थिरतान्यपि फलानीव दण्डविक्षेपैर्महाकुलानि शातयन्ति। अकालकुसुमप्रसवा इव मनोहराकृतयोपि लोकविनाशहेतवः। श्मशानाग्नय इवातिरौद्रभूतयः। तैमिरिका इवादूरदर्शिनः। उपसृष्टा इव क्षुद्राधिष्ठितभवनाः। श्रूयमाणा अपि प्रेतपटहा इवोद्वेजयन्ति। चिन्त्यमाना अपि महापातकाध्यवसाया इवोपद्रवमुपजनयन्ति। अनुदिवसमापूर्यमाणाः पापेनेवाध्मातमूर्तयो भवन्ति। तदवस्थाश्च व्यसनशतशरव्यतामुपगता वल्मीकतृणाग्रावस्थिता जलबिन्दव इव पतितमप्यात्मानं नावगच्छन्ति।

अपरे तु स्वार्थनिष्पादनपरैर्धनपिशितग्रासगृध्रैरास्थाननलिनीबकैर्द्यूतं विनोद इति, परदाराभिगमनं वैदग्ध्यमिति, मृगया श्रम इति, पानं विलास इति, प्रमत्तता शौर्यमिति, स्वदारपरित्यागोव्यसनितेति, गुरुवचनावधीरणमपरप्रणेयत्वमिति, अजितभृत्यता सुखोपसेव्यत्वमिति, नृत्यगीतवाद्यवेश्याभिसक्ती रसिकतेति, महापराधावकर्णनं महानुभावतेति, परिभवसहत्वं क्षमेति,स्वच्छन्दता प्रभुत्वमिति, देवावमाननं महासत्त्वतेति, बन्दिजनख्यातिर्यश इति, तरलतोत्साह इत्यविशेषज्ञातापक्षपातित्वमिति, दोषानपि गुणपक्षमध्यारोपयद्भिरन्तः स्वयमपि विसद्भिः प्रतारणकुशलैर्धूर्तैरमानुषोचिताभिः स्तुतिभिः प्रतार्यमाणा वित्तमदमत्तचित्ता निश्चेतनतया तथैवेत्यात्मन्यारोपितालीकाभिमाना मर्त्यधर्माणोपि दिव्यांशावतीर्णमिव सदैवतमिवातिमानुषमात्मानमुत्प्रेक्षमाणाः प्रारब्धदिव्योचितचेष्टानुभावाः सर्वजनस्योपाहास्यतामुपयान्ति। आत्माबिडम्बनां चानुजीविना जनेन क्रियमाणामभिनन्दन्ति। मनसा देवताध्यारोपणप्रतारणादसद्भूतसंभावनोपहताश्चान्तः प्रविष्टापरभुजद्वयमिवात्मबाहुयुगलं संभावयन्ति। त्वगन्तरिततृतीयलोचनं स्वललाटमाशङ्कन्ते। दर्शनप्रदानमप्यनुग्रहं गणयन्ति। दृष्टिपातमप्युपकारपक्षे स्थापयन्ति। संभाषणमपि संविभागमध्ये कुर्वन्ति। आज्ञामपि वरप्रदानं मन्यन्ते। स्पर्शमपि पावनमाकलयन्ति। मिथ्यामाहात्म्यगर्वनिर्भराश्च न प्रणमन्ति देवताभ्यः। न पूजयन्ति द्विजातीन्। न मानयन्ति मान्यान्। नार्चयन्त्यर्चनीयान्। नाभिवादयन्त्यभिवादनार्हान्। नाभ्युत्तिष्ठन्ति गुरून्। अनर्थकायासान्तरितविषयोपभोगसुखमित्युपहसन्ति विद्वज्जनम्। जरावैक्लव्यप्रलपितामिति पश्यन्ति वृद्धजनोपदेशम्। आत्मप्रज्ञापरिभव इत्यसूयन्ति सचिवोपदेशाय। कुप्यन्ति हितवादिने। सर्वथा तमभिनदन्ति तमालपन्ति तं पार्श्वे कुर्वन्ति तं संवर्धयन्ति तेन सह सुखमवतिष्ठन्ते

तस्मैददति तं मित्रतामुपनयन्ति तस्य वचनं शृण्वन्ति तत्र वर्षन्ति तं बहु मन्यन्ते तमाप्ततामापादयन्ति योहर्निशमनवरतमुपरचिताञ्जलिरधिदैवतमिव विगतान्यकर्तव्यः स्तौति यो वा माहात्म्यमुद्भावयति।

किं वा तेषां सांप्रतं येषामतिनृशंसप्रायोपदेशनिर्घृणं कौटिल्यशास्त्रं प्रमाणमभिचारक्रियाक्रूरैकप्रकृतयः पुरोधसो गुरवः पराभिसंधानपरा मन्त्रिण उपदेष्टारो नरपतिसहस्रभुक्तोज्झितायां लक्ष्म्यामासक्तिर्मारणात्मकेषु शास्त्रेष्वभियोगः सहजप्रेमार्द्रहृदयानुरक्ता भ्रातर उच्छेद्याः।

तदेवंप्रायेतिकुटिलकष्टचेष्टासहस्रदारुणे राज्यतन्त्रेस्मिन्महामोहकारिणि च यौवने कुमार तथा प्रयतेथा यथा नोपहस्यसे जनैर्न निन्द्यसे साधुभिर्न धिक्क्रियसे गुरुभिर्नोपालभ्यसे सुहृद्भिर्न शोच्यसे विद्वद्भिः। यथा च न प्रहस्यसे विटैर्न प्रतार्यसे कुशलैर्नास्वाद्यसे भुजंगैर्नावलुप्यसे सेवकवृकैर्न वञ्च्यसे धूर्तैर्न प्रलोभ्यसे वनिताभिर्न विडम्ब्यसे लक्ष्म्या न नर्त्यसे मदेन नोन्मत्तीक्रियसे मदनेन नाक्षिप्यसे विषयैर्न विकृष्यसे रागेण नापह्रियसे सुखेन। कामं भवान्प्रकृत्यैव धीरः। पित्रा च महतो प्रयत्नेन समारोपितसंस्कारः। तरलहृदयमप्रतिबुद्धं च मदयन्ति धनानि। तथापि भवद्गुणसंतोषो मामेवं मुखरीकृतवान्। इदमेव च पुनः पुनरभिधीयसे। विद्वांसमपि सचेतनमपि महासत्त्वमप्यभिजातमपि धीरमपि प्रयत्नवन्तमपि पुरुषमियं दुर्विनीता खलीकरोति लक्ष्मीरिति। सर्वथा कल्याणैः पित्रा क्रियमाणमनुभवतु भवान्यौवराज्याभिषेकमङ्गलम्। कुलक्रमागतामुद्वह पूर्वपुरुषैरूढां धुरम्। अवनमय द्विषतां शिरांसि। उन्नमय बन्धुवर्गम्। अभिषेकानन्तरं च प्रारब्धदिग्विजयः परिभ्रमन्विजितामपि तव पित्रा सप्तद्वीपभूषणां पुनर्विजयस्व वसुंधराम्। अयं च ते कालः प्रतापमारोपयितुम्। आरूढ प्रतापो हि राजा त्रैलोक्यदर्शीव सिद्धादेशोभवति''इत्येतावदभिधायोपशशाम।

## कादम्बरी भवनवर्णनम्

तस्य चैवंविधस्य किंचिदभ्यन्तरमतिक्रम्येतश्चेतश्च परिभ्रमतः कादम्बरीप्रत्यासन्नस्य परिजनस्य शुश्राव तांस्तानतिमनोहरानालापान्। तथा हि। 'लवलिके, कल्पय केतकीधूलिभिर्लवलीलतालवालमण्डलानि। सागरिके, गन्धोदककनकदीर्घिकासु विकिर रत्नवालुकाम्। मृणालिके, कृत्रिमकमलिनीषु कुङ्कुमरेणुमुष्टिमिश्छुरय यन्त्रचक्रवाकमिथुनानि। मकरिके, कर्पूरपल्लवरसेनाधिवासय गन्धपात्राणि। रजनिके, तमालवीथिकान्धकारेषु निधेहि मणिप्रदीपान्। कुमुदिके, स्थगय शकुनिकुलरक्षणाय मुक्ताजालैर्दाडिमीफलानि। निपुणिके, लिख मणिशालभञ्जिकास्तनेषु कुङ्कुमरसपत्रभङ्गान्। उत्पलिके, परामृश कनकसंमार्जनीभिः कदलीगृहमरकतवेदिकाम्। केसरिके, सिञ्च मदिरारसेन बकुलकुसुममालागृहाणि। मालतिके, पाटलय सिन्दूररेणुना कामदेवगृहदन्तवलभिकाम्। नलिनिके, पायय कमलमधुरसं भवनकलहंसान्। कदलिके, नय धारागृहं गृहमयूरान्। कमलिनिके, प्रयच्छ चक्रवाकशावकेभ्यो मृणालक्षीररसम्। चूतलतिके, देहि पञ्जरपुंस्कोकिलेभ्यश्चूतकलिकाङ्कुराहारम्। पल्लविके, भोजय मरिचाग्रपल्लवदलानि भवनहारीतान्। लवङ्गिके, विक्षिप चकोरपञ्जरेषु पिप्पलीतण्डुलशकलानि। मधुकरिके, विरचय कुसुमाभरणकानि। मयूरिके, संगीतशालायां विसर्जय किंनरमिथुनानि। कदलिके, समारोहय क्रीडापर्वतशिखरं जीवंजीवमिथुनानि। हरिणिके, देहि पञ्जरशुकसारिकाणामुपदेशम्।

इत्येतान्यन्यानि च परिहारजल्पितान्यश्रौषीत्। तथा हि। 'चामरिके, मिथ्या मुग्धतां प्रकटयन्ती कमभिसंघातुमिच्छसि अयि यौवनविलासैरुन्मत्तीकृते, विज्ञातासि या त्वं स्तनकलशभारावनम्यमानमूर्तिर्मणिस्तम्भमयूरानवलम्बसे। परिहासकाङ्क्षिणि, रत्नभित्तिपतितमात्मप्रतिबिम्बमालपसि। पवनहृतोत्तरीयांशुके, हारप्रभा-

मायासितकरतला संकलयसि। मणिकुट्टिमेपूपहारकमलस्खलनभीते, निजमुखप्रतिबिम्बकानि परिहरसि। जालवातायनपतितपद्मरागालोकं प्रति बालातपशङ्कया करतलमातपत्रीकरोषि। खेदस्रस्तहस्तगलितचामरे, नखमणिमयूखकलापमाधुनोषि। इत्येतान्यन्यानि च शृण्वन्नेव कादम्बरीभवनसमीपमुपययौ।

पुलिनायमानमुपवनलतागलितकुसुमरेणुपटलैः, दुर्दिनायमानमनिभृतपरभृतनखक्षताङ्गनसहकारफलरसवर्षैः, नीहारायमाणमनिलविप्रकीर्णैर्बकुलसेकसीधुधाराधूलिभिः, काञ्चनद्वीपायमानं चम्पकदलोपहारैः, नीलाशोकवनायमानं कुसुमप्रकरपतितमधुकरवृन्दान्धकारैः तथा च संचरतः स्त्रीजनस्य रागसागरायमाणं चरणालक्तकरसविसरैः, अमृतोत्पत्तिदिवसायमानमङ्गरागामोदैः, चन्द्रलोकायमानं दन्तपत्रमण्डलैः, प्रियङ्गुवनायमानं रोचनातिलकभक्तिभिः, नीलायमानं कृष्णागुरुपत्रभङ्गैः, लोहितायमानं कर्णपूराशोकपल्लवैः, धवलायमानं चन्दनरसविलेपनैः, हरितायमानं शिरीषकुसुमाभरणैः, अथ सेवार्थमागतेनोभयत ऊर्ध्वस्थितेन स्त्रीजनेन प्राकारेणेव लावण्यमयेन कृतदीर्घरथ्यामुखाकारं मार्गमद्राक्षीत्। तेन चान्तर्निपतितमाभरणकिरणालोकं संपिण्डितं नदीवेणिकाजलप्रवाहमिव वहन्तमपश्यत्। तन्मध्ये च प्रतिस्रोत इव गत्वा प्रतिहारी मण्डलाधिष्ठित पुरोभागं श्रीमण्डपं ददर्श।

## कादम्बरी मदनावस्था

अत्रान्तरे चागत्य कञ्चुकी महाश्वेतामवोचत्। 'आयुष्मति देवश्चित्ररथो देवी च मदिरा त्वां द्रष्टुमाह्वयतः' इत्येवमभिहिता च गन्तुकामा 'सखि चन्द्रापीडः श्वास्ताम्, इति कादम्बरीमपृच्छत्। असौ तु ननु पर्याप्तमेवानेकस्त्रीहृदयसहस्रावस्थानमनेनेति मनसा विहस्य प्रकाशमवदत्। 'सखि महाश्वेते किं त्वमेवमभिदधासि। दर्शनादारभ्य शरीरस्याप्ययमेव प्रभुः किमुत भव-



नस्य विभवस्य परिजनस्य वा। यत्रास्मै रोचते प्रियसखीहृदयाय वा तत्रायमास्ताम्' इति। तच्छ्रुत्वा महाश्वेता 'तदत्रैव त्वत्प्रासादसमीपवर्तिनि प्रमदवने क्रीडापर्वतकमणिवेश्मन्यास्ताम्' इत्यभिधाय गन्धर्वराजं द्रष्टुं ययौ। चन्द्रापीडोपि तयैव सह निर्गत्य विनोदार्थं वीणावादिनीभिश्च वेणुवाद्यनिपुणाभिश्च गीतकलाकुशलभिश्च दुरोदरक्रीडारागिणीभिश्चाष्टापदपरिचयचतुराभिश्च चित्रकर्मकृतश्रमाभिश्च सुभाषितपाठिकाभिश्च कादम्बरीसमादिष्टप्रतीहारीप्रेषिताभिः कन्याभिरनुगम्यमानः पूर्वदृष्टेन केयूरकेणोपदिश्यमानमार्गः क्रीडापर्वतमणिमन्दिरमगात्। गते च तस्मिन्गन्धर्वराजपुत्री विसर्ज्य सकलं सखीजनं परिजनं च परिमितपरिचारिकाभिरनुगम्यमाना प्रासादमारुरोह। तत्र च शयनीये निपत्य दूरस्थिताभिर्विनयनिभृताभिः परिचारिकाभिर्विनोद्यमाना कुतोपि प्रत्यागतचेतना चैकाकिनी तस्मिन्काले 'चपले किमिदमारब्धम्' इति निगृहीतेव लज्जया,'गन्धर्वराजपुत्रि कथमेतद्युक्तम्' इत्युपालब्धेव विनयेन, 'अयमसावव्युत्पन्नो बालभावः क्व गतः' इत्युपहसितेव मुग्धतया, 'स्वैरिणि मा कुरु यथेष्टमेकाकिन्यविनयम्' इत्यामन्त्रितेव कुमारभावेन,'भीरु नायं कुलकन्यकानां क्रमः' इति गर्हितेव महत्त्वेन,' दुर्विनीते रक्षाविनयम्' इति तर्जितेवाचारेण,'मूढे मदनेन लघुतां नीतासि'इत्यनुशासितेवाभिजात्येन,'कुतस्तवेयं तरलहृदयता' इति धिक्कृतेव धैर्येण,' स्वच्छन्दचारिणि अप्रमाणीकृताहं त्वया' इति निन्दितेव कुलस्थित्या, अतिगुर्वीं लज्जामुवाह।

समचिन्तयाच्चैवम्। 'अगणितसर्वशङ्कया तरलहृदयतां दर्शयन्त्याद्य मया किं कृतमिदं मोहान्धया हताशया। तथा हि। अदृष्टपूर्वोयमिति साहसिकया मया न शङ्कितम्। लघुहृदयां मां लोकः कलयिष्यतीति निर्ह्रीकया नाकलितम्। कास्य चित्तवृत्तिरिति मूढया न परीक्षितम्। दर्शनानुकूलाहमस्य नेति वा तरलया न कृतो विचारक्रमः। प्रत्याख्यानवैलक्ष्यान्न भीतम्। गुरुजनान्न त्रस्तम्। लोकापवादन्नोद्विग्नम्। तथा च। महाश्वेता दुःखि-

तेति निर्दाक्षिण्यया नापेक्षितम्। आसन्नवर्तिसखीजनोप्युपलक्षयतीति मन्दया न लक्षितम्। पार्श्वस्थितः परिजनः पश्यतीति नष्टचेतनया न दृष्टम्। स्थूलबुद्धयोपि तादृशीं विनयच्युतिं विभावयेयुः किमुतानुभूतमदनवृत्तान्ता महाश्वेता सकलकलाकुशलाः सख्यो वा राजकुलसंचारचतुरो वा नित्यमिङ्गितज्ञः परिजनः। ईदृशेष्वतिनिपुणतरदृष्टयोन्तःपुरदास्यः। सर्वथा हतास्मि मन्दपुण्या। मरणमेद्य श्रेयो न ळज्जाकरं जीवितम्। श्रुत्वैतं वृत्तान्तं किं वक्ष्यत्यम्बा तातो वा गन्धर्वलोको वा। किं करोमि। कोत्र प्रतीकारः। केनोपायेन स्खलितमिदं प्रच्छादयामि। कस्य वा चापलमिदमेतेषां दुर्विनीतानामिन्द्रियाणां कथयामि। क्व वानेन दग्धहृदयेन गृहीता गच्छामि। तथा महाश्वेताव्यतिकरेण प्रतिज्ञा कृता। तथा प्रियसखीनां पुरो मन्त्रितम्। तथा च केयूरकस्य हस्ते संदिष्टम्। न खलु जानामि मन्दभागिनी शठविधिना वोत्सन्नमन्मथेन वा पूर्वकृतापुण्यसंचयेन वा मृत्युहतकेन वान्येन वा केनाप्ययमानीतो मम विप्रलम्भकश्चन्द्रापीडः। कोपि वा न कदाचिद्दृष्टो नानुभूतो न च श्रुतो न चिन्तितो नोत्प्रेक्षितो मां विडम्बयितुमुपागतो यस्य दर्शनमात्रेणैव संयम्य दत्तेवेन्द्रियैः शरपञ्जरे निक्षिप्य समर्पितेव मन्मथेन दासीकृत्योपनीतेवानुरागेण गृहीतगुणपणेन विक्रीतेव हृदयेनोपकरणीभूतास्मि। न मे कार्यं तेन चपलेन।' इति क्षणमिव संकल्पमकरोत्। कृतसंकल्पा चान्तर्गतेन 'मिथ्याविनीते यदि मया न कृत्यमेषं गच्छामि' इति हृदयोत्कम्पचलितेन परिहसितेव चन्द्रापीडेन, तत्परित्यागसंकल्पसमकालप्रस्थितेन कण्ठलग्ने न पृष्टेव जीवितेन,अविशेषज्ञो पुनरपि प्रक्षालितलोचनया दृश्यतामसौ जनः प्रत्याख्यानयोग्यो न वा' इति तत्कालागतेनाभिहितेव बाष्पेण, 'अपनयामि ते सहासुभिर्धैर्यावलेपम्' इति निर्भर्त्सितेव मनोभुवा, पुनरपि तथैव चन्द्रापीडाभिमुखहृदया बभूव। तदेवमस्तमितप्रतिसमाधानबलात्प्रेमावेशेनास्वतन्त्रीकृता परवशेवोत्थाय, जालवातायनेन तमेव क्रीडापर्वतमवलोकयन्त्यतिष्ठत्। तत्रस्था च सा तमानन्दजलव्यवधानोद्विग्नेव

स्मृत्या ददर्श न चक्षुषा। अङ्गुलीगलितस्वेदपरामर्शभीतेवचिन्तया लिलेख न चित्रतूलिकया। रोमाञ्चतिरोधानशङ्कितेव हृदयेनालिलिङ्ग न वक्षसा। तत्संगमकालतिपातासहेव मनो गमायः नियुक्तवती न परिजनम्।

## कादम्बरीसंदेशः—प्रीतिद्रवार्द्रया दृष्टया

पिबन्तीव मां निरुध्यमानैरपि मकरकेतुशरजर्जरितां भित्त्वेव लज्जां लब्धान्तरैर्निपतद्भिरनुरागविभ्रमैराकुलीक्रियमाणा प्रियवचनश्रवणप्रीत्या च स्वेदाश्लिष्टमुत्क्षिप्य रोमाञ्चजालकेन दधतीवोत्तरीयांशुकंप्रेङ्खत्कुण्डलमाणिक्यपत्रमकरकोटिलग्नं च शशिकिरणमयं मरणपाशमिव मकरकेतुना निहितं कण्ठे हारमुन्मोचयन्ती प्रहर्षविह्वलान्तःकरणापि कन्यकाजनसहजां लज्जामिवावलम्ब्य शनैरवदत्।

'जानमि ते गरीयसीं प्रीतिम्। केवलमकठोरशिरीषपुष्पमृदुप्रकृतेः कुतः प्रागल्भ्यमेतावन्नारीजनस्य विशेषतो बालभावभाजः कुमारीलोकस्य। साहसकारिण्यस्ता याः स्वयं संदिशन्ति समुपसर्पन्ति वा। स्वयं साहसं संदिशन्ती बाला जिह्रोमि। किं वा संदिशामि। अतिप्रियोसीति पौनरुक्त्यम्, तवाहं प्रियात्मेति जडप्रश्नः, त्वयि गरीयाननुराग इति वेश्यालापः, त्वया विना न जीवामीत्यनुभवविरोधः, परिभवति मामनङ्ग इत्यात्मदोषोपालम्भः, मनोभवेनाहं भवते दत्तेत्युपसर्पणोपायः, बलाद्धृतोसि मयेति बन्धकीधाष्टर्च्यम्, अवश्यमागन्तव्यमिति सौभाग्यगर्वः, स्वयमागच्छामीति स्त्रीचपलम्, अनन्यरक्तोयं परिजन इति स्वभक्तिनिवेदनलाघवम्, प्रत्याख्यानशङ्कया न संदिशामीत्यप्रबुद्धबोधनम्, अनपेक्षितानुजीवितदुःखदारुणा स्यामित्यतिप्रणयिता ज्ञास्यसि मरणेन प्रीतिमित्यसंभाव्यमेव' इति।

# वासवदत्ता

## स्वप्नदृष्टायाः, प्रेयस्याः विरहेणाकुलं कन्दर्पकेतुमुद्दिश्य तन्मित्रस्य मकरन्दस्य वचनम्

सखे ! किमिदमसाम्प्रतमसाधुजनोचितमध्वानमश्रितोऽसि। तवैतच्चरितमालोक्य वितर्कदोलासु निवसन्ति सन्तः। खलाः पुनस्त्वदनुचितमनिष्टमाचरन्ति। अनिष्टोद्भावनरसोत्तरं हि भवति खलहृदयम्। को नामाऽस्य तत्त्वनिरूपणो समर्थः। तथाहिभीमो नवकद्वेषी, आश्रयाशोऽपि मातरिश्वा, अतिकटुरपि महारसः सर्षपस्नेह इव करयुगलालितोऽपि शिरसा धृतोऽपि न कटुत्वं जहाति। तालफलरस इवापातमधुरः परिणामविरसस्तिक्तश्च। पादपराग इवावधूतोऽपि मूर्धानं कषाययति। विषतरुप्रसूनमिव यथा यथाऽनुभूयते, तथा तथा मोहमेव द्रढयति। नीचदेशस्येव नवारिविरहोऽस्य जायते। निदाघदिवस इव बहुमत्सरस्सुमनसां सन्तापं वहति। अन्धकार इव दोषानुबन्धचतुरः विश्वकर्मावलोपनोद्यतश्च। रुद्र इव विरूपाक्षः, विष्णुरिव चक्रधरः। शक्राश्च इवोच्चैःश्रवाः नदेशजप्रशंसी च। शरस्येव विभिन्नस्यापि सनः स्नेहं दर्शयतः तक्राट इव हृदयं विलोडयति। यक्षबलिरिव आत्मघोषमुखरो मण्डलभ्रमणकश्च। मातङ्ग इव स्ववशालोलमुखोऽधरीकृतदानश्च, वृषभ इव सुरभियानविकलः कामीव गोत्रस्खलनविधुरो वामाध्वानुरक्तश्च। जीर्णरोग इव कलेवरे वचसि मन्दिमानमावहति। वञ्चक इव रक्तः, कटपले विभावरीरक्तश्च। परेत इव बन्धुनापदर्शनः। परशुरिव भद्रश्रियमपि खण्डयति। कुदाल इव दलितगोत्रः क्षमाभाजः प्राणिनश्च निकृन्तति। रतिकील इव जघन्यकर्मलग्नो ह्रेपयति साधून्।

दुष्टशूपे श्रुतिरिव काननरुचिरनुगतमपि यवसं सततं नानुमोदते। अबीजादेव जायन्ते, अकाण्डादेव प्ररोहन्ति खलव्यसनाङ्कुराः। दुरुच्छदाश्च न भवन्ति। असतां हृदि प्रविष्टो दोषलवः करालायते। सतां नु हृदि न प्रविशत्येव। यदि कथमपि प्रविशति तदा पारद इव क्षणमपि न तिष्ठति। मृगा इव विनोदविन्दोर्वशगा न भवन्ति साधवः। सुखं जना हि भवादृशाः शरत्समया इव हरन्ति मित्रमण्डलस्य। न च सचेतना विसदृशमुपदिशन्ति। अचेतनानामपि मैत्री समुचितपक्षे निक्षिप्ता। तथाहि माधुर्यशैत्यशुचित्वसन्तापशान्तिभिः पय इति शब्दसाम्याच्च मित्रतामुपगतस्य तत्संगमादभिवर्धितस्य क्षीरस्य क्वार्य पुरतो ममैव क्षयो युक्त इति विचिन्त्येव वारिणा क्षीयते। तदिदमसाम्प्रतमाचरितम्। सखे! गृहाण साधुजनोचितमध्वानम्। साधवो हि दिङ्मोहादुत्पत्यप्रवृत्ता अपि पुनर्गृहीतसत्पथा भवन्ति।

## विन्ध्यवर्णनम्

ततोऽनेकनल्वशतमध्वानं गत्वा तेनागस्त्यवचनसंहत ब्रह्माण्डखण्ड गतशिखर सहस्रः, कन्दरान्तराललतागृहसुप्तप्रबुद्धविद्याधरमिथुन गीताकर्णनसुखित चमरीगणमारणोत्सुक शबरकुल सम्बाधकाच्छतटः, कटकतटगतकरिकराकृष्टभग्नहरिचन्दनस्यन्दमानरसामोदहरगन्धवाह शिशिरितशिलातलः सुदूर पतनभग्ननालफलरसार्द्रकरतलस्वादनोत्सुकशाखामृताकदम्बकः, प्रलम्बमाननिर्झरोपान्तोपविष्टजीवंजीवकमिथुनलेलिह्यमानविविधफलरसामोदसुरभितपरिसरः, सरभसकेसरिसहस्रखरनखरधाराविदारितमत्तमातङ्गकुम्भस्थलविगलितस्थूलमुक्ताफल शबलशिखरतया शिखरावलग्नं तारागणमिवोद्वहन्,सुग्रीव इव ऋक्षगवयशरभ केसरिकुमुदपनससेव्यमानपादच्छायः, पशुपतिरिव नागनिश्वाससमुत्क्षिप्तभूतिः, जनार्दन इव विचित्रवनमालः; सहस्रकिरण इव सप्तपत्रस्यन्दनोपेतः, विरूपाक्ष इव सन्निहितगुहः शिवानुगतश्च, कामीव कान्तारोषरसानुगतः सामदनश्च, श्रीपर्वत इव सन्निहितमल्लि-

कार्जुनः, नरवाहनदत्त इव प्रियङ्गुश्यामासनाथः, शिशुरिव कृतधात्रीधृतिः, वासरारम्भ इवारुणप्रभापाटलितपत्रवनराजिः, कृष्णपक्ष इव बहुलतागहनः, कर्ण इवानुभूतशतकोटिदानः, भीष्म इव शिखण्डिमुक्तैरर्धचन्द्रैराचिततनुः, कामसूत्रविन्यास इव मल्लनागघटित कान्तारसामोदः हिरण्यकशिपुरिव शम्बारकुलाश्रयः, गैरिकव्याजादुपरि रविरथमार्गणार्यमिवारुणेनोपास्यमानः, शिखरगतसूर्याचन्द्रमसतया विस्तारितलोचनोऽगस्त्यमर्गामुद्वीक्षमाणः; कुलिशक्षतरन्ध्रस्रस्तान्त्रजाल इव जरदजगर भोगैः, कुम्भकर्ण इव दन्तान्तरालगतैः वानरव्यूहैः, पिण्डालक्तकरागपल्लवित पटलपङ्क्ति सूचित सञ्चारशचीपतिपुरवारविलसिनीसङ्केतकेतकीमण्डपः, अकुलीनोऽपि सद्वंशभूषितः दर्शिताभयोपि मृत्युफलदायी, सप्रस्थोऽप्यपरिमाणः, सनदोऽपि निश्शब्दः, भीमोऽपि कीचकसुहृत्, पिहिताम्बरोऽपि विलसदंशुकः, विन्ध्यो नाम गिरिरदृश्यत्।

यश्च प्रवृद्धगुल्मतया रोगीव दृश्यमान बहुधातु विकारः, साधुरिव सानुग्रहप्रचारप्रकटितमहिमा, मीमांसान्याय इव पिहितदिगम्बरदर्शनः, यश्च हरिवंशैरिव पुष्कराक्षप्रदुर्भावरमणीयैः, राशिभिरिव मीनमकर कुलीरमिथुनसंगतैः, करणैरिव शकुनिनागभद्रवालबकुलोपेतैः, देवखातैरुपशोभितान्तः। यश्च छन्दोविचितिरिव कुसुमविचित्राभिः, वंश पत्रपतिताभिः, पुष्पिताग्राभिः, प्रहर्षिणीभिः शिखरिणीभिर्लताभिर्दर्शितानेक वृन्तविलासः। यश्च समद कलहंस सारसरसितोद्भ्रान्तमाकूट विकटकुञ्जकूर्चव्याधूतकमलषण्डगलित मकरन्दविन्दुसन्दोह सुरभितसलिलया, सायन्तन समयमज्जत्पुलिन्दराज सुन्दरी निम्ननाभिमण्डल पीतप्रतिहतरय सलिलया, मदमुखरराजहंसकुलकोलाहलमुखरितकूलपुलिनया, तटनिकटस्थित मत्तमातङ्गमण्डस्थल विगलान्मदधाराविन्दु प्रकरस्तबकितसलिलया, तीरप्ररुढकेतकीकानन पतितधूली निकुरम्ब संजातसित सैकतसुखोपविष्टतरुणसुरमिथुननिधुवनलीलापरिमलसाक्षिकूलोपवनया, तटावटविघटिताम्भोजषण्डमण्डपावस्थितजलदेवताव गाह्-

यमानपयसा, तीरप्ररूढवेतसलताभ्यन्तरलीनदान्यूहव्यूहमदकल-कुहकेलीकुहरावकौतुकाकृष्टसुर मिथुनसंस्तूयमान कूलोपवनोपभोगया, उपकूलसंजात नलनिकुञ्जपुञ्जितकुलायकुक्कुट घटाघटितघूत्कार भैरवतीरया, आतप सेवासमुत्सुकजलमानुषीमृदित सुकुमारतरपुलिनया, उपवन पवनान्दोलिततरलतरतरङ्गया, नलिनीनिकुञ्जपुञ्जनिविष्टदुष्टबकोटककुटुम्बिनीनिरीक्ष्यमाण वृद्धशफरया पोताधानलुब्धकोयष्टिकस्तम्भनभीमवेतसवनलतया, तरङ्गमालासन्तरदुद्दण्डबालदर्शनधावदतिचपलराजिल राजि-राजिलतोपकूलसलिलया, खञ्जरीटमिथुन निधुवनदर्शनोपजात निधिग्रहणकौतुककिरातशतखन्यमानस्यपुटिततीरया,क्रुद्धयेवदर्शितमुखभङ्गया, मत्तयेव स्खलद्गत्या, प्रावृषेव विजृम्भमाणशतपत्रपिहितविषधरया, धनकामयेव कृतभूभृत्सेवया, रेवया प्रियतमयेव प्रसारित तरङ्ग हस्तयोपगूढः।

## सायंकालवर्णनप्रसङ्गे दूतीसंलापप्रस्तावः

अत्रान्तरे अभिसारिकासार्थप्रेषितानां प्रियतमान् प्रति दूतीनां व्यर्थाः सप्रपञ्चाः विकारसंवादा बभूवुः। अवस्त्रीकृतमात्मानं नाकलयसि तत्त्वतः कान्त! प्रस्तर इव क्रूरोऽसि, न चाकर्षकचुम्बकद्रावकेष्वेकोऽसि, भ्रामकोऽसि परं कितव। धर्मार्थान्यप्रयुक्तः क्षेपणिक इव मुधावाहिततरवारिस्त्वमसि। सखेदमिव तां मनसा चिन्तयसि दुर्लभाम्। सत्त्वसारचित्रो यो रिपुमण्डलाग्रतो निर्वृतिमुपेत्य तिष्ठति स खलु वीरः प्रतिपक्षस्य यः संप्रहारतः कुञ्जरान्नयति।

धृतोरुकरुवालसश्चयोपि परमकाण्ड एव संपतन्महापदं विग्रहेण लभते।। राजसेन राजसे नरहितो रहितोध्रुवम्। विशारदा शारदाभुविशदा विशदात्मनांमहिमान महिमानरक्षणक्षमा क्षमातिलक धीरता धीरता मनसि भूतता भूतता च वचसि।।

साहसेन सा हसेन कमला कमलालया यया जिता, सा त्वदर्पणा

दर्पणाकारविमलाशया शयाब्जनिर्जितकिसलया सलयाङ्गुलिरिव विभ्रमेण विभ्रमेण गवाक्षशलाकाविवरं लोकयन्ती लोकयन्त्रित विनाशा विना शापमनुभवति दुःखानि।

जीवनायक जीवनाय कमिव नाश्रयति सुभगम्। अन्यास्ताव-दासतामहमेव दासतां पुरतो भजामि, मैत्र्यतो मैत्र्यतोऽस्तु। अज्जसारतः सारतः किमपि कन्दर्पकं दर्पकं न चेत्तनोषि, विशेष-तोऽविशेषतः स्थिरमेव भरणम्।

शठधियां शोधन यशोधन प्रेमहार्यामहार्य समासोत्कटाक्षैः कटाक्षैराविर्भूतदास्यास्तदास्याः परिजनाः। कमलाकृतिनारीणां कमलाकृति नारीणां भवतां मुखं च मलिनितम्। विश्वस्य विश्वस्य व्यवस्थां समासाद्य समासाधानेककालं संगीतसङ्गीतनुषे तनुषे कमलनङ्गखपुष्पेषु पुष्पेषु रुजा तरसा जातरसा मन्दासमन्दा क्षणं भ्रमन्ती मुह्यति।

कामधुराधरेण का माधुराधरेण मुक्ता रजोराजविशेषकेण विशेषकेण मुखेन्दुना तव हृदि लग्ना मृदिमाकरेण करेण स्वेदबिन्दु-पयोधरेण पयोधरेण वक्षः फजकाञ्चनेन जितानाविलकाञ्चनेन।

कामदारुणमदारुणनेत्रा स्मरमयं रमयन्तं भवन्तमदयं मद-यन्ती परमकमितारं परमकमितारं वाञ्छति हारिणा हारिणा स्तन-कुम्भेन हारिणाक्षि रुचिहारिणा चक्षुषा च।

## वासवदत्तासदनं प्रविशता कन्दर्पकेतुना श्रुताः तत्सखीनां वाचः

भद्रे द्रवसि द्रवसिद्धेशरगदिता। चपला च पलायते किमेषा। स्त-बकस्तव कर्णतः पतितोऽयम्। सुरेखे सुकपोलरेखे सुरया सुरया-चिता श्रीस्त्वमसि। मत्ते कलहे! कलहेमकाञ्जीदामक्वणितैः स्मर-मिवाह्वयसि। मलये! मलयप्सितं कुरु दृशैवाधिगतासि। कलिके! कलिकेतुमिमां मुखरां मुञ्च मेखलाम्। शृणुमः कलवल्ल-

कीविरुतम्। मेखला मेखला न भवति, त्वमेव मुखरतया स्वरतया च। त्रपनेऽत्र पतेयमिति नागकुसुमोपहारेषु स्खलन्तीयम्। तव कैतवकैरलम्, कलिलो निःश्वासैर्वेपथुरेवाशयं व्यनक्ति। वहतीव हतीरनङ्गलेखे तव वपुरलसंस्मरसायकानाम्। तव च हारलता पिहिताऽपि हि तायते। उत्कलिके तवोत्कलिकाबहुले वदने वद नेत्रपयोजकान्ते किमुपमानमिन्दुरप्यायाति। वसतीव सतीव्रते! तव हृदि कोऽपि। रातधा रातधारसारा वाचस्तवानुभूताः। कुन्तलिके! करकाकरकालमेघखण्डतुलामयमुपायत्युल्लसितोत्फुल्लमल्लिकामालभारी तव कुन्तलकलापः। केरलिके पुरगोपुरगोचराः श्रूयन्ते सङ्गीतध्वनयः किमिव कल्पयसि। क्षणमीक्षणमीलनादपि चटुलं चटुलम्पटं सखीजनमायासयसि। सुरते सुरते स्तनताऽनेषु यत्सौख्यं लब्धं तत्स्मरता स्मरतापनोदनं दयितेन दयितेन विमुक्तासि। किं मुह्यसि महतो महतो दयितः स्मरति स्म रतिप्रियं तव कौशलम्। नवनिशानखराणां नखराणां स्मरजन्यां स्म रजन्यां कुरुते कुरुतेन रुजम्। तव लोचनाभ्यां लोचनाभ्यां प्रीणिताखिलजनेक्षणदेशः क्षणदेशः किं न प्रीयते। प्रियसखि! मदन मालिनि! बिम्बाधर सङ्गत्या सङ्गत्यागेच्छया विरागं कुरु मधुमदारुणमालवी मलवीकपोतल समानो रक्तमण्डलतया लतया त्वया को विशेषः? कुरङ्गिके! कल्पय कुरङ्गशावकेभ्यः शष्पाङ्कुरम्। किशोरिके! कारय किशोरप्रत्यवेक्षाम्। तरलिके ! तरलय कृष्णागुरुधूपपटलम्। कर्पूरिके! पाण्डरय कर्पूरधूलिभिः पयोधरभारम्। मातङ्गिके। मानय मातङ्गशिशुयाचनाम्। शशिलेखे! विलिख ललाटपट्टे शशिलेखाम्। केतकिके! सङ्केतय केतकीमण्डपदोहदम्। शकुनिके ! देहि क्रीडाशकुनिभ्य आहारम्। मदनमञ्जरि! मञ्जीरय लतामण्डपम्। शृंगारमञ्जरि ! कल्पय शृंगाररचनाम्। सञ्जीवनिके ! वितर जीवञ्जीवकमिथुनाय मरिचपल्लवम्। पल्लविके!

पल्लवय कर्पूरधूलिभिः कृत्रिमकेतकीकाननम्। सहकरमञ्जरि! संमार्जय श्रमोदक बिन्दून् सहकारसौरभं व्यजनवातेन। मदनलेखे! विलिख मदनलोखं मलयानिलस्य, मकरिके! मकराङ्क शोभिते! देहि मृणालाङ्कुरं राजहंसशावेभ्यः। विलासवति! विलालसय मयूरकिशोरकम्। तमालिके! लेपय मलयजरसेन भवनवाटम् काञ्चनिके! विकिर कस्तूरिकाद्रवं काञ्चनमण्डपिकायाम्। प्रवालिके! सेचय घुसृणरसेन बालप्रबालकाननम् इत्यन्योन्यं प्रणयपेशलाः प्रमदानामालापकयाः शृण्वन् कन्दर्पकेतुर्मकरन्देन सह तद्भवनं प्राविशत्।

# तिलकमञ्जरी

## अयोध्यावर्णनम्

या च दक्षिणानिलतरङ्गितानां प्रतिभवनमुच्छ्रितानामनङ्गध्वजानामङ्गुलीविभ्रमाभिरालेहितांशुकवैजयन्तीभिः कृतमकरध्वजप्लोषमहापातकस्य शूलपाणेर्दत्तावकाशामलकापुरीमिव तर्जयन्ती मधुसमये संलक्ष्यते। यस्यां च मुदितगृहशिखण्डिकेकारवमुखरिताभिस्तरुणजलदपङ्क्तिभिः परिवारितप्रान्ताः सुप्रासादशिखरमालासु प्रावृषि कृतस्थितयो ग्रीष्मकालपरिभुक्तानामुपवनोपरुद्धपर्यन्तभुवामधस्तनभूमिकानां नोदकण्ठन्त सुकृतिनः। यस्यां च जलधरसमयनिर्धौतरेणपटलनिर्मलानामुदग्रसौधाग्रपद्मरागग्राव्णां प्रतिभाभिरनुरञ्जितः शरत्कालरजनीपौरजनीवदनपराजयलज्जया प्रतिपन्नकाषाय इव व्यराजत पार्वणो रजनिजानिः। यस्यां च तुषारसंपर्कपटुतरैस्तरुणीकुचोष्मभिरितस्ततस्ताड्यमाना हैमिनीष्वपि क्षणदास्वमन्दीकृतचन्दनाङ्गरागगौरवमदत्ताङ्गारशकटिकासेवादरमप्लुष्टकेलिवापिकापङ्कजवनमधुप्रभञ्जनाः। यस्यां च वीथीगृहाणां राजपथातिक्रमः, दोलाक्रीडासु दिगन्तरयात्रा, कुमुदखण्डानां राज्ञा सर्वस्वापहरणमनङ्गमार्गणानां मर्मघट्टनव्यसनं वैष्णवानां कृष्णवर्त्मनि प्रवेशः, सूर्योपलानां मित्रोदयेन ज्वलनम्, वैशेषिकमते द्रव्यस्य कूटस्थनित्यता। यत्र च भोगस्पृहया दानप्रवृत्तयः, दुरितप्रशान्तये शान्तिककर्मणि भयेन प्रणतयः, कायपिक्षयोपचारकरणानि, अतृप्त्या द्रविणोपार्जनानि, विनयाधानाय वृद्धोपास्तयः पुंसामासन्।।

## राज्ञो मेघवहानस्य वर्णनम्

तस्यां च भुवनत्रयाश्चर्यभूतायां नगर्यामवार्यभुजबलारातिकठिनकण्ठास्थिदलनदन्तुरकृपाणधारोऽवतार इव साक्षादरुणसारथेरेकरथाक्रान्तचतुरब्धिसीमा, समस्तैकविष्टपाधिपतया तुल्यरेखया वासुकिवासवयोरवस्थितः, यथाविधे व्यवस्थापितवर्णाश्रमधर्मः, यथार्थः प्रजापतिः, प्रतिपक्षाणामान्तराणामन्तराणां च विनेता, प्राप्तदैवपुरुषकारानुगुण्यः, षाड्गुण्यप्रयोगचतुरः, चतसृष्वपि विद्यासु लब्धप्रकर्षः, मनुष्यलोक इव गुणैरुपरिस्थितोऽपि मध्यस्थः, सर्वलोकानां विशेषज्ञोऽपि समदर्शनः, सर्वदर्शनानामनायासगृहीतसकलशास्त्रार्थयापि नीतिशास्त्रेषु खिन्नया परमाणुसूक्ष्मयापि क्रोडीकृतत्रैलोक्यया व्यक्तविवेकयाप्यतिनिबिडया प्रसन्नयाप्यसन्निहितमदया विशालहृदयासादितस्वेच्छावकाशयेवातिदूरप्रसृतया प्रज्ञया सम्यग्ज्ञातहेयोपादेयविभागः, सन्निहितदण्डनीतिप्रतीहारिसमाकृष्टाभिः समन्ततः पतिंवराभिरिवागत्यागत्य सिद्धमालाभिरासृ (श्रि) तो विपक्षलक्ष्मीभिः, गगनाभोग इव शशिभास्कराभ्यामच्युत इव शङ्खचक्राभ्यामम्भसांपतिरिवामृतवाडवाभ्यामभिरामभीषणो यशः प्रतापाभ्याम्, इन्दुविमलाभिर्जलदसमयारम्भ इव राजहंसपङ्क्तिभिः प्रतिमानसं प्रस्थिा ताभिर्व्याप्तभुवनान्तरालो गुणपरम्पराभिः, असंख्यगुणशालिनापि सप्ततन्तुख्यातेन सर्वदाह्लादितलोकेनाप्येकदानानन्दितजनेनोदात्तेनापि स्वरितेन चरितेन पवित्रितत्रिभुवनावनिः, उच्चापशब्दः शत्रुसंहारे न वस्तुविचारे, वृद्धत्यागशीलो विवेकेन न प्रज्ञोत्सेकेन, गुरूणां वितीर्णाज्ञाशासनो भक्त्या न प्रभुशक्त्या, स्वजनपराङ्मुखः परभार्यासु न सपर्यासु, अवनितापहारी पालनेन न लालनेन, अकृतकारुण्यः करचरणे न शरणे, सौजन्यपरतन्त्रवृत्तिरप्यसौजन्ये निषण्णः, नलपृथुप्रभोऽप्यनलपृथुप्रभः, समिद्व्यतिकरस्फुरितप्रतापोऽप्यकृशानुभावोपेतः, सगरान्वयप्रभवोऽप्यमृतशीतलप्रकृतिः, शत्रुघ्नोऽपि विश्रुतकीर्तिः अशेषशक्त्युपेतोऽपि सकलभू-

भारधारणक्षमः, रक्षिताखिलक्षितितपोवनोऽपि त्रातचतुराश्रमः, सर्वसागरैरिवोत्पादितगाम्भीर्यः, सर्वगिरिभिरिवाविर्भावोन्नतिः, सर्वज्वलनैरिव जनितप्रतापः, सर्वचन्द्रोदयैरिव रचितकीर्तिः, सर्वमुनिभिरिव निर्मितोपशमः, सर्वकेसरिभिरिव कल्पितपराक्रमः, सर्वमणिमन्त्रौषधैरिवोपबृंहितप्रभावः, पृथ्वीमय इव स्थैर्ये, तिग्मांशुमय इव तेजसि, सरस्वतीमय इव वचसि, लक्ष्मीमय इव लावण्ये, सुधामय इव माधुर्ये, तपोमय इवासाध्यसाधनेष्वनर्तितः, लक्ष्मीमदविकारैरखलीकृतः, व्यसनचक्रपीडाभिरनाकृष्टः, विषयग्राहैरयन्त्रितः, प्रमादप्रेमनिगडैरजडीकृतः, परमैश्वर्यसंनिपातेन गिरावाप्तप्रतिष्ठः, सततमवनेचरतः, श्रितविशुद्धसाधुसमाचारोऽपि सर्वकालमुर्व्या भुजंगतया भ्राजितः, सार्वभौमो राजा मेघवाहनो नाम। यस्य फेनवत्स्फुटप्रसृतयशोट्टहासभरितभुवनकुक्षिरङ्गीकृतगजेन्द्रकृत्तिमीषणः प्रकटितानेकनरकपालः प्रलयकालविभ्रमेष्वाजिमूर्धसु संजहार विश्वानि शात्रवाणि महाभैरवः कृपाणः। यस्य चाकाण्डदर्शितसकलदिग्दाहो वज्र इव बिडौजसो निर्ददाह महीभृत्कुलानि समन्ततः प्रज्वलत्प्रतापः। यश्च संगरश्रद्धालुरहितानामुन्नत्यानुतोषणप्रणत्यादानव्यसनी जनानामर्थितयाप्रीयत न कृतार्थतया। कुशाग्रीयबुद्धिः कार्याणां वैषम्येण जहर्ष न समतया, लक्ष्मीहताकर्षणलम्पटो दैवस्य वैमुख्यमाचकाङ्क्ष नाभिमुख्यम्, विजयश्रीसंविभागकृषणः स्वानुजीविनां भीरुतया, रेमे न शौण्डीरतया, धैर्यव्यक्तिकामो व्यसनाय स्पृहयांचकार नाभ्युदयाय, विनयचिकीर्षया सितमतिर्गुरूणां कोपेन मुमुदे न प्रसादेन, सकलाधर्मनिर्मूलनाभिलाषी कलेरवतारस्योदकण्ठत न कृतयुगस्य। यस्य च प्रताप एव वसुधामसाधयत्परिकर एव सैन्यनायकाः, महिमैव राजकमनामयन्नीतिः प्रतीहाराः सौभाग्यमेवान्तःपुरमरक्षत्स्थितिः स्थापत्याः, आकार एव प्रभुतां शशंस परिच्छदश्छत्रचामरग्राहाः, तेज एव दुष्टप्रसरं रुरोध राज्याङ्गमङ्गरक्षाः; आज्ञैवान्यायं न्यषेधयद्धर्मो धर्मस्थेयाः, रूपमेव मनस्विनीः प्रसादमनयद्विनोदो नर्मसचिवाः

धार्मिकतैव दुरितानि प्रतिचकार (न) प्रपञ्चः पुरोधसः, प्रज्ञैव मन्त्रान्निश्चिकाय शोभा मन्त्रिणः, आभिगामुकगुणग्राम एव परपक्षमाचकर्ष रूढिर्गूढपुरुषाः, त्याग एव दिक्षु कीर्तिमगमयद्विभवो बन्दिपुत्राः। यस्य चाश्ववृन्दरहिता अपि मुक्तमण्डला बभूवुः, समस्तानेकपदा अप्योजस्वितां विजहुः, अस्वरवर्णा अपि परं न व्यञ्जनमशिश्रियन्त शत्रवः। यस्मिंश्च राजन्यनुवर्तितशास्त्रमार्गे प्रशासति वसुमतीं धातूनां सोपसर्गत्वम्, इक्षूणां पीडनम्, पक्षिणां दिव्यग्रहणम्, पदानां विग्रहः, तिमीनां गलग्रहः गूढचतुर्थकानां पादाकृष्टयः, कुकविकाव्येषु यतिभ्रंशदर्शनम्, उदधीनामपवृद्धिः,निधुवनक्रीडासुतर्जनताडनानि,द्विजातिक्रियाणांशाखोद्धरणम्, बौद्धानुपलब्धेरसद्व्यवहारप्रवर्तकत्वम्, प्रतिपक्षक्षयोद्यतमुनिकथासु कुशास्त्रश्रवणम्, सारीणामक्षप्रसरदोषेण परस्परं बन्धवधमारणानि, वैशेषिकमते द्रव्यस्य प्राधान्यम्, गुणानामुपसर्जनभावो बभूव। किं बहुना। यस्य धारणे कूर्मपतिनापि पराङ्मुखीभूतमादिवराहेणापि वक्रितं मुखमुरगराजस्यापि सहस्रधा भिन्नाः फणा एव भित्तयः, तमपि भुवनभारमनायासेनैव धृतासिना भुजेन यो बभार। निर्यत्नधृतसमस्तभुवनभारतया च तं द्वितीयं शेषं तृतीयमादिवराहदंष्ट्राङ्कुरमष्टमं कुलाचलं नवममाशागजममन्यन्त जनाः। किं च । मुक्तमदजलासारकरिघटासहस्रमेघमण्डलान्धकारिताष्टदिग्भागेषु घनस्तानितघर्घरघूर्णमानरथनिर्घोषेषु दर्पोत्पतत्पदातिकरतलतुलिततरवारितडिल्लताप्रतानदन्तुरितान्तरिक्षकुक्षिषु प्रचण्डानिलप्रणुन्नकरकोपलप्रकरपातमुखरसप्तिखुरपुटध्वानजनितजगज्जरेषु प्रसर्पन्नृपश्रेणिचूडामणिमरीचिचक्रविरचितेन्द्रचापकलापेषु प्रत्यावृत्तप्रथमजलधरसमयशङ्काविधायिषु लोकस्य यदीयसैन्येषु सकलप्रतिपक्षलक्ष्मीजिघृक्षया शरत्समये समन्ततः प्रचलितेषु विषमजलनिधिमध्यवासिनोऽपि कंसद्विष इव द्वीपावनीपालनिवहस्य निद्राक्षयमगच्छत। अन्यच्च।

यस्य दोष्णि स्फुरद्धेतौ प्रतीये विबुधैर्ध्रुवः।
बौद्धतर्कइवार्थानांनाशोराज्ञांनिरन्वयः।।
लतावनपरिक्षिप्ते निन्ये यदरिभिर्निशा।
विन्ध्याद्रेस्तल्परुचिरे न वेश्मनि नवेऽश्मनि।।
अन्तर्दग्धागुरुशुचावाप यस्य जगत्पतेः।
नारीणां संहतिश्चारुवेषा कारागृहे रतिम्।।
दृष्ट्वा वैरस्य वैरस्यमुज्झितास्त्रो रिपुव्रजः।
यस्मिन्विश्वस्य विश्वस्य कुलस्य कुशलं व्यधात्।।

स राजा बाल एवाधिगतराज्याभिषेकः सकलभुवनाभिभाविना भुजबलेन निर्जित्य सप्ताम्बुराशिरशनाकलापां काश्यपीम्, कृत्वा सततसंचणशीलस्य यशसः सुखप्रचारार्थमिव निष्कण्टकाः ककुभः, दिक्कुम्भिनामालानस्तम्भनानुकारिणः समारोपितस्वनामवर्णाः श्रेणीकानारोप्य दिशामष्टानामपि पर्यन्तेषु, जयस्तम्भानुपार्जित-प्रभूतकोशंवशीकृतसमस्तसामन्तमायत्तमन्त्रिमण्डलमुपगृहीतमि-त्रवर्गमाप्तपुरुषाधिष्ठितदुर्गं समग्रमपि राज्यमाजन्मनः प्ररूढ-परमसौहृदस्य हृदयस्येवातिविश्वसनीयस्य बाहोरिव वसुंधराभार-वहनक्षमस्कन्धस्य, प्रगल्भमत्युपहसितधिषणस्यापि प्रज्ञावतां धौरेय-स्य विदितनिःशेषनीतिशास्त्रसंहतेरमात्यवर्गस्यायत्तमकरोत्। आत्मनापि निःशेषितारिवंशतया विगतशङ्कः स्वधर्मव्यवस्था-पितवर्णाश्रमतया जातनिर्वृतिः पर्यवसिताखिलप्रारब्धकार्यतया निरा-कुलमनास्तत्कालं मनः पुरीमनुप्रवेष्टुकामं कार्मुकधारणापराधविल-क्षमनसं मकरलक्ष्माणमनुग्राहयितुमागतेन विस्तारितचतुरोक्तिना दूतेनेव नवयौवनेनोपदर्शितेष्विन्द्रियग्रामहारिषु विषयेषु परिभोगला-लसं मानसमासञ्जयामास। तथाहि—कदाचित्सकुतूहलगृहदेवता-वलोकितः, कामिनीजनाभरणझात्कार एव तूर्यरवसंवर्धितैस्तारतर-विलापिनां वैतालिकानमिव केलीशुकन्तानां ध्वनिभिराधीयमानर-भसः, सरभसदशनाग्रदंशदलितदन्तच्छदमदयकचग्रहोल्लसद्भ्रू-

कुटीभूषितललाटदेशमावेशपरवशप्रवृत्तकरप्रहारव्याहरन्मणिवलयमविरलोद्गतश्रमस्वेदतिम्यद्रोमाञ्चकवचमनवरतमुक्तकौसुमशरसारव्यपदेशादूपजाततुष्टिनेव मानसभुवा देवेन पात्यमानपुष्पवृष्टिः, उत्कृष्टकरणप्रयोगरमणीयमत्यद्भुतं रतसमरमाततान। कदाचिन्नीलपटावगुण्ठिताङ्गो लाङ्गलीव कालिन्दजलवेणिकाः प्रत्यग्रमृगमदाङ्गरागनलिनवपुषो बहुलप्रदोषाभिसारिकाः सुदूरमाचकर्ष। कदाचिदुल्लसितकनकशृङ्गसुन्दरो मन्दराद्रिरिव क्षीरोदजलवीचिभिरागृहीतविविधशङ्खशुक्तिपुटाभिरवरोधपुरन्ध्रीभिरुपसृत्योपसृत्य सिच्यमानो जलक्रीडामकरोत्। कदाचिन्मुदितसुहृद्गणोपदिश्यमानमार्गो मृगाङ्कमौलिरिव कैलासशिखरे मुखरशिखण्डिनि क्रीडागिरौ देवीसमेतः सविभ्रमं बभ्राम। कदाचिन्मन्युगौरवादतिलङ्घितपादपतनविभ्रमाणां प्रेयसीनां प्रसादनं प्रति निष्प्रत्याशः प्रान्तनिपतदम्बुधारान्धकारितोदरकुहरेषु धारागृहेषु बिसिनीपलाशप्रस्तरशायी मनसिशयसंतापमत्यवाहयत्। कदाचिद्देव्या सार्धमारब्धस्पर्धः स्वपरिगृहीतानां गृहोद्यानवीरुधामकालकुसुमोद्गतिकारिणस्तांस्तान्दोहदयोगानदात्। कदाचिद्धौतमृगमदाङ्गरागमनुरागजं खेदजलमजस्रमुज्झिहानं बहु मन्यमानः प्रतिकर्मासमाप्तिकाम्यया कामिनीकुचकुम्भभित्तिष्वनेकभङ्गकुटिलाः पत्राङ्गुलीरकल्पयत्। कदाचित्क्रीडायै द्यूतपराजितः पणितमप्रयच्छन् 'क्व गच्छसि' इति बद्धालीकभ्रुकुटिभिर्विदग्धवनिताभिराकृष्य कृतविषमपदपातो बलादिव दत्तकपाटसंपुटेषु वासवेश्मसु सपत्नीसमक्षमेवाक्षिप्यत। कदाचिदीर्ष्यारुणप्रतिप्रमदाकटाक्षकर्बुरमुपरिक्षिप्तरक्तोत्पलपलाशमिव कापिशायनं स्वयमुत्क्षिप्तमाणिक्यचषकश्चन्द्रिकाप्रहासिषु प्रासादतलेषु प्रेमपरवशः प्रणयकुपिताः प्रेयसीः सानुनयमापाययत्। कदाचिद्वदनमण्डनादिभिर्विडम्बनाप्रकारैरुपहसन्विदूषकानन्तःपुरिकाजनमहासयत्। कदाचिदङ्गनालोल इति निपुणचित्रकारैश्चित्रपटेष्वारोप्य सादरमुपायनीकृतानि रूपातिशयशालिनीनामवनिपालकन्यकानां प्रति-

बिम्बानि परित्यक्तान्यकर्मा दिवसमालोकयत्। कदाचित्स्वयमेव रागविशेषेषु संस्थाप्य समर्थितानि शृङ्गारप्रायरसानि स्वरचितसुभाषितानि स्वभावरक्तकण्ठया गाथकगोष्ठ्या पुनरुक्तमुपगीयमानान्यनुरागभावितमनाः शुश्राव। कदचिदावेदितनिखिलनाट्यवेदोपनिषद्भिर्नर्तकोपाध्यायैरुपदर्शितानां नर्तकीनामक्षुण्णेन शास्त्रवर्त्मना कृतसूक्ष्मगुणदोषोपन्यासः पश्यन्नास्यविधिमासन्नवर्तिनो विदग्धराजलोकस्य मनांसि जहार। कदाचिद्भवनदीर्घिकाम्भसि प्रवृत्तनिर्भरक्रीडारसानामन्तः पुरविलासिनीनां पतिताङ्गुलीयकमुद्रान्वेषणादिना तेन तेन व्याजेन निमज्ज्य गृहीतजघनांशुको विभ्रमभ्रूभङ्गसुभगललाटलेखानि व्याजवैलक्ष्यहासविकसितकपोलदर्पणान्यलीकाक्रोशपदकृद्यवाञ्चि समासन्नप्रतिप्रमदामुखप्रहितकृत्रिमत्रपातरलतरतारकान्यविरतदिदृक्षारसो वीक्षामास मुखानि। किं बहुना। यदुचितं यौवनस्य रुचितं चित्तवृत्तेराराधकं विदग्धानामबाधकं लोकद्वयस्य, तदपरमप्यविकलतया विवेकस्य स्थिरतया कुलाभिमानस्य स्वभ्यस्ततया विनयस्य भूयिष्ठतया च सत्त्ववृत्तेः, यथा न धर्मः सीदति यथा नार्थः क्षयं व्रजति यथा न राजलक्ष्मीरुन्मनायते यथा न कीतिर्मन्दायते यथा न प्रतापो निर्वाति यथा न गुणाः श्यामायन्ते यथा न श्रुतमुपहस्यते यथा न परिजनो विरज्यते यथा न मित्रवर्गो म्लायति यथा न शत्रवस्तरलायन्ते तथा सर्वमन्वतिष्ठत्। सेवकानुरागस्य संरक्षणाय च वितीर्णसर्वावसरमन्तरान्तरा सभामण्डपमध्यास्त। धर्मपक्षपातितया च देवद्विजातिपस्विजनकार्येषु महत्सु कार्यासनं भेजे। पौरलोकपरितोषहेतोश्च वसन्तादिषु सविशेषप्रवृत्तोत्सवां निर्गत्य नगरीमपश्यत्। निसर्गत एवास्य पूर्वपार्थिवातिशायिनी प्रजासु पक्षपातस्य परवशा वृत्तिरासीत्। यतः स तथाप्रसक्तोऽपि विषयोपभोगसुखेषु, जानन्नपि जागरूकताममात्यानाम्, विद्वानप्युपादेयतां निजाज्ञायाः, प्रत्यहमावेद्यमानप्रजानुरागोऽपि प्रणिधिपुरुषैरादेशसंपादनपटीयसि श्रद्धेयवचसि, नेदीयस्यपि मौलभृत्यवर्गे, तासां प्रजानां सुस्थासुस्थोपलम्भाय

केनाप्यनुपलक्ष्यमाणविग्रहः कुसुमायुध इवायुधद्वितीयः स्वयमेव निर्गत्य निशामुखेषु प्रतिगृहं नगर्यांबभ्राम। किंवदन्तीशुश्रूषया च तत्र स्थाने संनिविष्टा विशिष्टजनगोष्ठीर्जगाहे। प्रतिश्रयकुटीषु च दिगन्तरागतपथिकसततसंबाधास्वढौकत। राजव्यापारकथाप्रक्रमे च पौराणामाशयपरीक्षार्थमवनीपतेरमात्यस्य तदधिकृतानां च यथासंभवं परिकल्प्य दोषानुकीर्तयत्। तैश्च प्रशान्तनिखिलोपद्रवतया सर्वदा सुखितैः स्वामिसचिवाध्यक्षमिथ्यापरिवादश्रवणबद्धामर्षैरप्रत्यभिज्ञानस्य दोषेण परुषाक्षरमधिक्षिप्यमाणः परां मुदमुवाह।।

## तिलकमञ्जर्याः परिवारमध्यगतायाः वर्णनम्

अग्रतो दिगन्तसर्पी तर्पयन्निव सुधारसस्रोतसा श्रुतिविवरमग्रचञ्चुनिश्चलधृतार्धोपयुक्तशैवलप्रवालैर्युगपदावलितकण्ठनालमाकर्णितः, सोत्कण्ठैरायातनव्यापी कलहंसैः सत्वरोपसृतवेलासरित्सारसरसितसंभिन्नेन विस्तारितः, तारेण जघनपुनिसारसीनां रसनानां सिञ्जितेन दोलयमानभुजलतोल्लासितेन प्रबलीकृतः, प्रतिवेलविघटमानसंनिवेशानां कनककङ्कणानां क्वणितेन मेखलागुणसखलनविश्रृङ्खलेन मुखरितः, वल्गदच्चकुचमण्डलान्दोलितानामायामिना मुक्तहाराणां रणितेन तारतरोच्चारेण गतिरभसविच्युतानामासाद्य सोपानमणिफलकमाबद्धफालानां सीमन्तकालंकारमाणिक्यानां जववद्रणजन्मना स्वादूकृतः, स्वनसंतानेन नलिनताडिततन्त्रीन्धनिकलेन च बहलितः, विलेलकुसुमापीडहेलोत्पतितानां गुञ्जतां वियति बद्धमण्डलानामलिगणानां गुंकृतेन प्रत्यासन्न एव प्राकारान्तरितदर्शनस्य प्रतिक्षणमधिगताधिकाधिकव्यक्तीनां मधुरगम्भीरेण च रणपातधमधमारवेण संवर्धितः, सविधमागच्छतः सोपानसंक्रमेण स्त्रैणस्य मसृणतारो नूपुराणामुच्चचार झात्कारः। तदनुसारप्रहितलोचनश्च पुरः प्राकारशिखरे पुञ्जीभूताः, नातिदूरवर्तिनीरतिभास्वरतया कार्तस्वरपताका इव पातालादुद्यतरविरथ-

स्योल्लसितविद्युत् इवोदधिजलमवगाहमानैर्धनैरपघनेभ्यो विश्लेषिताः, दिव्यौषधीरिव मथनोत्थितस्य धन्वन्तरेर्विस्मृताः, कल्पलता इव पारिजातजन्मभूमिमवलोकयितुममरकाननादागताः, दीधितीरिवास्तसमये गभस्तिमालिनो विगलिताः, कुलिशार्चिष इव सपक्षपर्वतान्वेषणाय समुद्रमायाताः, कनककमलिनीमृणालिका इवानिर्वाणसुरवारणकवलदानार्थमिन्द्राधोरणैरुपसंगृहीताः, समुद्रजलदेवता इव प्रभातमारुतोद्वेगादातपं सेवितुमुत्थिताः, हस्तदीपिका इव धनदाधिराजस्यावचूलरत्नमालिका इव नभस्तलवितानकस्य काश्चित्सुवर्णचम्पककलिकासवर्णाः काश्चिदसितोत्पलदलश्यामावदातत्विषः कस्तूरिकातिलककलङ्कितैराननेन्दुभिः शतचन्द्रमिव गगनतलमादधानाः, विकासिभिर्नयनविक्षेपैरुच्छलच्छफरसहस्रानिव सागरोद्देशानुपदर्शयन्तीः, आशामुखव्यापिनामुखामोदेन प्रवृत्तामृतमथनमिव तं प्रदेशमादधानाः, विलेपनपरिमलेनान्यमिव पारिजातोद्गममातन्वतीः, आभोगशालिभिः पयोधरोत्सेधैः पर्वतमयमपरमिव सेतुमासूत्रयन्तीः, विभ्रमावलोकितैरुदधिमिव मर्यादालङ्घनमध्यापयन्तीः, भ्रूविभ्रमैर्मन्मथमिव धनुर्वेदं शिक्षयन्तीः, अखिलजगदाक्षेपकारिरूपाः कन्यका झगित्यद्राक्षम्। तासां च मध्ये शब्दविद्यामिव विद्यानाम्, कौशिकीमिव रसवृत्तीनाम्, उपजातिमिव छन्दोजातीनाम्, जातिमिवालंकृतीनाम्, वैदर्भीमिव रीतीनाम्, प्रसक्तिमिव काव्यगुणसंपदाम्, पञ्चमश्रुतिमिव गीतिनाम्, रसोक्तिमिव भणितीनाम्, अधिकमुद्भासमानाम्, अबहुदिवसोपारूढयौवनामूर्धस्थिताम्, आसन्नवेत्रधारीस्कन्धविन्यस्तवामहस्तकिसलयाम्, उभयतः सलीलमुद्धूयमानचामरकलापाम्, अवलम्बमानस्थूलमुक्ताफलावचूलेन जलधिफेनपटलेनेव परस्परानुलग्नं विगलय्य बिन्दुना गगनमुत्पतितेन श्वेतातपत्रेण वारितातपाम्, अशोकतरुपल्लवाताम्रतलस्य चरणपङ्कजयुगलस्य विलासचलनेषु

सर्वतः प्रसरतातिसंनिहितमुखरमणिनूपुरस्वनेन प्रभासंतानेन श्रूयमाणराजहंसरवमाकाशकमलिनीवनमिवोत्विकासमुपदर्शयन्तीम्, अङ्गुलिप्रणयिपद्मरागोर्मिकारागसंवर्धितप्रभासमृद्धिभिः समन्ततः प्रसरन्तीभिरभिनवातपताम्राभिरङ्घ्रिनखमयूखलेखासंततिभिर्दाशरथिशरकृशानुकर्शितत्विषामुदधिविद्रुमलतावनानामुज्जीवनाय कुङ्कुमरसवारिकुल्यासहस्राणीव प्रवर्तयन्तीम्, अच्छकुङ्कुमरसपिञ्जरेण मसृणमाणिक्यवलयश्रेणिना जङ्घाकाण्डयुगलेन गिरितटाघातकुण्ठितमणिप्रतिममनङ्गकरिकलभदन्तद्वितयमाक्षिपन्तीम्, उभयथापि परिमण्डलोरुणा द्विधापि निबिडकक्षाबन्धबन्धुरेण नितम्बिना जघनबिम्बेन प्रयत्ननिवसितमप्यदृश्यत्वादविद्यमानकल्पं कल्पपादपांशुकं कलयन्तीम्, आच्छादितोदरवलित्रयस्य हसितहारीतपक्षहरिनिम्नः कञ्चुकाग्रपल्लवस्य चञ्चलतया प्रतिक्षण मवेक्ष्यमाणविपुलनाभिमण्डलाम्, प्रसृततनुतरङ्गपर्यायोत्क्षिप्तपद्मिनीदलोपलक्ष्यमाणसुकुमारावर्तामिवोद्याननदिकामनन्यजनिवासवेश्मनोजघनमण्डलस्योपरिपरिस्फुरन्तीम्, आयतारुणां नाभिचक्रचुम्बिनो हारनायकस्यांशुलेखां विभ्रमपताकामिव रोमराजिमरकतदण्डिकाशिखरलग्नामुद्वहन्तीम्, मेरुमत्सरिणा दूरदर्शिताभोगसंक्षोभितसुरासुरेण विन्ध्यागिरिणेव प्रतिदिनं प्रवर्धमानेन स्तनभरेण निरुद्ध्यमानवदनचन्द्रालोकाम्, अचिरावतीर्णेन निर्भरमदभृता यौवनवनगजेनेव दूरविक्षिप्तस्य लावण्यपयसो वीचिवलयैरिव सबुद्बुदैरविरलप्रत्युप्तवज्रोपलगणैः कनककङ्कणैरधिष्ठितकोमलप्रकोष्ठकन्दलाम्, सुदर्शनोपेतेन वैकुण्ठेनेव कण्ठनालेन तुलितशङ्खाम्, प्रकटितादभ्रविभ्रमेण प्रथमयौवनावतारमरुता तरलितायतापाङ्गयोरन्तः सूच्चारुतारकयोः क्षीरधवलयोरीक्षणमहानदीप्रवाहयोर्जलतुषारजालकमिवोच्छ्वलितमच्छमुक्ताफलस्तम्बमुभयश्रवणशिखरावलम्बिनं बिभ्राणाम् .....द्विरष्टवर्षवयसं दिव्यरूपां कन्यकामद्राक्षम्।

## गन्धर्वबालकेन हरिवाहनाय तिलकमञ्जरी वृत्ताकथनम्

तस्य (चक्रसेनस्य) शैशवाभ्यस्तनिरवद्यशस्त्रशास्त्रविद्यस्य यौवनारम्भरभसप्रसाधितपुर्वापरपयोधिमर्यादमेदिनीमण्डलस्य नित्यमभिनवानाखण्डलस्येव नन्दनोपवनपादपानासेवमानस्य पञ्चप्रकारानपि विषयानतिक्रान्ते कियत्यपि काले रूपतुलितसकलसुरसिद्धखेचराङ्गणमनेकैर्देवतोपयाचितशतैरतिशुभस्वप्नसूचितावतारमुदारविद्याधरवंशसंभवायामङ्गलावण्यलक्ष्मीलघूकृतरतिरूपसंपत्तौ पत्रलेखाभिधानायां महादेव्यामेकमखिलत्रैलोक्य तिलकस्तिलकमञ्जरीनामधेयं कन्यकारत्नमुत्पन्नम्।

यस्य रूपलव एष लावण्यनिधिना चित्रपटसंक्रान्तः कृतार्थीकृतो दृष्टिपातप्रसादेन। सा चेयं देवी जन्मदिनमहोत्सवश्रिया विश्राणितोभयश्रेणिचरखेचरगणानन्दा पाञ्चालिकाकन्दुकदुहितृकाविवाहगोचराभिः शिशुक्रीडाभिरतिवाहितसर्वलोकस्पृहणीयबालभावा बहुलेतरपक्षे शशिलेखेव प्रत्यहमपरापरासु कलासु परिचयं कुर्वाणा, क्रमेण कुसुमबाणकेलिकाननं यौवनमनुप्राप्ता, संप्रति च दृष्टविनयदाक्षिण्यशीलत्रपादिस्त्रैणगुणगणद्विगुणितापत्यप्रीतिना जनकेन योग्या इति भाजनीकृता समग्राया अपि निजविभूतेरनुमोदिता च स्वेच्छाविहाराय धृतविदग्धवेषविद्याधरीवृन्दपरिवृता पुरः प्रधावता प्रान्तचलितानेकरूपचिह्नकापह्नु ततपनमण्डलेन मायूरातपत्रवनेन कुलिशत्राससंकुचितसुरशैलशिखराकारं कनकमयं विमानमारूढा, गत्वा सत्वरं गगनमार्गेण, कदाचिद्दक्षिणार्णवतरङ्गताडिततरुणताडीतरुषु संभोगलालसभुजङ्गललनासतसंकुलतमाललवलीलतागुल्मेषु मलयतटवनेषु विचरति, कदाचिदासक्तकनकाम्बुजरजोराजिपिञ्जरपलायमानकलहंसकुलेषु मानससरःसलिलेषु कूलासीनसकुतूहलकुबेरकुलकुमारावलोकिता मज्जनकेलिमनुभवति, कदाचिदितस्ततः प्रवृत्तप्रतनुसुरनिम्नगास्रोतःसूत्रा-

सीमन्तितशिखेषु नीहारगिरिशिखरेषु वनविहारखिन्ना सुखनिषण्णानां किंनरकुलानां काकलीगीतमाकर्णयति, कदाचिदच्छिद्रपुंनागपादपच्छन्नविपुलवालुकापुलिनेष्वविच्छिन्नसंततिश्रूयमाणानेकशकुनिगणरमणीयकरुतेषु सागरकूलकच्छेष्वात्मना समानविभवपरिच्छदाभिः परिवृता विद्याधरेन्द्रकुलकुमारिकाभिरुत्तरकुरुभ्यः समानीतेन कल्पतरुफलरसासवेन पानोत्सवं प्रवर्तयति, स्वभवनगता च सर्वदा सर्वकलाशास्त्रकुशलेन सर्वदेशभाषाविदा सर्वपौराणिकाख्यानकप्रवीणेन स्त्रीजनेन चित्राभिः कथाभिर्विनोद्यमाना दिनान्यतिवाहयति। ननु स्वप्नेऽपि पुरुषसंनिधिमभिलषति। प्रवर्त्यमानापि च गुरुभिः, प्रबोध्यमानापि धर्मशास्त्रविद्भिः प्रलोभ्यमानाप्यनेकधा विद्याधरेन्द्रकुलकुमारैः प्रसाद्यमानापि प्रियसखीभिः विक्रियमाणापि प्रकटितालकोपाभिर्बान्धववृद्धाभिः न ज्ञायते किमात्मनो रूपं वरमनीक्षमाणा किं पुरुषपरतन्त्रतया यदृच्छाविहारमुखविच्छेदमाशङ्कमाना किमाद्य एव विद्याग्रहणसमये स्वबुद्धिसंकल्पितस्य पुरुषसंप्रयोगपरिहारव्रतस्य समाप्तिकालं प्रतिपालयन्ती किमन्यजन्मजातसंबन्धपुरुषविशेषप्ररूढगाढप्रेमवासनावशेन पुरुषान्तरेषु चक्षुःप्रीतिमव्रजन्ती नाभिलषति पाणिग्रहणमङ्गलम्।

दृष्ट्वा च तस्यास्तथाविधां चित्तचेष्टामदृष्टप्रतिविधाना परं विषादमुपगता देवी। पत्रलेखाविधानजप्तमन्त्रया च तया भर्तृदारिकाया वरमुद्दिश्य विज्ञापिता। निशि प्रज्ञप्तिविद्यानिवेदितं च भगवत्या स्वप्नान्तरे—'वत्से, मा व्रज विषादम्। माऽत्र विद्याधरकुमारकान्वेषणे कुरु यत्नम्। अखिलनृपचक्रचूडारत्नमस्याः पतिः क्षितिगोचरनरेन्द्रदारको भविष्यति। एषा च हिमगिरिशिखरसद्मनः पद्ममहाह्रदस्य पद्मवने कृताश्रयायाः श्रियः किमपि मान्या जन्मान्तरसखी सुकृतानुभावात्तव सुताभावेन संजातेति परिभाव्य सादरं द्रष्टव्या।' इति। नष्टनिद्रया च तया रूपदर्शनेन विना दुहितुरनुरागोत्पादनं रूपदर्शनं च साक्षादशेषभारतवर्षभूपतिकुमाराणामतिमात्रदुष्करमवधारयन्त्या तस्मिन्नेव क्षणे समाहूय सर्वान्तःपुर-

प्रतिबद्धसैरन्ध्रीगणप्रष्ठाप्रेष्ठाप्रकृत्यैव जननी मे भर्तृदारिकाया धात्री चित्रलेखा नाम सादरं समादिष्टा—'सखि चित्रलेखे, त्वं हि चित्रकर्मणि परं प्रवीणा। चित्रदर्शनानुरागिणी च वत्सा तिलकमञ्जरी। अतोऽस्याः सकलनिजपरिवारवाराङ्गनाचित्रकौशलदर्शनव्याजेन दर्शय निसर्गसुन्दराकृतीनामवनिगोचरनरेन्द्रप्रदारकाणां यथास्वमङ्कितानि नामभिर्यथावस्थितानि विद्धरूपाणि। वर्णय च तेषामाहितोत्कर्षया गिरा त्यागसौभाग्यविभववैचक्षण्यलावण्यादिगुणगणम्। अचिन्त्या हि दैवशक्तिः। एवमपि कृते कदाचित्क्वापि विश्राम्यति चक्षुरस्याः।''तथा'इति प्रतिपद्य तच्छासनमावेद्य च सविस्तरं तत्रैव क्षणे विसर्जिताः सर्वदिक्षु दक्षाश्चित्रकर्मणि समस्ता अपि स्वस्यात्मनः प्रतिबद्धाः। शुद्धान्तसैरन्ध्रीदास्योऽहमपि तत्र समये समासन्नवर्ती सादरमभिहितः—"वत्स गन्धर्वक, तवाप्ययमेवाधिकारः केवलं सुवेलगिरिवासिनो निजपितुर्विचित्रवीर्यदेवस्य पार्श्वे त्वमद्य कार्यवशेन देव्या पत्रलेखया प्रस्थापितोऽसि। अतो न शक्यसे वक्तुमनयत्किमपि। किं तु कृतराजकार्येण तस्मात्समागच्छाता त्वया विज्ञापनीयमिदमस्तद्वचो नभश्चेन्द्रस्य—या सा सकलदाक्षिणात्यसामन्तमौलिविश्रान्तचरणनखमरीचेः काञ्चिनगरीनायकस्य राज्ञः कुसुमशेखरस्य सर्वान्तःपुरप्रमुखा महादेवी गन्धर्वदत्तेति नामसाम्यादुपजातसंदेहेन रत्नकूटाद्रिबन्धावुदधिजलपरिक्षितपीठे स्वयंभुवि तत्र दिव्यायतनमण्डले विहितयात्रेका रात्रौ सादरं तथाश्रुता देवेन पूर्वमासीत्, सैव सा देवस्यात्मज गन्धर्वदत्ता। यतो मया देवादेशमन्तरेणापि गत्वा स्वयं दृष्टा समाश्वासिता च सर्वस्य ज्ञातिवर्गस्य कुशलवृत्तान्तावेदनेन पृष्टया च विजने वैजयन्तीनगर विप्लवात्प्रभृति सर्वस्तया निवेदितो निजप्रवासवृत्तान्त इत्यवधार्य कार्यो न देवेन तां प्रति संदेह इतयतिवाह्य च तस्य नगरे रात्रिमेकामुद्गते समन्तादुद्द्योतिताशेषदिशि दशशतमरीचौ मोचयित्वात्मानमागत्य काञ्चीमुपास्य कंचित्कालं भर्तृदारिकां गन्धर्वदत्तां क्षिप्रमेवागन्तव्यम्। एष चाधुनैव साधितबहुरूपिणीविद्यश्चित्रमायो नाम

विद्याधरः प्रस्थितस्य ते पथि सहायो भविष्यतीति। तदेतदवश्यकरणीयं राजकार्यमवधार्य धीमता गन्तुमेवाहमादेष्टव्यो न मनुष्यरूपाणि चित्रकर्मणा निर्मातुं यस्मादिदानीमत्यन्तगमनोत्सुकोऽहम्। उत्सुकमनोभिश्च कर्तुमारब्धमतिस्थूलमपि कर्म नोपजायते सुसूत्रम्। किं पुनश्चित्तैकाग्रतातिशयनिर्वर्तनीयचित्रम्। तदधुना तत्र त्रिकूटाचलकूटचूडामणौ विचित्रवीर्यनगरे काञ्च्यां च तावन्मया गन्तव्यम्। अन्तरा च यदि कश्चिदन्तरायो न भवति, ततस्ततो निवृत्तेन नियमादिहागत्य पुनरपि दृष्टव्यमिष्टफलदायकं सकलार्थिकल्पद्रुमस्य ते विद्रुमारुणतलं चरणप्रवालयुगलम्। उपदर्शितबहुविकल्पचित्रशिल्पेन च स्थित्वा दिक्समेकमेकाग्रमनसा तथाभिलेषितव्यं यथावस्थितं महाभागस्य रूपं यथा चित्रपटवर्तिना तेन पुरतो दृष्टमात्रेण सिद्धगारुडमन्त्रेणेव भर्तृदारिकायाः प्रशममुपयास्यति समस्तबान्धववर्गदत्तदुःसहोद्वेगः पुरुषद्वेषविषवेगः' इत्युदीर्य जिगमिषुः

## मलयसुन्दर्याः जन्मवृत्तान्तः

अस्ति अपरधनकनकसंचया नाम नगरी। यत्र नागवल्लीलालसा धनिन उद्यानपालाश्च, परमतज्ञाः पौराः प्रामाणिकाश्च, सफलजातयः श्रोत्रिया गृहारामाश्च, हरिद्रासान्द्ररुचकयो रागिणः सुवर्णचम्पकस्तबकनिचयाश्च, प्रगुणविशिखा गृहनिवेशाः सुभटबाणधयश्च, आबहुमालिकाः प्रासादाः प्रकृतयश्च, संकुचितालकाः प्रधानापणाः प्रमदाललाटलेखाश्च, सुराभिरामाभिरुचितकारिण्यः पण्यवनिताः पौरयुवतयश्च। यत्र नारङ्गपनसकदलकप्रायमशनम्, नालिकेरीफलरसप्रायं पानम्, मुक्ताफलप्रायमारभरणम्, कृपाप्रायं धर्मानुष्ठानम्, दानप्रायं कर्म, सत्यशौचप्रायमाचरणम्, शास्त्रविचारणप्रायो विनोदो निवासिलोकस्य। यत्र मुग्धता रूपेषु न सुरतेषु, हरिद्रारागो देहेषु न स्नेहेषु; बहुवचनप्रयोगः पूज्यनामसु न परप्रयोजनाङ्गीकरणेषु, विभ्रमो रतेषु च चित्तेषु। यत्र मन्दिरो-

पवनान्यावासननगराणि, तमालतरुनिकुञ्जाः सदनानि लवङ्ग पल्लवस्रस्तराः पर्यङ्काः, प्रणयकलहाः कलयः, नखदशनविन्यासाः शरीराभरणमणयः, प्रियावदनशतपत्राणि पानपात्राणि, कामसूत्र-मध्यात्मशास्त्रम्, वाजीकरणयोगोपयोगो व्याधिभेषजम्, अन-ङ्गपूजा देवतार्चनम्, सुरतदूतिकागुरुवो भुजङ्गवर्गस्य, यत्र हृन्मर्मभेदिनः कटाक्षाः कुसुमेषवः, लवङ्गकक्कोलपरिमलवाही मुखानिलो मलयसमीरः, स्फुटितकुमुदोज्ज्वलः स्मितालोकश्चन्द्रो-दयः, सच्छायतनुलताभिगमो नवयौवनावतारो मधुसमयः, चित्तो-न्मादकारिणी वचनचाटुपद्धतिर्मदिरा, कोकिलध्वनिकला कृतककोप-हुंकृतिः पञ्चमोद्गारः, इति केवलासु प्रमदासु परिसमाप्यते सम-स्तापि जैत्रा तन्त्रसामाग्री कुसुमकार्मुकस्य। यत्र मधुकरध्वनिपटु हुंकाराणि समुल्लसत्सरससहकारमञ्जरीतर्जनिकानि कृततर्जना-नीव प्रियकरोत्क्षिप्तासु मुक्ताशुक्तिषु विलोकयन्ति तालफलरसम-धूनि ध्वस्तमानावलेपा विलासिन्यः। यत्र सुलभनागवल्लीद-लार्द्रपूगीफलानि क्वणत्कुररकुलकलध्वनिवर्धितानङ्गोत्साहानि संनिहितचन्दनशिशिरदीर्घिकातरङ्गपवनानि वनानि निधुवनानि च निषेवन्ते समं वनितासखाः सुखिनः। यत्र सायंतनस्नानार्द्रवपुषां द्रविडयोषितामसान्द्रलग्नस्य हरिद्राद्रवरसस्य छायया पिञ्जरिततनु-किरणकन्दलो दलितचम्पककर्णपूरमनुकागतिकपोलदर्पणावलम्बी पार्वणो रजनिजानिः। यत्र तीरामन्नजातानां कतकविटपिनामनारतं गलद्भिः फलैः प्रशमितपङ्कोदयानि निर्दयास्वपि कामिमिथुन-मज्जनकेलिषु कालुष्यं नानुभवन्ति भवनदीर्घिका जलानि यत्रैला-लतासदनासूत्रितविचित्रमोहनाभिर्द्रविडयुवतिभिः प्रियेषु प्रयुज्यमानं बहुप्रकारमुपगूहनोपचारमुपशिक्षितुमिव क्रमुकवृक्षकाना-वेष्टयन्ति कृतविचित्रवलना नागरखण्डपत्त्रवल्लयः। यत्र च युवजनेन दयिताकपोलदशनच्छेद्यविद्यामभ्यसितुमनुदिवसमा-च्छिद्यमानानि परिकरमितान्यपि न यान्ति परमपरिपकमजिरसहकार-शाखिनां फलानि।

तस्यां च निजविभूतिर्जितसुरेन्द्रसदनसौन्दर्यायां नगर्यामपवार्यविस्फूर्जथुपृथुप्रतापवज्राग्निजनितसकलारातिकुलपर्वतप्रमाथःस्वर्णाथ इव पार्थिवश्रीपरिभोगवाञ्छया प्रच्छादितसहजरूपो रूपलावण्यलघूकृतकुसुमायुधो धृतायुधैकदक्षिणबाहुसाहायकप्रसाधितानन्तप्रान्देशो देशोत्तरभ्रान्तशशिकरावदातकीर्तिर्नीतिशास्त्रशाणानिशितनिर्मलप्रज्ञा परामर्शपरशुशातिताशेषविजिगीषुविजयोद्यमद्रुमः कल्पद्रुमः क्रमागतलोकानां वज्रपञ्जरो भीतानामुत्तम्भनस्तम्भो निजवंशवेश्मनः समीरो वैरिसुन्दरीसीमन्तसिन्दूरस्य क्रूरग्रहदृष्टिपातो दृष्टनिग्रहक्रियायामुदात्तनिजचरितचारणीकृतखेचरगणो गुणगरिमातिरेकतृणीकृतभरतसगराद्यादिराजो राजा कुसुमशेखरो नाम। यस्य मलयाचलस्येव पूर्वापरदिगन्तलब्धायतेर्दक्षिणोदधिवेलावनं व्यापदखिलमपि कटकविस्तारः। येन चाप्रयत्नभग्नसंततवर्धिषु भूभृत्तदुन्नतिना भुवनत्रयाभिनन्दितोदयेन कुम्भयोनिनेव स्वसाधिता पवित्रिता च दक्षिणा दिक्।

तस्य तेजस्विवर्गाग्रेश्वरस्य सकलगुणनिधिरीदृशी विगतलक्षणाहमधमाशुशुक्षणेरिव धूमवर्तिरासन्नवर्तिनां जनानामश्रुपातकारणमेकैवात्मजा जाता माता तु मे सर्वान्तःपुरपुरंध्रिमुख्या महादेवी महिम्नां धाम गन्धर्वदत्ता नाम। किं च।

भित्त्वा संपुटमोष्ठयोर्न हसितं निःशङ्कगोष्ठीष्वपि
भ्रान्तं न त्वरितैः पदैर्गृहनदीहंसानुसारेष्वपि ।
सार्धं पञ्जरसारिकाभिरपि नो भूयस्तया जल्पितं
न""तिलकद्रुमेष्वपि चिरं व्यापारिता दृष्टयः ।।

पर्यङ्काग्रात्क्षणविनिहितः काञ्चने पादपीठे
रक्ताशोकप्रहतिविहितोग्रापराधःक्रुधेव।
वामो यस्याः प्रणतिचटुलैः क्षोणिपालाङ्गनानां
कर्णोत्तंसद्रुमकिसलयैस्ताडितः पादपद्मः ।।

यस्याललाटेसदृशद्युतित्वादस्पष्टचामीकरपट्टबन्धे।
अनर्ति सूक्ष्मालकवल्लरीणां मालारिबन्दी व्यजनानिलेन ।।

या च त्रिभुवनख्यातविद्याधरवंशसंभवा भवानीव शंभोर्द्वितीयापि भर्तुरेकं शरीरमभवत्। जातमात्रायामेव मयि समस्तदैवज्ञाग्रतःसरेण सकलनिमित्तशास्त्रतत्त्ववेदिना सहस्रशःसंवादितादेशतया परं संमतेन वसुरातनाम्ना सांवत्सरेण स्फुटीकृत्य तात्कालिकग्रहाणां दशाफलमानन्दाश्रुजलपरिप्लुतेक्षणेन क्षोणीपतेः पुरः स्पष्टाक्षरमिदमादिष्टम्—'एषा कन्यका निकामं पुण्यभागिनी भाजनं भविष्यति भूयसामुपभोगसौख्यानाम्। ईदृशे च लग्ने लब्धमनया जन्म। योऽस्याः करं ग्रहीष्यति स हेमकूटादिकुलशैलकटकनिविष्टविद्याधराङ्गनोपवर्णितपुण्यचरितप्रशस्तिना पराक्रमाक्रान्तसकलदिक्चक्रेण महानरेन्द्रचक्रवर्तिना संक्रमितनिखिलनिजराजिभारश्चतुरुदधिरसनागुणायाः क्षितेराधिपत्यं करिष्यति' इत्येतच्चाकर्ण्य कर्णपरम्परया सर्वेऽपि नगरीनिवासिनः प्रधानपौराः परां मुदमवापुः। अमन्दसंभ्रमाकुलाश्च तत्कालमेव प्रत्यापणं प्रतिगृहं प्रतिचत्वरं प्रत्यायतनमनिलनर्तितविचित्रचीनांशुकव्रजान्ध्वजानाबबन्धुः। बन्धुतेव प्रतिगृहं गृहीतविकटप्रसाधना धिन्वन्ती मङ्गलगीतिभिर्जगज्जगौ जनता। निष्पर्यायमाहताभिरानन्दतूर्यसंहतिभिरुच्चैस्तरोऽपि चारणानामारवः श्रवसि निविशमानश्चस्खाल मदविशृङ्खलपदक्षेपक्षोभितकाञ्चयश्च सह भुजङ्गजनेन ननृतुर्नृपाङ्गणेषु गणिकाः। तातोऽपि तोरणबद्धहरितचन्दनमालमुद्दामगन्धोदकच्छटाविच्छर्दविरजीकृताजिरमुपरचितमौक्तिकचतुष्कं पातितविचित्रपुष्पप्रकरमागत्य मातुर्मे भवनमनेकराजलोकपरिवृतः पुत्रजन्मसदृशमतिमहान्तमुत्सवमकारयत्। अतिक्रान्ते च दशमेऽहनि समागतसमस्तज्ञातिलोकः प्रवर्तितमङ्गलोपचारः स्वगोत्राचारकर्मण्यतिसादरो मलयसुन्दरीति मे नाम कृतवान्।

## मलयसुन्दरी समरकेतोः प्रणयः

सोऽपि नृपकुमारः सविभ्रमं परिभ्रमन्तीनामाकर्ण्य तासां राजकन्यानामाभरणमणिरणितमनणुतरमुपरि तस्य प्राकारस्य संक्रमितदृष्टिराविष्कृततथाविधानेकविभ्रमां मामपश्यत्। दर्शनादेव चासौ जन्मसहभुवं पुमानिव सांख्यपरिकल्पितः प्रकृतिममुञ्चन्निसर्गधीरोऽपि सागर इव तरङ्गानितस्ततस्तरलकूटिलानक्षिपत्कटाक्षान्। अस्पृष्टोऽपि जलनिधिमारुतेन प्रत्यङ्गमुद्गतपुलकपद्धतिरकम्पत। चिरोत्सृष्टमुक्तनिद्रोऽपि तत्क्षणप्रतिबुद्ध इव साङ्गभङ्गमजृम्भत्। प्रगल्भवागपि सगद्गदस्वरः स्वकर्मसु कर्णधारानतत्वरत्। दर्शयितुमिव मे भुजाश्लेषलीलामुदीरितचतुरवचनां चामरग्राहिणीं सहासमाश्लिक्षत्। प्रकाशयितुमिव वदनचुम्बनप्रपञ्चमीषदामीलितदले लीलांशुजन्मनि प्रवालपाटलमधरपल्लवपुटमजीघटत्। निवेदयितुमिव दन्तच्छदच्छेदमनिमित्तमेवादाय नागवल्लिदलशकलमग्रदशनसंदंशेन शनकैरखण्डयत्। कथयितुमिव नखच्छेदवैदग्ध्यमायताङ्गुष्ठकररुहाग्रेण तरुणकेतकगर्भपत्रमनतिदीर्घलेखालाञ्छितोदरमकार्षीत् । प्रपञ्चयितुमिव ताडनक्रममकाण्डदर्शिताश्लीलचेष्टां समासन्नसंवाहिकां सहासःकरतलाग्रेण स्कन्धदेशे पुनः पुनरवधीत्।

निह्नोतुकामश्च लज्जयात्मनो मन्मथविकारानेकानि चित्तहारीणि चेष्टितान्यकरोत्। तथा हि—मदवलोकनाबद्धस्यन्दमानन्दाश्रुबिन्दुविसरमतिभास्वरेण रत्नादर्शतेजसा जनितमिति मुहुर्मुहुरपप्रथत्। मदीयलीलालापप्रदत्तावधानः शून्येन मनसा वन्दिनं सुभाषितान्यपाठयत्। मत्समागमध्यानमीलिताक्षः पुरःस्थापिते वृथैव तूलिकया चित्रफलके रूपमलिखत्। मदीयविभ्रमोत्पादितरिरंसश्चेतसा नीचसेन मुकुलितेक्षणो वीणारवानभावयत्। प्रयत्नातीतधैर्योऽपि मुहुर्मम सखीभिः सार्धमारब्धमुग्धसंलापायाः पर्यस्तसान्द्रदशनदीधितावधरदन्तवाससि मुहुरवस्रस्तकेशहस्तोन्न-

मनाय साविसंचारितवामकरतलायाः प्रकटपरिणाहे बाहुमूले मुहुर्मुक्तसविकारसीत्कारायाः शिशिरनीरधिमरुन्निरोधाय झगिति विन्यस्तबाहुस्वस्तिके स्तनयुगोत्सङ्गे मुहुश्चटुलनेत्रकञ्चुकाग्रपल्लवप्रकाशितनाभिदेशाया नगरसीम्नीव सरोमालिनि मध्ये मुहुस्तन्मुखार्पितदृशः कृत्वान्तरे सहचरीं सयत्नमाबद्धपरिधानकक्षायाः सहासविधृतस्रंसमानोच्चये काञ्चिधामनि मुहुः सत्वरमितस्ततः प्रचलितायाः प्रतिवेलविघटमानवेलाञ्चलदरदर्शिद्युतावूरुदेशे दृष्टिमापतन्तीं न वारयितुमशकत्।

क्षणाच्च तेन प्रचलितसविभ्रमैकभ्रुवा व्यापारितः स्वभावमधुरस्वरः स्वैरैरमुत्थाय पार्श्वादतिशयमनोज्ञाकृतिर्युवा कैवर्त एकः प्रणम्य सप्रश्रयं मामवोचत्—'देवि, सकलपृथ्वीपालमौलिमालाप्रणामलालिताङ्घ्रेः सिंहलद्वीपाधिपस्य राज्ञश्चन्द्रकेतोरात्मजः समरकेतुनामा कुमार एष सागरान्तरद्वीपविजयप्रसङ्गेन कथमपि प्रदेशमिममायातः। दृष्टं चास्मिन्नदृष्टपूर्वमन्तःकरणमिव तावकीनमकृतपुण्यजनदुष्प्रवेशमिदं देवतायतनम्। अत्र च प्रवेष्टुमयमिच्छति। तदादिश्यतां कोऽपि निजपरिजने योऽस्यावतारमार्गमुपदिशति'। इत्युदीर्य वचनमुपरतवाचि तस्मिन्नभ्यर्णवर्तिनीमवन्तिविषयाधिपस्य राज्ञः परमसंमतामतिप्रगल्भवचसं वसंतसेनाभिधानां विलासिनीमवदम्—'सखि, निवेदय यथावृत्तमद्यतनमस्मद्वृत्तान्तमस्य महाभागस्य' इति।

अभाषत च सा—'भद्र किं कथयामि। अभाजनमयं जनो भवत्समीहितावेदनसुखस्य। न हि सा भाग्यसंपन्मय, ययास्य भवत्स्वामिनो मनोभिमतमर्थं साधयामि। अद्यैव रात्राविर्यामिह्यानीता नायिका नः केनापि। अस्मावपि दिगन्तविख्यातयशसां महामण्डलपतीनामात्मजः। सर्वोऽपि वैदेशिकः कन्याजनस्त्रिभुवनातिशायिसौन्दर्यसंपदे। तदप्यदृष्टपूर्वं रूपमिव नृपकुमारस्यास्य दिव्यं देवतायतनमस्याः। कथमेतदीयान्विशेषा-

नवगच्छति। कथं चास्य तव नायकस्य प्रवेशे नितान्तमपि सस्पृहामार्गमुपदिशति। किं च संप्रति गता तावदन्यचिन्ता। आत्मापि चिन्त्यो वर्तते ऽस्याः। किमत्रैव जलधौ कालमतिवाहयिष्यामि। किमतोऽपि दूरं यास्यामि। किमन्यदीयावासविहितस्थितिरनभिप्रेतमात्मनो दशान्तरमनुभविष्यामि। किं वा भूय एव स्वभवनं नेतव्या। को हि जानाति सम्यग्देवगतिम्' इत्युदीर्य तूष्णीमास्थितायां तत्र कृतविलक्षस्मितो नाविकः स तमवादीत्—'कुमार, स्थितं तावद्देवतादर्शनम्। असौ तु दूराकृष्टधन्वना कुसुमकार्मुकेण मद्दर्शनैकशरणः कृतः। तेन विच्छिन्नवाञ्छितार्थविरसेनापि वचसा श्रुतेन मनागपि न खेदमवहत्, प्रत्युत तदेव बह्वमन्यत'। स्थित्वा च क्षणं स नाविकः पुनरवोचत्—'युवराज, दृष्टेयमदृष्टपूर्वा मानुषैरमसद्मनिवासिनामपि विस्मयकारिणी भूमिः, अवलोकितानि कल्पलतावनद्धविद्रुमपादपानि वनानि, वीक्षिता दर्शनेनैव सर्वहृदयं संज्वरद्रुहश्चन्द्रोदयक्षरितचन्द्रकान्तकन्दरानिर्झरसहस्रकल्पिताकालदुर्दिना महागिरेरस्य सानवो निवृत्तकौतुकैरपि। किमद्यापि विलम्ब्यते। प्रसादयामः प्रतीपम्। पृष्ठतस्त्वामनवलोकयन्नाकुलो भविष्यत्यशेषः परिजनः। विक्लवत्वमुपयास्यन्ति सेवकाः। तदद्यापि यावत्प्रयाणखेदनिःसहो राजकुलममात्यलोको न याति, यावच्च वृत्तान्तमुपलभ्य भवतः सर्वतो जातसंक्षोभा न प्रधावन्ति भूमिपतयः, तावदनर्किता एव गत्वा समाश्रयामः शिबिरम्' इत्यभिहितः स तेन मत्सर्निर्धिपरित्यागकातरो न किंचिदस्य प्रत्युत्तरमदात्। पुनः पुनरनुबध्यमानश्च मधुरमधुरे भ्रुवोः कपोलयोरलकेषु च कृतासङ्गमाकृष्य कृच्छ्रादिव मुखाच्चक्षुस्तदभिमुखोऽभवत्।

अभाषत च मन्दम्—'सखे तारक, प्रतीक्षस्व तावत्क्षणमेकम्। अत्र क्षणे बलवदस्वस्थं मे शरीरम्, प्रवृत्ता शिरसि वेदना, दृढारम्भा जृम्भा, विजृम्भते निकामं रणरणकदायी केनापि कारणेन दारुणावेगो दाहज्वरः, यतोऽस्य विनोदनायास्मिन्नेव प्रचुरकर्पूरचन्दनप्रायपादपच्छायशीतले प्रदेशे मुहूर्तमेकमवस्थातुमभिलषति मे



हृदयम्, तथापि त्वं प्रमाणम्, इत्यभिदधाने तस्मिन्महाभागे स भूयोऽप्यभाषत—'कुमार, यद्यहं प्रमाणं तन्न युज्यते निमेषमात्रमपीह स्थातुम्। अतिबहुदोषमत्र प्रदेशे चिरावस्थानम्। एष च व्याधिरनावेदितोऽपि विदितोमया। निदानं चास्य विज्ञातम्। अत एव प्रतीकारहेतोः स्थानान्तरमितस्त्वां नेतुमिच्छामि। येऽपि कर्पूरचन्दनच्छायशिशिरः प्रशमहेतुस्त्वया परिकल्पितः प्रदेशः, सोऽप्यस्य तव शरीरसंतापस्य सन्निपातज्वरस्येव सुतरां संतर्पकः प्रकारान्तरेण शमयितव्यः। तदलमावेगेन। यथा सामर्थ्यमवसरेऽस्य यत्नसहमेव चिन्तयिष्यामि' इत्यभिधाय तन्त्रपानतवदनमप्रकटितस्मितः स्थानादचालयत्।

## मलयसुन्दरीचित्रलेखा पत्रलेखानां समागमः

अत्रान्तरे चतुरोदारवेषा यदृच्छया सरस्तटलताखण्डेषु कुसुमान्यवचिन्वती देवतार्चननिमित्तमागता तमुद्देशमेका द्वित्रिपरिचारिकापरिवारा स्तोकपरिणतप्रौढयौवना योषित्। ऊर्ध्वस्थितैव च सा समुपजातप्रत्यभिज्ञेव निश्चलतारकेण चक्षुषा सुचिरमवलोक्य मामुद्धुरस्वरेण ध्वनिना ससंभ्रमा समभाषत—'वत्से मलयसुन्दरि, कुतस्त्वम्। कथमेकाकिनी पतिता शून्यायामिहाटव्याम्। केनेयमीदृशी तव संपादितावस्था। हा, हतोऽसौ येन दुर्मेधसा तान्यपनीय चिरंतनानि सिचयरत्नानि कल्पतरुलतायामिव सर्पकञ्चुकशकलानि वल्कलान्यमूनि तव तनौ समारोपितानि। उत्तिष्ठ पुत्रि, परिष्वजस्व क्षणमात्रं जातमित्रभावं जनमिमम्' इति ब्रुवाणैव सा स्वयमुत्थाप्य मामर्शिथिलव्यापारितभुजद्वया कण्ठे गृहीतवती।

अहं तु तत्कालदुर्लभेन प्रकटितान्तःप्रीतिना तस्यास्तेन वचनविन्यासेन पूर्वपरिचयप्रकाशनपुरःसरेणेव समाश्लेषेण कृतसमास्वा(श्वा)सा परां निर्वृतिमगच्छम्। आदरव्यापारितमतिश्च 'क्व दृष्टा मया, क्व दृष्टा मयेयम्' इति चिन्तयन्ती चित्रलेखेयमिति तां परिज्ञातवती।

अत्रान्तरे पूरितवनान्तरालो नातिदूरे ससंभ्रमोल्लासितकनकदण्डोड्डामरकराणामग्रतः प्रधावन्तीनां वेत्रधारीणामुच्चचार मिश्रीभूतः श्रवणहारिणा चारणबन्धुजनजयव्याहारेण दूरनिर्हारी समुत्सारणध्वनिः।

अथातिमन्थरच्छत्रगतिसूचितविलासमन्दपदविन्यासा, विधूयमानधवलचामरा, सविभ्रमोल्लासितभुजलताभिरुभयतो वारललनाभिरनादरसंदानितदरास्या(श्या)नस्नानार्द्रकेशपाशा, क्वचिदप्यमुक्तश्रिया विजित्य वदनारविन्देन बन्दीकृतमिन्दुमिव चन्दनतिलकबिन्दुमलकिना ललाटफलकेनोद्वहन्ती धृतासिफलकाभिः परिवृता, समन्ततः साधितमहाप्रभावविद्याविवृद्धपौरुषावलेपाभिरनेकशतसंख्याभिरङ्गरक्षाधिकारनियुक्ताभिरङ्गनाभिरासन्नचारिणा समारब्धसेवोचितचटुक्रियेण मुहुर्मार्गवर्तिनीर्वनलता विवर्तयता मुहुः श्वासपरिमलाकृष्टमलिपटलमुत्सारयता मुहुः कपोलतललुलितमवतंसपल्लवमुल्लासयता मुहुर्नूपुरस्वनानुसारिणः सरःकलहंसकानुत्रासयता मुहुर्लग्नमवनीरजश्चरणयोरुत्तरीयाञ्चलेन प्रणुदता खेचरेन्द्रनारीजनेनानुगम्यमाना, तीरस्थितं तत्प्रासादरत्नमवलोकयितुमुत्तरात्सरस्तीरपुलिनादखिलदक्षिणश्रेणीपतेर्विद्याधरचक्रवर्तिनश्चक्रसेनस्य महिषी पत्रलेखाभिधाना पादचारेण तत्रैवागच्छत्। ऊर्ध्वस्थितैव च सा विलोक्य तदग्रतोभूताभिः 'इदं सुन्दरम्, इदं सुन्दरम्, इह दीयतां दृष्टिः, इह दीयतां दृष्टिः' इति ससंभ्रमाभिः प्रकाश्यमानविभागं प्रधानसहचरीभिरतिचिरमुत्पन्नविस्मया परिजनमपृच्छत्—'अपि नाम ज्ञायते कस्येदम्' इति।

अथ समीपस्थिता सकलकोशागारसंरक्षणाधिकारनियुक्ता मुक्तावली नाम पालिका व्याहरत्—'देवि, तत्त्वतो न ज्ञायते। युक्त्या तु निश्चितमिदम्। यस्य मार्गणाय पूर्वेद्युरितः सुवेलपर्वतं गतो गन्धर्वकः, तदेव तेनेदं हारिचन्दनं विमानमानीतम्। यातोऽत्र यद्वस्त्रयुगलमाभरणं च भर्तृदारिकया गच्छतस्तस्य प्रसादीकृतं

तदिदमविकलमास्ते' इत्युदीर्य तुष्णीकाभवत्। सा तु तन्निपुणमवलोक्य प्रत्यभिज्ञाय सशोकेन निश्चललोचना स्थित्वा मुहूर्तमवनतमुखी सखेदमवदत्—'भद्रे, यदाह भवती तथैव सर्वम्। केवलमिदं न ज्ञायते स गन्धर्वको वराकः कामवस्थां प्राप्तः' इत्यभिदधाना समागत्य चित्रलेखायाः संनिधावभवत्। सकौतुकानुरागमर्पितेक्षणा च मयि स्थित्वा मुहूर्तमीषद्विवर्तितमुखी 'सखि, केयमत्र भवती, क्व वा जातपरिचया भवत्या' इति नीचैस्तामपृच्छत्। सा तु पृष्टमात्रैव तया समुत्सृष्टदीर्घनिश्वासा प्रवर्तमानमनवरतमक्ष्णोरमक्षणमुत्तरीयाञ्चलेन प्रणुदती बाष्पवेगं सोद्वेगमवदत्—'देवि, किमहमावेदयामि मन्दभाग्या। दैवमत्र प्रष्टव्यम्, येनासौ संभ्रमकारिणा निरस्तकरुणेन देहमात्रेणैव भिन्ना तवापि प्रश्नविषयतां नीता। प्रापिता चेयमुपजातपरिचयलोकशोकोद्रेकहेतुमेकपद एवातिकष्टमीदृशमवस्थाविशेषम्। शृणु कृतावधाना। श्रावयामि येयं यत्र चानया सह पूर्वमुपजातः परिचयः। इदं हि तावद्विदितमेव। प्रियंवदाया यथा सहोदरी रूपसौन्दर्यखण्डिताखिलखेचरीचक्रचारुत्वगर्वा गन्धर्वदत्ता नाम मे स्वसा यवीयस्यासीत्, सा दशवर्षदेशीया सुवेलपर्वते पितृगृहमधि वसन्ती वैताढ्यगिरिनिवासिना मातामहेन राजकन्योचिताभिः सहकलाभिरकाल एव परिणतं लास्यविद्यारहस्यमवलोकयितुमुत्पन्नकौतुकेनादरान्नीता स्वनगरीं वैजयन्तीम्। तस्यां पुरि कदाचिदभ्यमित्रीणे राजनि रजन्यामुपेत्य सारकरितुरगपत्तिपरिवृतेन जितशत्रुनाम्ना शत्रुसामन्तेन पातितः प्रतिभनमुद्भूतभीतवनिताजनाक्रन्दो महानवस्कन्दः। तेन निर्दयव्यापारितनिशितशस्त्रदुवरिण सर्वतः प्रसारता विरचितव्यूहवीरपुरुषदुःखप्रवेशेन क्षणादक्रियत कांदिशीको नगरलोकः।

ततः स्तोककालसूत्रितायोधनेषु निधानमुपगतेषु प्रधान-

पुरुषेषु, प्रहारविकलकाययष्टिषु यमातिथिभूतेषु यामिकेषु, अदृष्टरिपुपराजयोपपत्तिष्वपसृतेषु पत्तिषु, गृह्यमाणमन्दुरावाजिनि विदार्यमाणदुर्मदद्विपे विलुप्यमानकोशकलशे व्याकुलीभूते समन्ताद्राजकुले, समरकेलिनामान्तर्वंसि(शि)कः प्रविश्य कन्यान्तःपुरमुपजातकरुणस्त्रासतरलितनयनतारकाम् 'हा तात, हा तात, इति विक्लवं व्याहरन्तीं गन्धर्वदत्तामुत्क्षिप्य गगनमुदपतत्। प्रस्थितश्च निमित्तीकृत्य तत्पितुः पस्त्यमगस्त्यचरितेनाघनाघनायुधप्रहारच्छिन्नकायोऽतिकृच्छ्रेण दक्षिणजलराशिवेलावनाश्रयं प्रशान्तवैरं नाम तापसाश्रमं प्रापत्। अवतीर्णमात्रश्च पत्रलतरुनिकुञ्जे कूजत्समदकलकण्ठे तदुपकण्ठनिम्नगारोधस्यधिकाध्वसंधुक्षितक्षतव्यथाव्याकुलस्तत्कालसंनिहितस्य कुलपतेः समर्प्य तामल्पीभूतशोकः परलोकमगमत्। आघ्राते च तस्मिन्दीर्घनिद्रया दुःखविद्राणवदनाममृतनिष्यन्दसुन्दरैराश्वासनालापैरपगतविषादां विधाय तां कुलपतिस्तपोवनमनयत्। अवर्धयच्चापत्यबुद्ध्या बद्धपक्षपातः। प्रतिदिवसमासादितोद्दामयौवनां च कदाचिद्द्रष्टुमागताय गोप्त्रे सकलदक्षिणापथस्य पार्थिवाय ख्यातमहसे कुसुमशेखराभिख्याय प्रायच्छत।

अथ स राजा समुपजातहर्षस्तदासादनेन कृतकृत्यमात्मानं मन्यमानस्तत्रैवाश्रमे तामुपयम्य सम्यग्विहितेन विवाहविधिना गन्धर्वेण गर्वोद्धुरः स्वनगरीं काञ्चीमागच्छत्। अकरोच्च तस्याः कनकवेत्रच्छत्रचामरादिराज्यालंकारसूचितमहोदयं महादेवीपट्टबन्धम्। उद्वहतानुरागमज्ञातपरस्परवियोगं भोगमुखमुपभुञ्जानयोश्च तयोरतिक्रान्तेषु त्रिचतुरेषु संवत्सरेषु रूपनिर्भर्त्सितरतिरेकैवात्मजा जाता। मलयपर्वतः प्राप्तिहेतुरस्याः पारम्पर्येणेति पर्यालोच्य पित्रा तस्यैव भूधरपतेरभिधानेन लाञ्छितं मलयसुन्दरीति ललितं कृतं नाम। सेयं क्रमप्राप्तयौवना प्रकर्षमागतेन

गीतनृत्यादिकलाकौशलेन देशान्तरेषु लब्धख्यातिरपहृत्य खेचरैः पञ्चशैलकाख्यमन्तरद्वीपमुदधिर्दक्षिणस्य क्षणदामुखे प्रसुप्तैव नीता .....यात्रामायातया कार्तिकमासपौर्णमासीनिशीथे मयादृष्टा।'' निशम्य चाासाविमं चित्रलेखालायमुपजातपूर्ववृत्तान्तस्मृतिः..... मां पुनःपुनर्गाढमाश्लिक्षत्।

## मलयवतीतिलकमञ्जर्योः विवाहः

अत्रान्तरे गन्धर्वकानुयातस्त्वमेवायात इति निवेद्य विद्याधरगिरौ कुतूहलकृतप्रश्नस्य समरकेतोर्वारणापहारतः प्रभृति पूर्ववृत्तमात्मीयवृत्तान्तमुपशान्तवचसि कोशलाधिपसुते सर्वोऽपि पार्श्ववर्ती नभश्चरजनः परां प्रीतिमवहद्विहाय सिंहलेश्वरसुतम्। स तु न कांचिदैक्षत, न किंचिदाभाषत, न कस्यचिद्वचनमश्रृणोत्, न कस्यचित्प्रतिवचः प्रायच्छत्। केवलं वञ्चित इव, छलित इव, मुषित इव, केनाप्यावेशित इव, विमुक्तदीर्घनिश्वासः, क्षणं मूर्छामनुभवन्, क्षणं चेतनां प्रतिपद्यमानः, तूष्णीक एवातिष्ठत्। तं च तदवस्थमस्थान एवोपजातचेतोविप्लवं विलोक्य हरिवाहनश्चिन्तितवान्—' .....नमयमनन्तरभवानुभूतमाकर्ण्य सुरलोकवृत्तान्तमुपजातपूर्वजातिस्मृतिर्विस्मारितः प्रभवता शोकेनात्मानम्' इति निश्चित्य पीडितोऽपि तच्चित्तदुःखेन स्वस्थ इवाजातदुःख इव मध्यस्थ इव पटुपदप्रचारया वाचा तमुच्चैरवोचत्—'युवराज, किमिदमितरप्राणिसाधारणं तवाचरणं क्वचिदद्यापि परमप्रमादवसतेरवारिताक्षप्रचारहारितस्वार्थसंपदोऽष्टापदद्यूतस्येव स्मरसि तस्य त्रिविष्टपावासस्य। किमत्र स्मर्यते। एकत्रापि दिवसे यान्यतीतानि तान्यपि स्मर्तुमखिलान्यशक्यानि, किं पुनरसंख्यातासु वर्षकोटिषु प्रकटविभवेषु तेषु तेषु स्वविमानसद्मसु प्रभूतेषु भारतैराक्तादिषु वर्षेषु मेर्वादिषु नगेन्द्रेषु पद्मादिषु कूलाद्रिचूलाह्लदेषु नन्दनादिषूद्यानेषु त्रिपथगासिन्धुपुरःसरीषु महासरित्सु

पुष्करक्षीरोदमुख्येषु नीरधिषु नन्दीश्वरप्रभृतिषु च वरद्वीपेष्वन्येषु च निसर्गसुन्दरेषु भुवनभागेषु विहरता सार्धमन्वहमनुचरैः कलत्रैर्मित्रैश्च यानि प्रमादपरतन्त्रेण प्रस्तुतानि हसितजल्पितक्रीडितानि तानि शक्यन्ते। किं च तैः स्मृतैरपि स्वप्नविज्ञानसदृशैः फलं साध्यते। केवलं यत्तदा स्वर्गच्यवनसमये म्लायता दिव्यमाल्येन, ग्लायता गात्रलावण्येन, मीलयता नेत्रयुगलेन, स्खलता निर्देशदानेन, नश्यता त्रिदशभावेन, मूर्छता मनसि लोकान्तरगमनचिन्तादुःखेन, विलपता परिजनेन, क्रन्दन्तीषु पार्श्वतो निरानन्दासु स्वयंप्रभाप्रभृतिषु प्रियाङ्गनासु यन्मनागपि न चलितं सृतं च यदनेकशः सदसि विस्मितैः सहवासिविबुधैस्तदधुना विधूयते वैक्लव्येन सत्त्वम्। तदलमतीतवस्तुनिर्बन्धेन। विधेहि धैर्यमवलम्ब्य सत्वरः सांप्रतकालोचितं कृत्यम्। उत्तिष्ठ तावत्। गढमुत्कण्ठितायाः सुचिरकालादुपलभ्य दर्शनं दर्शय द्रविडराजदुहितुरात्मानम्। सा हि ते जन्मद्वयप्रणयिनी पूर्वजातिस्मरणविह्वला दिव्यरत्नाङ्गुलीयकालंकारदर्शनात्प्रभृति मूर्छां मुहुर्मुहुरनुभवन्ती वनप्रवेशात्प्रभृति वार्तायां च सर्वात्मना तव क्षीणायां क्षणे क्षणे मरणदुःस्वादप्यधिकवेदनं शोकमुद्वहन्ती दुःखमास्ते' इति वारंवारमुच्चारयति हरिवाहने त्रपावनतवदनोऽङ्गाधिपः शनैरवदत्—'कुमार, किमर्थमावेदयसि मे। यदि तदाश्वासने यत्नः, प्रहिणु कंचिदस्मदागमनवार्ताहरं स्वानुचरम्। अहं तु कृतविप्रियः प्रियंवदाभावतः प्रभृति तस्यास्त्रपया न शक्नोमि वीक्षितुं वदनम्' इति वदत्येव तत्र प्रविश्य विहितप्रणामा प्रतिहारपाली हरिवाहनं व्यजिज्ञपत्—

'विजनमादिश्यताम्, येन द्वारि विद्याधरपतिर्विचित्रवीर्यस्य वल्लभतमः कल्याणको नाम दारकः श्रावयति कार्यं किमपि कमनीयम्।' आकर्ण्य चैतदपसृतेषु स्वयं समरकेतुप्रभृतिषु सगौरवं व्याहृतो वेत्रधार्या प्रविश्य स कृतप्रणामः कुमारस्याग्रतो लेखमक्षिपत्। उपनीतविष्टरोपविष्टे च तस्मिन्नयोध्यापतिसुतः

सदोषमादाय तमवाचयत्–'स्वस्ति। त्रिकूटाचलाद्राजा विचित्रवीर्यः स्वसौन्दर्यतुलितसुरलोकशोभासमृद्धावुत्तरश्रेण्यामाश्रितजनशरण्यमनन्यसाधारणगुणाधारं महाराजपुत्रहरिवाहनमशेषपृथ्वीविजयलाभाशिषा संयोज्य निजशरीरारोग्यवार्तया सुखयति। कथंचिदुपजाततर्षेण झटिति संजातघटनं वरत्वेन परिकल्प्य भ्रातरं ते समरकेतुमद्यैव वत्साया मलयसुन्दर्याः प्रस्तुतो मया विवाहोत्सवः कर्तुम्। आनीता च रभसेन समनन्तरेऽहनि। तथैव बिभ्रति वनवासवेषमेषा स्वनिवासमायुष्मती। निमन्त्रितो मित्रज्ञातिलोकः। स्थापितं लग्नम्। अन्यदपि कृतमशेषमात्मसे(शे)मुखी (षी) समुचिंत कृत्यम्। तदयमल्पबुद्धिबन्धुजनजल्पबाधितो मत्संकल्पः कल्पायुषा नोपहास्यतां नेयः' इति विचार्य चामुष्य तात्पर्यमुपजातहर्षो हरिवाहनः सविस्मयेन मनसा व्योमचरदारकमप्राक्षीत्–'सौम्य, कथमन्यद्वीपवासिना तातेन दूरदेशान्तरादायातमात्रो युवराजसमरकेतुरवगतः।कथमविज्ञातकुलशीलःस्वदेशप्रभवेषु गुणवत्सु विद्यमानेष्वन्येष्वनेकेषु विद्याधरदारकेषु क्षितिगोचरोऽपि वरत्वेनाङ्गीकृतः। कस्य बुद्ध्याध्यवसितमिदमकस्मादुत्सुकेन भूत्वा कार्यम्' इति पृष्टः प्रहृष्टचेतसा स पुनरब्रवीत्–'देव, सर्वमावेदयामि। श्रूयताम्। इतो वासरादनन्तरेऽहनि जिनायतनकाननान्निर्गत्य निजराजधानीमभिप्रस्थिते देवे गतावामात्मभवनं भर्तृदुहितरि तिलकमञ्जर्याममन्दसंवृतानन्देन विद्याधरधुराभृता प्रस्तुते सविस्तरमुत्सवे, ध्वनत्सु सर्वतो वादित्रेषु, नृत्यत्सु प्रतिगृहं पौरेषु, प्रवृत्तासु नगराङ्गनामङ्गलगीतिषु, वितीर्यमाणेष्वन्योन्यमनिवारितकरेषु कुसुमताम्बूलपटवासेषु, पिष्टातकरजः पुञ्जपिञ्जरितरोदसि, विसारिमागधजनजयध्वनौ, अबाधितागच्छदनिबद्धलोकदुःखलभ्यान्तरे क्षणेनैव जातेऽन्तःपुरे, सत्वरमुपेत्य सविकासमुखपङ्कजा मृगाङ्कलेखा नाम तिलकमञ्जर्याः प्रधानसहचरी स्वावासमन्दिराङ्गणनिहितमणिपर्यङ्किकोपविष्टामुत्सवापतदनेकानीकनायकपुरंध्रिपरिवृतां प्रणम्य राजमहिषीं पत्रलेखामवोचत्–'देवि, वर्धसे

सार्धमेवागतेन द्वितीयेन मलयसुन्दरीवरागमनोत्सवेन' इत्युदीर्य देवेनैव प्रथमदर्शने तिलकमञ्जर्याः प्रियत्वेन कथितं यथाश्रुतम्। कुमारसमरकेतुं वरीता रमाख्यदेव्यपि तदाकर्ण्य निर्भरोदीर्णहर्षा तोषतरलिताक्षीं निरीक्ष्य निकषा निषण्णां चित्रलेखाम् 'सखि, स एष कल्याणानुबन्धी कल्याणसंपल्लाभः। तूर्णमुत्तिष्ठ। गत्वाद्यैव सर्वाङ्गविनिहतमहार्हमङ्गलालंकारां मलयसुन्दरीमेकशृङ्गादानय, येनैकलग्न एव तस्यास्तिलकमञ्जर्याश्च युगपद्द्वयोरपि निरूपयामि पाणिग्रहणमङ्गलम्' इत्यवोचत्। असावपि तदाकर्ण्य सप्रमोदा प्रत्यवादीत्– 'स्वामिनि, तवैव कृत्यमिदमसंनिधौ गन्धर्वदत्तायाः। किं पुनरिदं विचित्रवीर्यदेवेन कारयितव्यम्' इत्यादिष्टमास्ते दृष्टकालत्रयेण मुनिना। यदि समादिशसि तदनेनैव गत्वा त्रिकूटमधिकारिणं तमेव स्मारयित्वा विवाहविधये प्रवर्तयामि'। 'तथा' इत्यभिहिता च सा तदैवोत्थाय सर्वं यथोक्तमकरोत्। तदिति विज्ञापितं देवादिष्टम्। अधुना प्रस्तुतं समादिशतु देवः। प्रस्थापयतु जामातरं कुमारसमरकेतुम्। आसीदति समुदितैर्ग्रहगणितविद्भिरावेदितं करग्रहणलग्नम्। आस्ते वरमुखावलोकनोन्मुखोऽभिमुखमुत्थाय प्रीतमनसा प्रवेशितो विचित्रवीर्यदेवेन काञ्चीपाललोकः। पितुः पर्यङ्के निषण्णा सुता विवाहदर्शनोत्कण्ठिता तिष्ठति। अनारतप्रवृत्तहर्षाश्रुबिन्दुः श्वश्रूर्गन्धर्वदत्ता सौधशिखराग्रसङ्गी मुहूर्तमपि मार्गावलोकनान्नोपारमति। दुस्तरव्यसनबन्धुसुन्दरीपुरःसरो मलयसुन्दर्याः सखीवर्गः। स्पृहयतितरां गन्धर्वकागमनाय संप्रत्येव विश्रान्तवैराश्रमपदादानीता नित्यवनवासदुःखदुर्बलाङ्गी तरङ्गलेखा। निमन्त्रितागतोऽन्योऽपि बहुमन्यते समासीदन्तमुत्सवमुत्सुको विद्याधरलोकः' इति निगद्य तूष्णीमभूत्। कोसलेन्द्रतनयोऽप्युपसांजतहर्षः सतर्षमाहूय सिंहलेश्वरसुतं दर्शयित्वा विचित्रवीर्यलेखमाख्याय कल्याणकाख्यातमादितः प्रभृति पूर्वदिनवृत्तान्तमाबद्धकरसंपुटः सहासमलपत्–'चम्पाधिप, किमद्यापि चिन्तयसि। उत्तिष्ठ। कुरु गुरोर्वचनम्। अद्यापि

दृढनिश्चया प्रवर्तितापि ज्ञातिलोकेन दृष्टे त्वयि त्यक्ष्यति गृहीतानि वनवासवल्कलानि मलयसुन्दरी' इत्यभिधाय संनिधापितप्रचुरमान्यखेचरबलं सुवेलं प्रति प्राहिणोत्। कुमारोऽपि हरिवाहनस्तेनातर्कितेन समरकेतोर्विवाहोत्सवगमनेन विस्मापितमनाःसायमाययौ स्वावासम्। अवसितायां च शर्वर्यामुत्थाय शयनादास्थानमण्डपमुपागमत्। निषण्णस्य चास्य निर्वर्तित तिलकमञ्जरीसंगमोत्सवेन राज्ञा चक्रसेनेन तत्संबन्धसचिवैः प्रसिद्धनामभिर्विद्याधरनृपैरपारविभवैश्च नगरपौरैर्नृपाभिषेकमाङ्गलिकसंपादनाय प्रस्थापिताः प्रगल्भवचसः प्रधानपुरुषाः प्रविश्य दिव्यांशुकविलेपनालंकारकुसुमताम्बूलातिसर्जनेन पूजामकार्षुः। प्रपञ्चितबहुप्रकारोपचाराश्च स्थित्वा मुहूर्तमर्चितास्तेनाजग्मुर्यथास्थानम्।

एकदा च देहारोग्यवार्तोपलम्भार्थमहरहःप्रेषितैराप्तपुरुषैः प्रकाशितस्नेहमीक्षितुमनाः खेचराधिपं चक्रसेनमाप्तपरिमितपदातिबलपरिवृतो निरन्तरग्रामनगरामुदारतरखण्डमण्डितोदग्रदेवतायतनमण्डलामनेकजलरङ्कुकुररकारण्डवाकुलसरित्सरोवरप्रेक्षणीयां सदक्षिणश्रेणिमागमत्। आगतश्चाभ्यर्णमाकर्णितागमनेन गगनचरचक्रवर्तिना प्रत्युद्गम्य नीतो निजनिवासे ससंभ्रमादिष्टहृष्टपरिजनोपचारप्रीतचेताः स्नानभोजनादिकं कर्म मध्याह्निकमकार्षीत्। अपराह्नसमये च प्रस्थानाय तेन पृष्टः प्रक्रमे चक्रसेनस्तत्रैव तस्य कतिचिद्दिनान्यवस्थितिमयाचत। स च पराङ्मुखोऽपि परोपचारेषु प्राध्वंकृतस्तिलकमञ्जरीप्रेमानुबन्धपाशबन्धेन तदेवास्य प्रत्यपद्यत वचनम्। अन्यदा च निरवद्येऽह्नि निपुणावधारितवधूवरगृहबलेन पृष्टसकलज्ञातिना दिशि दिशि वितीर्णमित्रनरपतिनिमन्त्रणेन निर्मापितोदारनगरमण्डपशोभेन भोजितसुहृद्बन्धुपरिजनेन पूजितगुरुद्विजातिपरिषदा नभश्चरेन्द्रेण दत्तामुपयम्य सम्यगनुभूतसकलोद्वाहमङ्गलां तिलकमञ्जरीम्, स्थित्वा च तन्मातृपक्षस्य चक्षुःप्रीतये यथोत्तरमनुत्तरप्राप्तनवन

वोपचारचारुण्यनन्तरभवानुभूतपुरुहूतलोकावाससौख्यस्मृतिहरा-ण्यहानि कतिचिदकृतात्मीयपरकीयलोकावलोकनैरनीक्षितार्थ्यनर्थि-जनमुखच्छायैरनालोचिताल्पानल्पवित्तव्ययैरगणितगुणज्ञागुणज्ञवि-भागैः कृतार्थीकृत्य वस्तुविसर्गैः कृत्स्नमपि दक्षिणोत्तरश्रेणियाचक-गणम्, तत्कालमतिशयचारुरूपामारोपितचतुरचित्रालंकारः त्रय-मेव चित्रलेखया सप्रपञ्चमुपरचितमण्डनामारोप्य पुरतस्तिलकम-ञ्जरीमञ्जनाद्रिमिव चन्द्रिकापूरेण दलितकर्पूरकणचूर्णरोचषा चन्दनद्रवेण पाण्डुरितगात्रमारूढः, प्रौढरागगैरिकपरागपाटलविक-टकुम्भकूटं प्रधानजयकरिणमुपरि विधृतेन फेनपटलत्विषा मुष्ण-न्नुष्णवारणेन जिष्णुतामनुष्णोष्णकिरणबिम्बयोरुपान्त चालितचारु-चामरकलापः·····प्राप नगरम् ।

# कृष्णचरितम्

## श्रीमहाविष्णोः भूमौ अवतरणाय संकल्पः

हरिरपि सबहुमानमयि सर्वंसहे मा शोचीरचिरेणैव कालेन वसुदेवगृहेऽवतीर्य भारं तवावतारयिष्यामीति कथयन् पश्चाद्-भागप्रसारिते पाणौ ताम्बूलकरङ्कवाहिन्या वेलावनदेवतयार्पितां वीटिकामस्यै प्रायच्छत्। स्वीकृत्य च तामाज्ञामिव स्थितां द्वितीया-मानन्दबाष्पवर्षिदृशं वसुधां सुरपरिषदं च निजनिजनिवासगमनाय व्यसृजत्।

तस्य च नयनकमलमधुकरी देवी देवी योगनिद्रा कदाचित् तदादेशेन षडाय(तन)बलिसद्मगतानसुरान् बलिसंक्रमेण देवकी-गर्भे निवेशयामास। जातमात्रांश्च तान् वसुदेवनिवेद्यमानजन्मनः कंसो नृशंसकर्मा बालकदलकाण्डानिव मत्तवेतण्डः क्षितावास्फा-लयत्। सप्तमे च गर्भे वसुदेववधूरनधावदातवर्णमुक्तामणिमिव शुक्तिरखिलसुमनश्श्लाघनीयमर्थमिव सत्कवेरुक्तिर्देवस्य चक्रपाणेः शेषाभिधानमंशमशेषविश्वंभराधारमधारयत्। तस्य च गर्भस्थित-स्य देहप्रभयेव पाण्डुतां वपुषि धारयन्ती निगलभरातिशयादिव मन्द-मन्दगमना सुतनिधनशुचेव शिथिलपानभोजनरुचिरुपारूढकालिम्ना स्तनमुखेनेव भर्तुर्निविदयामास दौहृदम्। देवी च योगनिद्रा प्रावृडिव गर्भमनतिप्रौढमिव तस्या जलमिव कादम्बिन्याः संकृष्य रोहिण्या नन्दव्रजकृतवसतेर्वसुदेवधर्मपत्न्याः सागरशुक्तेरिव गर्भे संक्रामया-मास।

कंसभयेन देवक्या गर्भध्वंसोऽभवदिति ववृधे जगति परिवादः।

सा तु प्राप्ते मासि वैजनने सकलजनवन्दनीयं प्रतिपदिव नवहिमकरं मरुत्वदाशाप्रसाधकमुदधिवेलेव ग·····र्यमखिलभुवनधुर्यं कद्रुरिवोरगपतिं बलभद्रं तनयमजनयत्। जातेन तेन सौम्येन द्विजपरिकृतजातकर्मव्रतेन सुतरामरोचत रोहिणी।

## नारदस्य वसुदेवसदनसमासादनम्

वर्धमाने च तस्मिन् नन्दव्रजनयनानन्दकृति कदाचित् सनकसनन्दनप्रभृतिमुनिगणाग्रगणनीयो नारदस्तपोनिधिरनारतममरसरिदम्बुपूरमज्जनादिव स्फटिकगिरिकटकवासपरिचयादिव भसितोद्धूलनवासनातिशयादिव हृदयस्थितगौरीपतिमकुटचन्द्ररोचिरुद्गमादिव शुभ्रमूर्तिरभ्रगङ्गातरङ्गपवनतरलिताञ्चलेन कल्पितोत्तरीयकृत्यः शिरोभागनद्धपारिजातमञ्जरीचञ्चरीकझंकृतिच्छलान्निक्वणन्तीमिवात्मना श्रुतिदेवताचरणमञ्जीरशिञ्जितानुबन्धिनीमिव प्रकोष्ठदेशवलमानद्विगुणिताक्षवलयेन पाणिना धारयन् वीणां अनवरतगीतानन्दितपशुपतिप्रसादितामासक्तगौरीवामस्तनकलशकस्तूरिकाधिवासितैकभागां नमेरुकुसुममालिकामुत्तमाङ्गेन बिभ्राणस्तत्क्षणसंस्कृतपुरातनरणश्लाघाशिरःकम्पदरशिथिलबन्धनेन जपाकुसुमपाटलत्विषा जटाकलापेन परिष्कृतांसदेशो नभसोऽवतीर्य वसुदेवस्य सदनमाससाद।

आगतं च तमानकदुन्दुभिरानन्दमन्थरगतिः प्रत्युद्गम्य कृतप्रणामः सविनयमर्घ्यादिकया सपर्यया पर्यतोषयत्। आसनासीनमासन्नदेवकसुताकरतरलिततालवृन्तपवनापनीतगगनावतरणखेदमवनावेव नातिदूरमुपविश्य कृताञ्जलिरब्रवीत्। भगवन् पूर्वस्मिन् जनुषि मया किं वाचरितं तपः। को वा धर्म उपार्जितः। किं वा प्रतिपादितं द्विजेभ्यः। का वा कृता सपर्या गुरूणाम्। कानि वा दैवतान्याराधितानि यदेतदभ्रमिव सुधावर्षमखिलदुरितदूरीकरणकारणं भावुकोदर्कमनुभूयते भवदालोकनसुखम् इति।

आकर्ण्य तस्य वाचं महर्षिः सहर्षमभाषत। महाभाग कियदेतन्मदालोकनं नाम। अल्पीयसानेहसा सुरसिद्धगन्धर्वविद्याधरैरपि प्रार्थनीयदर्शनं सुदर्शनादिदिव्यायुधधारिणं पुण्डरीकनयनं पुरातनं पुरुषमालोक्य चक्षुषी चरितार्थयिष्यसि। तदपि कथयामि। श्रूयताम्।

## अदितिकश्यपयोस्तपः

पुरा किल सुरपरिषदलिकफलकविन्यस्तकस्तूरिकापङ्ककलङ्कितचरणनखचन्द्रपङ्क्तेरुपेन्द्रस्य पितरावदितिकाश्यपावपवर्गकांक्षिणौ त्रिदिवादमरापगापद्मपरागपुञ्जपिञ्जरेण वर्त्मना सिद्धिक्षेत्रमृषीणां किंपुरुषावासमचलं हेमकूटमवतीर्णौ। तत्र च मरकतमयत्त्रपटलनिबिडपतच्चिपिटितवियदाघातेन वृन्तच्युतमुक्ताफलमुकुलजटिलमूलभागेन परिणतदाडिमबीजशंकाकुलशारिकातुण्डखण्डनखणत्कारिपद्मरागात्मकफलस्तबकचारुणा मारुताधूतविविधांशुकनिकुरुम्बकरम्बिताखण्डलकोदण्डमण्डलाडम्बरेण बहुलमुद्दवथुकण्डूलवनवेतण्डगण्डकण्डूयनखण्डितस्कन्धकनकत्वचाकल्पतरुकाननेन कल्पितकुवलयविभ्रममुत्फुल्लकुवलयवनापदेशेन मज्जनावतरदृषियोषिज्जनावलोकनकौतुकोत्तानलोचनाभिरिव नवकमलकन्दशकलसंदेहिकलहंसबृन्दचर्वितशशिमणिसोपानकिरणकणिकाभिरभिनवनमेरुवल्कलक्षालनपाटलितटजलाभिर्भल्लहरिपवनविहितिलुलितकूलतरुकुसुमधूलिवासिताभिर्दीर्घिकाभिरापादितनयनोत्सवम् उत्सुकजलदेवतोपनीतनलिनीदलपुटकलशवारिपूरितालवालवलयैः परिहृतनिजनिजसमयेन सततमृतुगणेन संपादितसकलसंपद्भिरतुहिनकिरणकरैरप्यक्लिष्टबालकिसलयैरलिभिरप्यनाघ्रातगन्धकुसुमैः शकुनिकुलैरप्यशकलितफलैरनिलेनाप्यनाकुलितशाखाशिखैर्दिव्यर्षिकुमारवर्धितैरुद्यानतरुभिरुद्योतमानावसथं क्वचिद्विनीतशार्दूलपाल्यमानहोमधेनुकुल-

संकुलशाद्वलोपशल्यं क्वचिन्निजपक्षपवनवर्धितबालभुजङ्गोपगूढकण्ठनीलकण्ठमण्डलाधिष्ठिततरुणतमालतरुषण्डं क्वचिदभ्यर्णवनीविहारनिर्गतजननसनीडनीयमाननिजस्कन्धाधिरोपितक्षुधितसिंहशाबककरिकलभं क्वचिद्वनवराहदंष्ट्रासमीक्रियमाणनिम्नोन्नतभूभागं क्वचिदृक्षकुलोपहृतनिर्मक्षिकमधुगोलकमुदितमुनिकुमारिकावर्गं क्वचिद् वानरकरसंमार्जितसविधरूढकुटजकुसुमरजोराजिधूसरोटजाजिरं क्वचिदचिरप्रसूतहरिणीपुरोविकीर्णमरिचकिसलयमिश्रनवयवसं दिवाकरमण्डलमिव प्रकाशितमहातपस्फुरणं करिकर्णतालमिव बहुतरलताश्रितं ग्रीष्मदिवसमिव प्रौढतापसहितमालेख्यभवनमिव चित्रशिखण्डिमण्डलोद्भासितं किमपि तपोवनमवापतुः।

तत्र च तौ दंपती जटिनौ वल्कलवाससावेकतानेन चेतसा पुमांसमाद्यं ध्यायन्तौ हायनानि कतिचित् कन्दमूलफलैः कतिचिज्जीर्णपर्णेन कतिचित् पयसा कतिचिद् भानुरश्मिभिश्च वर्तयन्तौ कदाचित् पञ्चानलमध्यवर्तिनौ कदाचिदासारप्लुतवपुषौ कदाचिदप्सु विहितावगाहावतिमहत् तपश्चेरतुः।

तयोश्च भगवाननितरसुकरेण कर्मणा प्रसेदिवानशेषवैमानिकसेव्यमानमारूढविहगपरिबृढमुपदर्शितशङ्खचक्रलक्ष्माणं पद्मासहायमात्मानमदर्शयत्। सुतस्य सकलजगन्नयनसुकृतफलमिन्दिराचक्षुरिन्दिन्दिरशरदिन्दीवरममन्दसौन्दर्यकन्दमतिकन्दर्परूपमस्पन्दपक्ष्मणा दृशा निरूप्य चित्रीयते स्म तन्मिथुनम्। अदितिस्तु वरदानोद्यते तस्मिन् विस्मृतापवर्गवाञ्छा तत्सदृशमात्मजं लब्धुमाचकांक्ष।

हरिरपि विज्ञाय तदीयमिङ्गितम् आर्ये हृदयेन यादृशमभिलषितवती तादृशमेव तनयं मानुषे जनुषि जनयिष्यसीति कथयन् विहायः पथे परिषदा सह दिविषदां तिरोदधे। तावेव दक्षसुताकश्यपात्मजौ यु(वामु)त्पन्नौ। अचिरेणैव कालेन त्रयेऽपि जगतामात्मो-

पमानमपश्यद्देवः स्वयमेव युवयोः पुत्रतामुपयास्यति। जाते च देवकीगर्भात् (तस्मिन्) तस्मिन्नेव समये कंसाय भोजपतये करं दातुमागतस्य कलिन्दजातीरवासिनस्तव सुहृदो नन्दगोपस्य गृहिणी यशोदा नाम दुर्गां दुहितरं जनयिष्यति। भवता तु विगलितनिगलबन्धनेन संहृतदिव्याकृतिमात्मजमादाय नन्दघोषं गतेन प्रसववेदनानिमीलितदृशो यशोदायाः शयने निधाय तनयमस्याः सुतेयमानेतव्येत्यभिधाय विदितबलभद्रजन्मवृत्तान्तौ च तौ विधाय शरदम्बुद इव सपदि गगनमुदपतत्।

## श्रीकृष्णावतारः

अथ कतिपयवासरापगमे संपादनाय जीवलोकनयनानन्दसंपदः प्रवासनाय कंसमुखदनुजराजहंसानां निर्वापणाय सर्वामरमन्युदवशिखिनां भूयिष्ठतापहरणाय च भूतधात्र्या नवजलद इव दिवो देवक्या गर्भे भगवानवततार नारायणः। तस्य च गर्भस्थितस्योदयं प्रतिपालयन्त्याः श्रियः स्तनतटकर्पूररजसेव श्वसितानिलविप्रकीर्णेन सेवासंनिहितदिव्यशङ्खरोचिषेव प्रसरता विरहासह कलशोदधिकान्त्येव समुपगतया पाण्डिमानमवाप तस्या वपुः। उदरे तनीयसी तमालदलकान्तिरन्तः प्रवेशमलभमाना नारायणनाभिनालीकमधुकरमालेव रराज रोमराजिः।

अन्तरमान्तीमसुररिपोरङ्गकान्तिमुद्वहदिव मुखेन श्यामचारुचूचुकं चकाशे कुचयुगलम्। अपहाय प्रमदवनविहारदोहलमुन्मदकलमयूरकलकलमुखरिततमालषण्डासु तरलतरतर्णकालोकनवलितकर्णगोकुलाधिष्ठितशाद्वलासु वृषभरटितोद्भ्रान्तवनदेवताकटाक्षकुवलयितदिक्षु वनराजिषु हृदयं विहर्तुमभिललाष। भर इति शिथिलितशिरीषकर्णपूरादनायासाच्छिखिपिञ्छमवतंसयितुमुदभवाञ्छा। वीणानिक्वणितादपि वेणुरवं श्रोतुमनिशं व्यसनमभूद् काम्यम्। वापीविलासकमलोद्वहनादचलं धारयितुमाचकांक्ष

करः। कंसस्तु कदाचिदालोक्य तां हरिगर्भामचलगुहामिव विपिनगजो भूयसीं भियमभजत्। यदा नाम तामालोकितवान् तदा प्रभृति निरन्तरचिन्तापरायत्तचेताः संततमन्तःस्थितेन दैत्यारिणा नवलवलीकिसलयापाण्डुकपोलयुगलेन वदनेन जृम्भिकारंभतिम्यज्जलकणदन्तुरितपक्ष्मणा दृशा नर्तितोत्तरीयसिचयदेशैर्निश्वासमरुद्भिनन्दितपानभोजनेन दिवसव्यापारेण लब्धक्रशिमभिरङ्गैरनभिलषितैश्च परिजनालापैरनुजां निजामनुचकार दनुजाधिपः।

मन्दमन्दगतेरस्या(:) गुरुगर्भभरश्रमालसमाननं विहगपतिरलक्षिताकृतिः पक्षानिलेन मृदुना वीजयामास। पत्युरुत्सङ्गभुवि सुप्तायाः शयनागारं सुदर्शनादीनि दिव्यायुधानि पर्यभ्रमन्। स्वप्नेषु खगपरिवृढरूढा दिवमासाद्य नन्दनतरुमुत्खातमानयन्ती रणजितबलमथनबला सहर्षगन्धर्वपुष्पवर्षाभिषिच्यमानमात्मानमपश्यत्। प्रबोधसमये च सह मङ्गलवचोभिरश्रूयत पाञ्चजन्यध्वनिः।

अथ सा दशमे मासि घनसंतमसमलीमसदिशि निशीथे शशिनीव जलधिवेला जगदानन्दनं जनार्दनं जनमायामास।

तत्क्षणादेव सतां मनांसीव सकलद्रुमकुसुमान्यामोदमभजन्त। सुरसुदृशामिव दिशां मुखानि प्रसादमासेदुः। दिव्यर्षय इव दनुजप्रतापदहनानि निर्वृतिं भेजुः। दिशि दिशि जलधरपटलमिव मुखरितकुलगिरिकुहरं जगर्ज दिग्गजकुलम्।

अथ तमहिपृष्ठभोगमिवारिष्टशयनमधिशयानम् उच्चावचमणिभूषणरोचिराचिताकारमिन्द्रायुधकिर्मीरमिव नवनीरदमवनीमवतीर्णं कर्णिकारकमलकर्णिकापर्णवाससमासक्तबालातपमिव विहायसम् उटजनिवासिन्याः श्रियो विहरणाय पुण्डरीकषण्डमिव नयनयुगलसंसृजा रुचा सृजन्तम् अतिपाटलैः करतलैः शुभरेखात्मकानीव दिव्यानि शङ्खचक्रगदाधनूंषि धारयन्तं फलमिव तपस्तरोः सारमिव संसारस्य दिष्टिमिव दृष्टेः पितामहस्यापि पितरं चतुर्भुजं तनय-

मालोक्य विस्मयमयौ मनसि स्तुतिमयौ वचसि विकासमयौ चक्षुषि पुलकमयौ वपुषि मग्नाविवानन्दसिन्धावाप्लाविताविव·····सुखह्रदे तौ पितरौ सुधावर्षैरवगाढाविव बभूवतुः। अनन्तरमानकदुन्दुभिरानन्दगद्गदया गिरा पुरातनं पुरुषमाबभाषे।

देवदेव देवकीनयनानन्दकन्दलनकालमेघ मत्तः कमपि न मन्ये धन्यमन्यं जगति यदद्यापि सकलसुरासुरसिद्धसाध्यविद्याधरकिंपुरुषपरिषदभिलषितदर्शनमखिलभुवनवहनमङ्गलप्रदीपममुनैव चक्षुषा भवन्तमपरोक्षयामि। किंच प्राकृतसुतजन्मलाभादनुपमानमात्मानं मन्यन्ते जगति जन्तवः। मम तु न जाने जनयितुरपि जगतां जनकस्य कियानानन्दः। कियती कीर्तिः। कियद् वा भागधेयमिति। देवकी च प्रहर्षजलवर्षमुचं प्रमृज्य दृष्टिमिदमुदञ्जलिरवदत्। नाथ पुण्डरीकनयन नियतमदित्या रेणुकया कौसल्यया च मया पुरा कृतं सुकृतं नाकारि यतस्त्वया पूर्वमवतारेषु नैवंविधं रूपमुपदर्शितम् ! तदेतदासेचनकमपि नृशंसकर्मणः कंसादपोढशङ्काया मम कृते संहर्तुमर्हसि। किंच सकलमर्त्यालोकनागोचरप्रकारतेजोधरं मानुषाकारमप्रकटितबालभावं भवन्तमालोक्य कथं मदीयमात्मजमिव जगति विश्वसिति जन इति।

तदनु तदनुरोधेन रूपमापदपरं वेषान्तरमिव शैलूषः पुरातनः पुरुषः। तं च संहृतदिव्याकृतिमुपदर्शितशैशवमालोक्य कोमलतरपाणिपादं रुदन्तमालोकयतोस्तयोर्मनसि विस्मयेन पदमदीयत। तदा च वसुदेवस्तामवादीत्। अयि द्रुहिणजन्मना मुनिना यद- भिहितं तदल्पावशेषमखिलमालोकितम्। तदस्य रुदितध्वनिमा- कर्ण्य कारागृहद्वारपाला यावत् स्वामिने निजाय न निवेदयेयुस्तावदर्भकमादाय नन्दप्रियं व्रजामीति।

देवकीं च मूर्तमिव भागधेयमङ्के निधाय पुत्रं प्रेमरसेनेव हृदयन्निस्सरता निर्भरानन्दप्रवाहपरिवाहेणेव स्तनकलशमुखस्नुतेन पयसा स्नापयन्तीं नयनाभ्यां नलिनदलकोमलाभ्यामर्चयन्तीं मुहुः

कपोलयोश्चुम्बन्तीं मुहुः शिरसि जिघ्रन्तीं मुहुरालिङ्गन्तीं वत्स कदा तव वदनमुन्निद्रपुण्डरीकनयनं द्रक्ष्यामि। कदा सुधारसोद्गारिगिरः श्रोष्यामि। किमकारि तव यशोदया यद् वात्सल्यादङ्कपर्यङ्कशायिनं भवन्तं प्रस्नुतस्तनं पाययिष्यते। कति नाम दिनानि गोपिकावामनयनान्यस्पन्दन्त यानि निरूपयिष्यन्ति भवतः शैशवोचितानि चरितानि। धन्याः खलु ता व्रजवीथयो या या इतस्ततः करिकलभवत् पांसुषु परिक्रीडमानस्य तव दृश्यमानशङ्खपङ्कजानि पदानि धारयिष्यन्ति इति कथयन्तीं सत्वरमयि मुग्धे न किमपि जानासि। जायते कालातिपात इति वदतो हन्त भर्तुः क्लृप्तरक्षाविधिः सा कथंकथमपि तमर्भकमर्पयामास। वसुदेवोऽपि पाणिद्वितयशायिनं शाङ्र्गिणमुरसा विशालेन बालं तमालमिव शैलस्तटेन धारयन् गलितनिगलबन्धनः सूक्तानि मङ्गल्यानि जपन्त्या देवक्या निभृतपदमाद्वारदेशमनुयातो निद्राविधेयनिखिलद्वाररक्षको निर्जगाम कारागृहात्।

अथ मधुभिदुदयसंभवमानन्दबाष्पपूरमिव मुञ्चत्सु दूरमासारमम्बुवाहेषु गम्भीरगर्जितश्रवणभीताभिरिव भामिनीभिर्गाढमुपगूढे गूढोदरभवनभाजि पौरजने विरतजनसंमर्दविस्तृतेषु विश्रान्तवीणावेणुमर्दलध्वनिषु संविशत्स्विव चत्वरेषु सौरभोन्नेयसौधवातायनोद्गीर्णधूपद्विगुणैरगणयद्भिरिव गगनमभि विद्युदुद्द्योतं निशोरगीनिश्वासधूमनिभैस्तमोभिः कबलितासु रथ्यासु तुङ्गतरङ्गहर्म्यशृङ्गे प्रणालिकापातिजलनिर्झरजालझरत्कारमुखरेण जानुदघ्नपयसा राजमार्गेण पित्रा परित्रासलोललोचनेन नीयमानं निजनाथमनुगच्छन्नुच्छ्रितच्छत्रमण्डलानुकारिणा फणासहस्रेण वारयन् वारिधाराः सिषेवे शेषोरगः। प्रभावतस्तस्य विघाटितकवाटयुगलमिन्दूदयदलितदलपुटं कुमुदमुकुलमनुचकार पुरम्। निजमायानिघ्नचेतसि लिखित इव निश्चेतने निश्चलतारकचक्षुषि पश्यत्येव गोपुररक्षिणि जने नगरान्निर्गतस्य शौरेः कालियभुजङ्गद-

मनोपकृतेः प्रत्युपकर्तुकामेव मार्गं ददौ नन्दिनी कलिन्दस्य। वसुदेवस्तु तेन पार्श्वद्वयस्तिमितजलपूरेण तमालतरुकान्तारमध्यमार्गानुकारिणा करिकलभशिरोमौक्तिकप्रमाणसिकताकोमलतलेन सरितमतीत्य निरन्तरनिपतदासारधारमानकह्रद्धेनुकाधिष्ठितोपकण्ठं संवेशविवशगोपजनं गोकुलं विवेश।

तत्र च निवातनिश्चलप्रदीपे मधुमथनदर्शनोद्यतनयन इव सूतिकाभवने स्थितां प्रसवसमयमूर्छामुकुलितदृशं मुदितरवमुखरमुखदुहितृकां यशोदामामीलितवारिरुहामभ्यर्णकूजत्कलहंसिकामब्जिनीमिवापश्यत्। तस्याश्च शयने शनैर्निधाय शिशुम् आदाय कुमारिकां पुरोगतेन वर्त्मना सद्म निजमाजगाम। ततः पुरेव घटितेषु कालायससर्वकवाटेषु पुनरपि निगलितचरणयुगले च वसुदेवे देवकीशयनशायिनीं रुदतीमाकर्ण्य दुहितरं बन्धनागार- रक्षका राज्ञे सुतोत्पत्तिमावेदयामासुः। स च तद्वचनं श्रुत्वा दण्डाहत इवोरगः सत्वरमुत्थाय शयनतलान्निद्रावशेषजिह्मतारकेण चक्षुषा ससंभ्रमं सावेगमाविष्ट इव ग्रहगृहीत इव मत्त इवोन्मत्त इव श्लथबन्धमन्तरीयं कुन्तलभरं चानियमं तत्क्षणप्रतिपन्नदौस्थ्यां धृतिमिव धारयन्तीं यष्टिमाददानो वदने वर्त्मनि च विसंस्थुलैः पदैर्बन्धनागारमगमत्।

## रुक्मिणीपरिणयः

अथैकदा रथाङ्गपाणिर्जरासन्धबन्धुना बद्धवैरेण रुक्मिणा शिशुपालाय दास्यमानां निजगुणहृतहृदयां रुक्मिणीं हठादादातु-कामः कामपालतिलकितेन महता बलेन यदुपुरान्निरगात्। निर्गतश्च निरन्तरोदस्तकुन्तमुखदलितनालिकेरफलगलितशीकरारब्धदुर्दिनेन सुभटभुजविलसदसिलतामरीचिनिचयमेचकतमकीचकतमालषण्डेन वेतण्डकुम्भसिन्दूरलम्बितिलकायमानबालत्वक्सारपत्रेण करेणुकारूढवारवर्णिनीमुहूर्तकर्णपूरायमाणकर्णिकारकुसुमेन गन्धानुसारधावितरुणयोधगृह्यमाणकस्तूरिकाहरिणयूथेन सरभ-

सकरभकबलितसरलकिसलयेन बडबाधिरूढसुभटवधूटीकुचतट-कुङ्कुमपाटीरपङ्कभावितचम्पकलातागुच्छेन तुरगखुरखनित्र-चूर्णितैलाफलक्षोदवासितरोदसा वेलवनवर्त्मना लवणोदमतीत्य पञ्चषैरेव वासरैरासससाद कुण्डिनपुरम्।

तत्र च मगधपुण्ड्रकाधिपप्रभृतिबन्धुवर्गपूरितेन चेदिपतिना श्वोभाविनि शुभे लग्ने परिणेष्यमाणामयुग्मबाणास्त्रदेवतामिव शरीरिणीं रुक्मिणीं रथमधिरोप्य यदुपुरमभिप्रतस्थे।

प्रयान्तं च तं कन्यकारत्नहारिणमपरे कल्पितरथकरितुरगप-दातयः शिशुपालमुखा महीपतयः सुमनस इव सुधां हरन्तमुदायुधा रुरुधुः। अथ तयोरुभयोरपि सैन्ययोर्विसृमरवितानरुध्यमानरजः प्रसरं विजृम्भमाणध्वजपटपरिमृष्टरागसुरयुवतिचरणलब्धरुधिराल-क्तकशोभम् असिभिन्नकुम्भनिपतितमणिशर्करिलधरणितलकृच्छ्र-कृतपदद्विरदम् असृगरुणनेमिरथचरणाचरितसपरिवेषपूषबिम्ब-विडम्बनम् इभदशनशकलविरचितसुभटयशोऽङ्कुरशङ्कम् अङ्गदव्यक्तकरिकरभङ्गव्यतिकरितराजभुजदण्डखण्डं मुसलप्र-हारमूर्छितशूरशताश्वासदायिशरगरुदनिलम् उरगशङ्किकङ्-कगृध्रगृह्यमाणयोधबाहुच्छेदम् अस्रसरः प्रतरदिभकर्णपद्मिनी-पत्रं प्रहरणघट्टनविस्फुरदनलकणदीपसूचितरणदेवतारार्तिकम-प्सरोभिः मृतचारभटपरिषदभ्यसूयितामरसमरं समरमभवत्। तत्र च शाङ्र्गवलाहकविसृष्टविशिखासाराभिवृष्टमतिशितहलिहलवि-लुठितमङ्कुरितमयमखिलमजनि विमतबलम्।

क्षणेन समराजिरात् पराचीनेषु वीरेषु कान्दिशीकेषु पारसी-केषु सन्त्रासतन्द्राजडेषु, गौडेषु शरदलितरथे विदूरथे विष्णुपथ-शिथिलगतौ शाल्वपतौ भीतिपरिग्रहलोले शिशुपाले विद्रवति विपक्ष-पाटितहृदये पतितसत्त्वे जरासन्धे सोऽहमाहवभुवि रुक्मिणी-चोरमभिजित्य नन्दसुतं प्रवेक्ष्यामि कुण्डिनपुरम् इति कुण्डलित-चापदण्डो रुक्मी रुक्मपुङ्खैरसंख्यैरिषुभिरभिववर्ष यादवर्षभम्।

कृष्णस्तु तान् नवकुवलयपत्रकान्तिभृतः कटाक्षानिव जयश्रियः प्रतीच्छन् पञ्चषैरेव सायकैर्विरथीकृतं जिघांसुरवप्लुतो रथे गृहीत्वा कचेषु वैदर्भम् अग्रतः कृतसांनिध्यम् उत्सृष्टधवलकोशतया मुक्तकञ्चुकमिवोरगम् अपगतशरदम्भोदनिकायमिव विहायसम् अन्तिकपर्यस्तफेनराशिमिव यमुनाप्रवाहम् अतिविमलतया दूरप्रतिबिम्बिमात्मकुलप्रभवराजन्यकाभययाचनार्थमागतमिव भानुमन्तम् उद्वह्नितप्तसीमकनकत्सरुखचितपद्मरागरुचिपरिचितावयवतया तृष्णातिशयनिपीतमन्तरमान्तमसुररुधिरशीधुमिव वमन्तम् अमरगिरिमिव रमणीयमेखलाभाजं विन्ध्यमिव बहुलवनभयंकरं विपश्चितमिवावगाढविविधसमितिं विषवह्निधूमनीलं जिह्वापल्लवमिव शौर्यशर्वस्य लक्ष्मीनिवाससदनमुत्पलमिव वाहिन्या रक्तासवपानदुर्ललितमलिसंतानमिव प्रतिभटमुखकमलानां धाराधरमप्यचञ्चलोन्मेषं शैत्ययुक्तमपि भास्वन्तं महान्तमपि मुष्टिग्राह्यं पुत्रमिव कालरात्रेर्मित्रमिव कृतान्तदंष्ट्रायाः सच्छात्रमिव कालकूटस्य प्रदोषमिव यशश्चन्द्रोदयस्य मदनिष्यन्दमिव क्रोधनिष्यन्दस्य नन्दकं खड्गमग्रहीत्।

अत्रान्तरे सत्रासम् आर्यपुत्र परित्रायस्व मम कृते कृतापराधमपि भ्रातरममुमेकम् इति विदर्भराजसुतयाभ्यर्थितो निवृत्तनन्दकव्यापारः शिततरभल्लमुखरचितपञ्चचूलिकं सपराजयव्यलीकं विसृज्य विद्वेषिणमधिरूढरथो रिपुरुधिररूषितायुधया यदुसेनया परीतः पुरीं निजामुच्छ्रितध्वजामाविशत्।

तत्र तत्कन्यकारत्नमुद्वोढुमना महितेऽहनि महनीयगुणः प्रसाधितो बन्धुजनाभरणकलकलस्थगितमङ्गलमृदङ्गतुमुलस्य महतः कौतुकागारस्य मध्यभागपरिष्कारमुन्नतमाणिवेदिमध्यमध्यतिष्ठत्। अनन्तरमन्तःपुरातः कुलपालिकाभिरुपानीतनूतनदुकूलधारिणी कदलिकेव विभ्रमद्विपस्य मलयजरसपाण्डराकृतिः कीर्तिरिव सौभाग्यसार्वभौमस्य मणिनूपुररणितनिभादुरुभारवहनखेदमुक्ताक्रन्दमिव चरणारविन्दयुगलं दधती विसृतबिसखण्डरुचिना

मधुरविराविणा च नितम्बपुलिनहंसमण्डलेन रशनाकलापेन भासमाना रशनारवापदेशात् त्वमिवाहमप्यन्तर्वक्ष्यामि मनसिजमिति हृदयं प्रति कृतस्वालापेनेव कनीयसोदरेण कमनीया नाभिह्रदोदीर्णरोमलतैकनालविधृतौ शैशवविनाशपिशुनावुत्पातयमलकमलकोशाविव कुचकलशौ बिभ्रती संनिहितदयितकरग्रहणोत्सवदक्षिणबाहुरुषेव स्फुरन्तीं वामबाहुलतां सस्मितमवलोकयन्ती तनुबन्धुरेण सौन्दर्याम्बुनिधिकम्बुना कण्ठेन स्तनगिरिनिर्झरधारां हारलतां धारयन्ती अमृतातिशायिरसभाजस्तरुणिमतरुफलस्याधरमणेररुणिम्ना प्रवालमयमिव नानाभरणमौक्तिकं रचयन्ती नानाविधानां कर्णाभरणमणीनामनणीयांसमंसविलम्बितमंशुप्रसरमपरमिव वर्णांशुकं दधाना नवलोध्रपरागपाण्डुना नयनकमलविलासोपनतेन शरदागमेनेव कपोलरुचिपूरेण विशदयन्ती ककुभः कनीनिकाकान्तिविजितेन मधुरकरवस्तुतिमता कृतलोचनसेवाविधिनेव कर्णोत्पलेनाध्यासितकपोलपर्यन्ता निर्मलललाटलग्नं प्रतिबिम्बमिव सीमन्तमणेर्गोरोचनातिलकमुद्वहन्ती विरोचनाभिभूतिभियाभिमुखशशिनं शरणमुपगतमन्धकारमिव सनक्षत्रमीषदालक्ष्यगर्भकं धम्मिल्लमाबिभ्रती विदर्भराजदुहिता यदुभर्तुरलंचकार पार्श्वभुवम्।

यथाविधि पुरोधसा हुतं हुतवहं यदूद्वहः प्रतिनवकिसलयताम्रमाम्रतरुं वनकरीव वधूसहायः परीयाय। प्रत्यूषसि रविप्रभया क्षिप्त इव सगैरिके चरमगिरिशिरसि तारकानिकरो विदर्भराजतनूजया तनूनपाति पातितो रराज लाजावलिः। तदा च तस्याः स्तनपरिसरे कस्तूरिकापत्रभङ्गशङ्कामङ्कुरयन्नाननपङ्कजसविधे भृङ्गभङ्गीमङ्गीकुर्वन् कपोलस्थले कर्णपूरतमालकिसलयकलामाकलयन्नलिकभुवि चूर्णकुन्तलभ्रान्तिमुद्भावयन्नुज्जगाम होमधूमपल्लवः। इति विधिवन्निर्वर्तितपाणिपीडनविधिर्विविधगुणगणश्लाघ्यां विपञ्चीमधुरस्वरां सुकृतशतलभ्यां वैदर्भी रीतिमिव विचक्षणः स्वीचकार कमलेक्षणः।

# वेमभूपालचरितम्

## प्रारम्भश्लोकाः

सौभागयं जगतां यस्य वामे वपुषि वर्तते ।
तद्धाम शाश्वतं भूयाद्भूयसे श्रेयसे मम ।।१।।

सहृदयदृष्टिःकुरुते
काव्यं त्वपदोषकरणगुणपूर्णम् ।
ज्वलदनलज्वालेव
क्षीरं व्यतिषङ्गितोयसंशोषात् ।।२।।

आप इव जगति विमला
वाचो रसनीयतां दधति ।
काव्यप्रपञ्चसृष्टे –
र्या मूलं कविविधातृलोकस्य ।।३।।

काव्यं हि कविवराणां
कनकमिव श्लाघ्यवर्णसंकलितम् ।
दुर्जनजिह्वाज्वलने
तप्तं प्रविभाति निर्मलाकारम् ।।४।।

भुजगीव वमति गरलं
खलमुखवल्मीकवर्तिनी जिह्वा ।

कविवर्त्म दूषयन्ती
साध्या सा भवति सन्नरेन्द्रेण ॥५॥

बाणादन्ये कवयः
काणाः खलु सरसगद्यसरणीषु ।
इति जगति रूढमयशो
वामनबाणोऽपमार्ष्टि वत्सकुलः ॥६॥

कविरभिनवबाणः काव्यमत्यद्भुतार्थं
भुवनमहितभूमा नायको वेमभूपः ।
त्रिभुवनमहनीयख्यातिमानेष योगः
प्रकटयति न केषां पण्डितानां प्रहर्षम् ॥७॥

चूडामणिर्नृपाणां
दुर्मतिपरिपन्थिशिखरिदम्भोलिः ।
सर्वज्ञचक्रवर्ती
पेद्दकोमटिवेमभूपतिर्जयति ॥८॥

श्रूयते खल्वेतदैतिह्यम् —

## कामनृपालवंशवर्णनम्

पुरा किल सकलजगदात्मम्भरेः, सनकसनन्दनादिभिः सूरिभिः प्रत्यग्दृशा भाव्यमानमहिम्नः, छन्दः संदर्भकवेः, सर्वभूवनसनाभिनाभेः, लोकशिल्पकल्पनाकृतोद्यमेन वेधसा प्रस्तूयमानेन नाभिनलिनमधुकररवस्फीतेन सामगीतेन मुखरितशेषपर्यङ्कपरिसरस्य भगवतो गरुडध्वजस्य, मन्दाकिनीप्रवाहमकरन्दस्यन्दात्, मुक्तिद्वारकवाटविघटनकुञ्चिकायमानस्मृतेः, लक्ष्मीकरकिसलयसंवाहन-

क्रियोचितात्, चिरजन्मकल्मषभुजङ्गविषभङ्गजाङ्गलिकात् योगिजनमानसभवनमङ्गलदीपात्, श्रुतियुवतिचूडामणेः श्रीमतश्चरणकमलादवतीर्णो वर्णश्चतुर्थः इति ।।

स खलु सहोदरोऽपि गङ्गाया जनकः कीर्तिगङ्गायाः सह मिथुनभावेन स्वजायां चटुलहयखुरनखमुखविलिखितगात्रां गोत्रामधिकरणक्रमैर्वशीकुर्वन्, संक्रान्तहरिचरणलाञ्छन इवातपत्रचामरतोमरधनुरसिभिरविरहितः, सुरापगया सोदर्यस्नेहदत्तानीव शुचित्वगांभीर्यपावनत्वमाधुर्याणि चरितमनःस्वभाववचनेषु समुद्वहन्, कलितकारणगुण इव संदर्शितमहिमा विक्रमेण बलिराजश्रियमाच्छिन्दन् अप्रणतनरकपतनहेतुः, श्रितवतां श्रेयःप्रदानचिन्तामणिः, मणिरिव सतां हृदयेन धार्यमाणः, देवेन सह संक्रमय्य निजगुणमखिलमवनितलरक्षणार्थमाविर्भावितया सौकर्येण धरणीतलोद्धारणं कुर्वन्, अभिमतहिरण्यकशिपुक्षेत्रप्रदानेन सुमनसः स्वस्थान्वितन्वन् दाशरथिसरलशरप्रमुक्तिभिरनेकधालङ्कापतिखररिपुकबन्धपाति कर्म निर्माय समुज्ज्वलां धरणिसंभवां श्रियं स्वीकुर्वन्, सयौवनोन्मेषमधुराङ्गनानयनाञ्जलिपीयमानललितलावण्यनिष्यन्दः, क्षपितकुवलयापीडो बलेन सह विविधानि विरोधिविदलनानि विरचयन्, सर्वस्यां पृथिव्यां प्रथिमानमयासीत् ।।

तत्र खलु समजनि पुरुहूतपुरूरव पृथुभरतभगीरथदुष्यन्तदुन्धुमारप्रतिमः, पुरोगमः पुण्यश्लोकानाम्, अनेककुनृपतिचरितकल्मषनिर्वासनसर्वप्रायश्चित्तप्रतिनिधिरिव धरायाः, ज्वलन इव प्लुष्टदुष्टराजवंशः, पुण्यैर्निजचरितैः कलिमभिभूय सर्वदिशाकूलमुद्वहेन पुण्येन यशःपूरेण सुरभितदिगन्तः, निसर्गसंकटरोदोन्तरमान्तमुद्वहन्प्रतापम्, उग्ररिपुसमरविजयवेलाहेलाकृतेन सिंहनादेन दनुजाध्यक्षवक्षःस्थलदलनदक्षनृहर्यनिष्ठुरगलाक्ष्वेलितमिव स्मारयन्, शतमख इवानेकपविक्रान्तिक्षपितभूभृत्पक्षः, विश्वामित्र इव सत्यव्रतस्थापनः, पवन इव कृशानुतेजनः, जनार्दन इव जगदवनमादधानः कामाभिधानो नराधिपः ।।

यस्य खलु सलिलधरस्येव विमलतरवारिधारासारेण प्रतिदिशमशाम्यन्त पार्थिवरजोभ्रान्तयः। यस्य च कुलगिरिगरीयांसमंसमासाद्य, कोमलमृणालदुर्बलशेषशिरःपतनशङ्कातङ्कममुञ्चत भूतधात्री। यस्मिंश्च शासति महीम्’ दैवजमपि न बभूव भयपञ्चकं प्राणिनाम् ॥

## त्रिलिङ्गदेशवर्णनम्

तेन खलु कामपालनिभेन कामभूपालेन विधिवदनुपालितो बभूव समधिककृष्णागोदावरीस्रोतः समुदायनदीमातृकायमाणः; समन्तादखण्डिताम्भः समृद्धिभिः, विश्वंभराभ्रूलतानुकारिसेतुलेखैः, तटतरुकुसुमान्तरक्षरदमन्दमकरन्दस्यन्दकन्दलितकल्लोलैः, सलिलकेलिलोलकलहंसकामिनीकोलाहलानुकृतजलदेवताचरणमणिनूपुरझणझणात्कारैः, कारण्डवपक्षविक्षेपपरिचलितपङ्कजपरागपालिविरचितालीकसंध्यानुबन्धचकितचक्रवाकयुगैः, स्तनंधयैरिव सागरराजस्य अनेकैस्तटाकैरुपशोभितः, क्वचित्कलधौतशलाकिकानुकारिभिरङ्कुरद्भिः’ क्वचिच्छुकपक्षश्यामलच्छविभिः कन्दलितैः, क्वचिच्चामीकरवर्णकर्णेजपैः परिणमद्भिः, पवनदरचलितकणिशतया परिसरविहारिकलमगोपिकाकलमधुरगीताकर्णनश्लाघाकम्पितमौलिभिरिवोपलक्ष्यमाणैः, फलभरविनम्रतया मूलपयः प्रतिबिम्बितां पश्यद्भिरिवात्मनः श्रियम्, शालिशारामुखषष्ठिकसुगन्धिकहायनप्रायैः सौराज्यसुखितवसुमतीपुलकनिकुरम्बनिभैः केदारैरुपशोभितः, निरन्तरनालिकेरनिकरच्छदच्छायाच्छादिताशेषहरिदन्तरैः, पर्यन्तप्रकीडच्चिक्रोडदशनदष्टपरिणतपनसफलरसासारभरितसारणीसरणिभिः, प्रसृमरपाटलप्रसवपटलपाटलितपरिसरैः, सरलशोकतिलकतिलकितैः, अविरलचलितकदलीदलाधिगतवनदेवताविलासतालवृन्ताकृतिभिः, सरससहकारशाखाशिखारूढकोकिलकुलकोलाहलाकलितविरहिणीहृदयहालाहलक्षेपैः, मधुकरगुञ्जायमानमाधवीनिकुञ्जखञ्जन्मिहिरकिरणपुञ्जैः, उद्भिन्नपुंनागकुसुमपरि-

मलोद्गारनिर्हारिभिः, उल्लसितचम्पककलिकाकलापकल्पित-कन्दर्पपावकास्त्रसंपद्भिः, पाकपरिस्फुटितपुण्ड्रेक्षुपरुर्मुखोदीर्ण-मुक्तामणिकिरणदर्शिताकालराकानिशाप्रकाशैः कोरकप्रकरतार-कितकुरवकानोकहैः वनितावदनासववासनासनाथवकुलवनैः,महि-लाकुचकान्तिचोरलिकुचफलैः, मातुलङ्गामोदहृदयंगमैः, नवनार-ङ्गसङ्गिभिः, भुजङ्गलतापरिष्वङ्गधन्यतरुणपूगभद्रैः, ललि-तलवलीलतालिङ्गितलवङ्गैः, ह्रीबेरहारिभिः, ह्रीतहारीतभरित-हरितहरिद्रादलैः, प्रच्छायोपचितशृङ्गिबेरपरिपाटिभिः, पक्ष्मलि-तसूरणैः, प्रतिनवजातिजीरकराजिभिः, कुटिलशुकत्रोटिकोटिपा-टितदाडिमस्तोमैः व्याकोशकोशातकीगुलुच्छसंचयसंछन्नवृत्तिभिः, उद्वेल्लत्कारवेल्लवल्लीवलयैः,पटुतरपटोलपरिणाहैः,कोमलालाबुशा-लिभिः, पुष्यत्पुष्पलतैः, उरुतरोर्वारुकनिगदितोर्वरासारैः, अभ्यर्हित-बार्हताभ्युदयैः, अखिलभुवनाभिरामैरारामैः सुलभरामणीयका-तिशयः, सततविहितहालिकहृदयहेलनैः, सस्यपरिपालनपरायणा-नेकसैरिकदारिकाकलितकोलाहलाकुलितविहगकुलैः, अदूषितो-न्मेषमाषकोरदूषकैः, श्यामलश्यामाकसंहतिभिः, अभिनवपाकबहु-वारकैः, समुद्गतमुद्गसामग्र्यैः, अनणकचणकचणैः, सैरिक-कुटुम्बिनीसादरालोकितबादरोदयैः, मसृणमसूरस्थलैः, सुस्थितकुल-त्थर्द्धिभिःप्रसिद्धसिद्धार्थैःनिबिडनिष्पावनिष्पन्तिभिःनिबिरीसांतसी-कैः, अनूनतैलीनसीमभिः प्रवर्धमानवर्धमानवनैः, दाशरथिचरितैरिव सीतानुवृत्तिसरलैः, बलभद्रविलसितैरिव लाङ्गलासङ्गिभिर्जाङ्-गलक्षेत्रैर्विचित्रपर्यन्तः; समुत्तम्भिततुङ्गयूपस्तम्भनिवहसूचित-विविधाध्वराहरणैः, श्रुतिकामिनीकण्ठकालागरुद्रवायमाणहोमधूम-लेखानिकायप्रकाशिताकालकालिकानिर्मिताधर्मधर्मविलयैः, प्रशस्त-वास्तुविन्यासैः, प्रत्यग्भागप्रतिष्ठापितेन च गोपुरोपरिदेशडोला-यमानविशङ्कटगारुडवैजयन्तिकेन पुरतः समुच्छ्रितोदग्रदीपदण्डेन प्राक्द्वारवेदिकाद्वयभित्तिपुटविलिखितदशावतारवृत्तान्तेन कुण्डलि-तभुजङ्गराजभोगशङ्काकारप्राकारपरिवेषशोभिना पुरुषसूक्त-

व्याहरणपरपटुतरवैखानसाधिष्ठितेन तुलसीदलशीतलामोदमुषितकिल्बिषेण विष्वक्सेनायतनेन, ऐशान्यां च दिशि दर्शितोन्नतिना गर्भगृहगवाक्षविवरोद्वान्तगुग्गुलुधूपापदेशप्रकाशितपरमेश्वरकण्ठकालकूटकालिम्ना स्थूलशिलाघटितसालवलयेन पवनरयकम्पितध्वजपटपल्लवाङ्गुलिभि प्रमार्जयन्तीभिरिव कलिकालकालुष्यम् अवतरणरभसशीर्णस्वर्णदीस्रोतः शकलानुकारिणीभिरतिनिर्मलाभिः पुंगवपताकाभिर्विनयतेव संसारजनितां जूर्तिमखिलजन्तूनां द्वारदेशावलम्बमानमालूरतोरणस्रजा रक्तकरवीरकुसुमालंकृतबलिपीठेन स्निग्धश्यामलशिलोत्कीर्णशंकरौपबाह्यशाक्वरेण सरसारग्वधसौरभासारवासितदिशा विकटोपलस्तम्भविरचितनन्दिमहाकालभृङ्गिरिटिनिकुम्भकुम्भोदरप्रमुखप्रमथगणाकृतिवैकृतभयंकरेण संनिहितकार्तिकेयहेरम्बमूलबेरेण भासुरभस्मत्रिपुण्ड्रकैर्भद्ररुद्राक्षमालिकाधारिभिरुच्चारितरुद्रैकादशीयैः द्विजन्मभिरधिष्ठिताभ्यन्तरेण आपूर्यमाणशङ्कबहुलकाहलमृदङ्गकलकलेन शिवालयेन च अलंकृतैः, प्रतिभवनवेदिकोद्देशं क्वचिद्बालतया विनीयमानेन कचिद्वयःस्थतया शास्त्राण्यन्योन्यमालोचयता क्वचिद्वार्धकात् विद्यासुखेषु विश्राम्यता केनचिदुच्चारितर्चेन, केनचिदाम्रेडितयजुराम्नायेन केनचिदविगीतसामगीतिना, केनचिदाथर्वणतन्त्रमवमृशता केनचिच्छन्दोविचितिस्वच्छन्दवृत्तिना केनचिच्छिक्षितशिक्षाक्रमेण केनचिन्निरुक्तव्यक्तवैदुष्येण केनचित्कल्पितानल्पकल्पशिल्पसंजल्पेन, केनचिव्द्याकृतिनिराकृतश्रौतसंशीतिना केनचिद्द्योतमानज्योतिषज्योतिरपरोक्षितत्रैकाल्येन, केनचिदुद्घट्टितभट्टभणितिप्रघट्टेन केनचित्प्रभाकरालापलीलापरायणेन केनचिद्वेदान्तोदन्तनिर्वृतस्वान्तेन केनचिद्वैशेषिकमतोन्मिषितशेमुषीकेण केनचिन्नैयायिकवचनशय्यानुयायिना केनचिदितिहासदृष्टपुण्यश्लोकपूर्वराजर्षिचरितेन केनचिद्धर्मशास्त्रमर्मविदिना केनचिच्छीलितशिवागमेन केनचिदुदञ्चितपाञ्चरात्रसमयप्रपञ्चेन केनचित्प्रख्यापितसांख्यसिद्धान्तेन केनचित्क्षपणकदर्शनक्षपणप्रचण्ड-

पाण्डित्येन, केनचिच्चार्वाकगर्वनिर्वापकाखर्वसर्वज्ञतोत्कर्षेण केनचित्साहित्यरससौहित्यशालिना पञ्चमहायज्ञतत्परेणानूचानेन ब्राह्मणगणेन परिष्क्रियमाणैः, आवापक्षेत्रैरिव सुकृतबीजानाम्, आलवालैरिव श्रुतिलतानाम्, आवासपेटकैरिव सत्पुरुषरत्नानाम्, आघातस्थानैरिव दुरितदस्यूनाम्, आभरणैरिव वसुधाविलासिन्याः, महद्भिरग्रहारैर्मनोहरः स्यन्दन इव उर्वरासङ्गदर्शनीयः, जलधर इव निरवधिकासारदर्शितोच्छ्रायः, सज्जन इव अनेकधान्योपकरणसंभृतप्रीतिः, अभिजात इव समग्रगुणग्राममण्डनः, प्राज्ञ इव बहुलोह प्रभवभूमहितः, जम्बूद्वीप इव भद्राश्वभूषितः, यूथपतिरिव असंख्यधेनुकानुगतः, समुपचितसकलधर्मलिङ्गस्त्रिलिङ्गो नाम जनपदः।।

## अछङ्किपुरवर्णनम्

यत्र गोदावरीकूलबहुलपङ्कनिमग्नचरण इवानन्यगतिरावासकर्म निर्माति धर्मः। यत्र च कृष्णवेणीतरङ्गकलकलोद्वेजितानीव दूरीभवन्ति दुष्कृतानि। तत्र खलु तस्य राज्ञो राजधानीबभूव समस्तभुवनप्रशस्तरामणीयका फलसंपदिव भारतवर्षशाखिनः; शाखानगरसहस्रसंबाधपरिसरा; सर्वभुवननिर्माणमातृकेव विश्वसृजः जननीव कृतयुगस्य; निजनृपतिनिरतिशययशःप्रतापप्रसरनिरोधापराधबन्दीकृतेनेव चक्रवालगिरिणा महता प्राकारवलयेन परिवृताः; सदातनसलिलभरभरितेन, सलिलसंक्रान्तकनकवरणमण्डलप्रतिबिम्बतया कुलिशपतन भयादपरजलनिधिशङ्कावगाढकनकगिरिणेव विराजमानेन, पर्यन्तविसर्पिबहुलफेनपटलापदेशादगस्त्यकरचुलकितमम्बुराशिमिव अपहसता परिखाचक्रेण परिगता; क्रीडागजमदजलसेकपङ्किलप्राङ्गणैः, कुट्टिमखचितमरकतमणिकिरणविसरणजनिताकाण्डप्रसारितकदलीपलाशसंशीतिभिः, कालागरुधूपपालिकादर्शितालीककालिकालोकनत्रस्यत्केलिमरालिकायूथैः, आसन्नदीर्घिकावीचीपवनविकीर्यमाणविकस्वरनालीकशीथुवर्षजम्बालीकृतश-

म्भलीकपोलकस्तूरिकापत्रपङ्क्तिभिः, अभ्रंलिहकेतनशिखरोल्लेखनभिदुरमुदिरोदरशीर्यमाणवार्यासारपूर्यमाणसौ धमणिप्रणालीझलज्झलात्कारोद्विग्नपारावतरणितशतगुणितवरयुवतिमणितभणितिभिः, गारुत्मतरत्नांशुपटलघटितकपटयामिनीतारकायमाणस्थलखचितस्थूलमुक्तामणिभिः, अनवद्ययोषाङ्गभूषानिवहेन्द्रनीलमणिप्रभापोषदोषायमाणवासरैः, कृष्णक्रीडितैरिव सर्वदाररचितरुचिभिः, ललनावलग्नैरिव ललितबलीकान्तैर्भवननिवहैर्निरन्तरा; संफुल्लवल्लितरुतल्लजपुष्पनिष्पन्दनिलीयमानपुष्पंधयविरुभरितहरिता, फलिनहलिना, फलेग्रहितालेन, पत्रलहिन्तालेन, त्रिचतुरदिवसोद्गतकोमलकिसलयाग्रग्रसनसहर्षपिकपरिषदध्युषितचूतविटपिना, विसृमरशुकपरिपाटिकाकुटिलसृपाटिकाकोटिपाटितफलपूरफलेन, अक्षुद्राक्षद्राक्षारुद्राक्षेण, विकचविचकिलधूलीसुरभिणा, पचेलिमक्रमुककुहलीपालीप्रणालीपुटपतितबहुलमधूलीसमुक्षितक्षितिना, तरुणमरिचवल्लीवेल्लितबिल्ववलयेन प्रक्रीडच्चिक्रोडशिशुचरणशीर्यमाणशीफरशेफालिकारजसा, नवतरुकुसुममधुझरीसौरभजरीगृह्यमाणजनहृदयेन, निरन्तरसुमनःस्यन्दिमकरन्दवर्षपिच्छिलतलस्खलितपुष्पलावीजनेन, संसारेणेव सगन्धसारेण वेशवाटेनेव प्रकटितविटपालिना हिमवतेव महादेववल्लभोत्पत्तिहेतुना, सेतुनेव अधिकपिकचितेन, सदसेव सदा वलीमुखरतानुकूलेन, नलेनेव कलितरसातलत्विषा, तरुणीमुखेनेव चलद्भ्रमरकान्तेन, जरठवपुषेव अविरलतिलकद्रुणा, रावणेनेव बहुलपनसहितेन, समधिगतमहापुरुषेण तालाङ्कन, स्थगितनभसा घनेन, महनीयकृष्णागुरुणा द्रुपदेन, विदलितनागेन केसरिणा, प्रवृद्धवयसाप्यरहितगणिकाश्लेषेण, नगेरुधरेणापि सुमनोगणनिलयेन, सर्वभुवनाभिरामेण आरामनिकरेण कल्पितसौभाग्यविशेषा; नवदलितमृदुलनलिनदलतलिमतलरिरंसुहंससंसदालापरमणीयैः कोमलकिञ्जल्कशल्कजिग्रसिषाव्यग्रचक्रवाकचरणवलयवेल्लितकुवलयापीडैः पृथुलहरिशिखरटीकमानमदविकटवरटामुखविघटितवराटककोशैः, व्याकोशश्वेतपत्रातपत्रच्छत्र-

यानिषण्णराजहंसमण्डलैः, प्रत्यग्रफुल्लहल्लकवनीघनीभूतमधुधुनी-
स्रोतःसन्ततिकन्दलितोर्मिभिः, मदकलकलहंसतुण्डखण्डनोच्चलि-
तकुमुदपरागसुरभिताम्बुभिः, लक्ष्मणमनोवृत्तैरिव ऊर्मिलासहितैः,
संसारिभिरिवात्मजम्बालमुद्वहद्भिः, सुनटैरिवानेकशस्तरङ्गनर्ति-
तैः, यतिभिरिव अधिकमठस्थितिभिः, अगाधैः सरोवरशतैः सनाथी-
कृतसनिवेशा; बिल्वखदिररोहितकपलाशमयैः अशुष्कैः, अशाखा-
न्तरैः अकीटदष्टैः अतिनिपुणत्वष्टृतष्टैः अष्टाश्रिभिः कलितबलि-
कलिक्षेपैर्यूपैरुद्भासितम्, सहजसौमनस्यसदस्यप्रशंस्यमानत-
न्त्रसौष्ठवम्, तरुणहरिणचर्मनिर्मितपवित्रधवित्रम्, कदाचि-
न्नव्यं वायव्यं भव्यं द्यावापृथिव्यं च हव्यं जुह्वता कदाचित्प्रशस्यानुष-
स्यान् पवित्रान् अपोनप्त्रीयान्मन्त्रानधीयानेन कदाचिदनप-
सव्यानि ऋतव्यानि यजूंषि पठता कदाचिदाग्निमारुतं कर्म निर्मिमा-
णेन याजकगणेन परिष्क्रियमाणम्, भारतसमरमिव प्रकटितधनं-
जयहेतिवीर्यम्, दिलीपचरितमिव श्लाघनीयसुदक्षिणम्, रणाङ्-
गणमिव बहुविधशस्त्रसंकुलम्, सुरबलमिव स्तूयमानसुब्रह्म-
ण्यम्, गान्धर्वमिव श्रूयमाणश्रुतिस्वरमण्डलम्, हास्तिकमिव
बहुशस्तोत्रसमन्वितम्, उत्पातरविमण्डलमिव उपहितपरिधिब-
न्धम्, उत्तानपादचरितमिव उपलभ्यमानध्रुवाकारम्, राहुवदनमिव
असकृदाहितसोमग्रहम्, अम्बिकारमणमिव कपालभूषणम् अ-
ध्वरशतमाहरताम् आमुष्यायणानामनवकीर्णिनामनिराकृतानाम-
लिङ्गवृत्तीनामनभ्युदितानामनभिनिर्मुक्तानां गृहमेधिनां द्विजानां
निवासभूत्ता; चिकुरतिमिरासङ्गमङ्गलनिशया, ललाटशशि-
कलाविलासप्रतिपदा, भ्रूलतालासिकालास्यललितरङ्गभुवा, नय-
नशफरानुबन्धनवकन्दर्पपताकया, अधरबन्धूकविकासविभ्रमशरदा,
कण्ठकम्बकमनीयबिब्बोकसरित्ता, स्तनचक्रावाकयुगानुषङ्गशृङ्-
गारदीर्घिकया, रोमावलीजलदलेखादर्शनाश्चर्यप्रावृषा, करपल्लव-
स्फुरणपर्यायवीरुधा, पन्नगपरिषदेव प्रकटितविलासया, मन्मथलील-
येव रतिसुखसंपादनचतुरया, कुमुदिन्येव राजानुकूलदर्शनया, केश-

भरे कृष्णया, वदने मनोरमया, वचसि मञ्जुभाषया, मध्यदेशे मन्दोदर्या, ऊरुयुगले रम्भया, भूषासु रुक्मिण्या, सुरतकलासु सुदक्षिणया, वपुषि सुभद्रया वारविलासिनीसंहत्या समलंकृता; क्वचिदभ्रिताभिरिव कालागरुधूपमण्डलैः, क्वचित्सिकितिलाभिरिव कर्पूरपांसुभिः, क्वचिच्छर्करिलाभिरिव मुक्ताफलराशिभिः, क्वाचित्पल्लविताभिरिव पद्मरागमहःपटलै, क्वचिच्छाड्वलिताभिरिव शतमखमणिकिरणापीडैः, क्वचिद्रसातललक्ष्मीभिरिव अनन्तशङ्खकुलसंकुलाभिः, क्वचिन्मधुमासवनराजिभिरिव प्रवालहारिणीभिः, क्वचिद्विषहरणविद्याभिरिव गारुडालोकप्रसाधिताभिर्महाविपणिवीथीभिर्विराजिता, सरसहरिणलोचनापाङ्गवलनमेचकितान्तरा विहारवनभूमिरिव कन्दर्पकरेणोः; उत्तुङ्गमत्तवारणसहस्ररमणीया; विलासास्थानमण्टपिकेव वीरलक्ष्म्याः; श्रुतिसुखालापमुखरशुचितरद्विजवरमण्डलानुबध्यमानपद्मासना केलिसरसीव सरस्वतीकलहंसिकायाः; दलितसमदकरिसहस्रैः ससिंहसंहतिरिव महावीर; समधिकवितरणलीलारसिकैः सपारिजातवनेव वदान्यैः; अनेकशतसवनसमज्याविहारिभिः ससुधर्मेव सुमनोभिः अभिदर्शितचारुवर्णस्थितिस्तिलकश्रीरिव त्रिलोक्याः; समुद्भासितासंख्यदेवालया छायेव शतमखनगरस्य; अक्षयजीवनधृतिरालवालमण्डलीव धर्मतरोः; अनेकधामालंकृता निवासभूमिरिव कृतयुगस्य; अनधिगतकण्टकरुचिरा घण्टासरणिरिव प्रजाभाग्यस्य; प्रचुरसन्मणिवसानीवीव वसुंधरायाः; गृहच्यकनगरीव विविधमनुष्यधर्मचरित वित्राः; लङ्केव पुण्यजनाध्युषितसंनिवेशा; शब्दविद्येव बहुधा तुरङ्गशोभिता; कार्तवीर्यतनुरिव अविरलकरभासिता; नृसिंहलीलेव प्रथितहिरण्यक्षया; शरदिव विलसत्सत्प्रकाशा; ब्राह्मणजातिरिव निगमशालिनी; महाघोषान्वितापि निराक्रोशा; प्रकटभुजङ्गप्रचाराप्यपोहिताहिभया; बलि- राजनिलयभूतापि गन्धर्वभूमिः; अद्दङ्किनामधेया नगरी ।।

यत्र च वामभ्रुवामनुपमललाटतटकान्तिकदर्थनलज्जया मज्जनमिवाचरति शङ्करकोटीरशैवालिनीपयसि चन्द्रमःशकलम्।

यत्र च मुनीनामपि मनांसि मोहयति कुण्डलितकुसुमास्त्रसशरशरासनविभ्रमं विभ्रदक्षिभ्रुवं सभ्रुवाम्। यत्र च पुनरम्बुधरकदम्बकम्, अमृतकरबिम्बम्, अम्बुरुहम्, अमृतम्, कम्बुःइभकुम्भः, चम्पकदाम, अम्बरम्, अम्बुनिधिपुलिनम्, रम्भा अशोकपल्लवमित्येतानि शम्बररिपुसाचिव्यकलनाय ललानारूपेण परिणमन्ति। यत्र च हरिणीदृशामाननचन्द्रमण्डलेष्वभ्यर्णकर्णपाशगाढनहनशङ्कासकुल इव न कदापि निविशते लाञ्छनहरिणः। यत्र च चञ्चलदृशामञ्चलस्फुरणमेव दृशोः पञ्चशरो पञ्चबाणस्य; पुष्पाणीति मृषोद्या किंवदन्ती। विक्रमप्रणयिनी भ्रूलतिकैव समरसाचिव्यकार्मणं कार्मुकम्; इक्षरित्यलक्ष्यमाख्यानम्। निसर्गसुरभिर्निश्वास एव रागोद्दीपनसाधनम्; मलयपवन इति चिन्ताव्यामोहः। छायाकरं चन्दनतिलकमेव धवलातपत्रम्; चन्द्रमण्डलमिति कविकर्मधर्मः।।

तस्यां च पुरि निवसन्, पुरंदरप्रतिमः, पूरितार्थिजनकामः, कामनृपतिरेकनगरनिर्विशेषमशिषदशेषमवनिचक्रम् ।।

## प्रोल्लयभूपतेः मृगयाविहारः

कनकशृङ्खलानियमितगलान्, विकटवराटिकाभरणान्, मृगकुलापमृत्यून्, वराहमर्माविधः, प्रकुपितव्याघ्रकर प्रहारव्रणितदेहान्, अतिदूरावलम्बिनीभिरधिकमरुणिमानमुद्वहन्तीभिरनेकमृगयानिपीतमरण्यमृगरुधिरपूरमिवोद्वमन्तीभिरविरतलालजलस्राविणीभिरपि शुष्यन्तीभिरभिनवाशोकपल्लवसुकुमाराभिर्द्राघीयसीभिर्जिह्वाभिरुपशोभितान्, विश्वसानिव मुर्तिमतः, स्वामिनां हृदयवेदिनः, सिंहेष्वपि दर्शितविक्रमप्रकर्षान्, अतिप्रमाणान् कौलेयकानाकलयता, केनचिद्वागुरावाहिना, कनचिज्जालवलयानि धारयता, केनचिद्वीतंसान्बिभ्रता, केनचिच्छार्दूलशकटयन्त्रं प्रसारयता, केनचित्प्रलोभकहरिणानानयता,केनचित्तिरस्करिणीधारिणा,केनचिच्च्यक्रचापभिण्डिपालमुद्गरलगुडादीनि शस्त्राणि धारयता, केनचिदुन्माथोपकरणरज्जूरुद्वहता, केनचिन्मृगरञ्जनगीतिचतुरेण, केनचिद्वैणिकेन,

केनचिद्वांशिकेन, केनचिद्घण्टाधारिणा, केनचिद्वनहरिणवाशितानुकरणनिपुणेन, केनचित्केकानुवादनप्रगल्भेन, केनचिदच्छभल्लभूत्कारानुकृतिदक्षेण, केनचित्खड्गिकुलगलनिनदानुसारिस्वरविशारदेन, बहुप्रकारेण मृगयुवर्गेण परिवृतः, प्रथमशोधितं रुद्धमृगं वनं प्रपेदे। राजानमन्वग्ययौ तदा विरचितमृगयानुरूपवेषमशेषमपि सामन्तचक्रम् ।।

स पुनः प्रथममेव विविधायुधपाणिभिर्विमुक्तसिंहनादैर्मृगयुभिराक्रान्तम्, अतर्कितोपपन्नविपदुल्बणघोषणघोणिकुलम्, उत्तालकौलेयककुलविकटदंष्ट्राविलुण्ठ्यमानशललिसंघजङ्घापललम् अभूतपूर्वरणरणकदारुणरवणवारणयूथम्, अकाण्डसंक्षोभचण्डिमधुर्यहर्यक्षम्, अतिरभसचलितवनमहिषचटुलशफपुटताडितधरणिभङ्गम्, संक्षोभसमयपरिपुच्छ्यमानशार्दूलम्, अधिकसभयगवयम्, भयभ्रष्टतर्णकगतिगवेषणोत्कर्णगोकुलम्, अति संरम्भजृम्भमाणशरभमरण्यमाकुलीचकार। मृगयुभिस्तोमररुग्णरङ्कुपदाः, पुङ्खानुपुङ्खशङ्कुपातसातङ्कमातङ्गाःसमुत्पतिष्णुवनमहिषकठिनकंधरापतितखड्गखणात्कारमुखराः,निष्ठुरयष्टिविद्धघृष्टयः, क्षुरिकामुखक्षुण्णतरक्षुकुक्षयः, चण्डभिण्डिपालखण्डितगण्डकाः, शरसंहतिसंहतासह्यसिंहरंहसः शातकुठारप्रहारभीतवातप्रम्यः, वेगोत्सृष्टकुटिललगुडकुट्टननिरीहितेहामृगव्यूहाः, निहतयूथपतिविरहशोकदमयमानकरिणीकरुणफीट्कारदारुणाः, विततकरवाललूनचमरवालधयः क्रियन्ते स्म काननभूमयः ।।

अवनिपतिरहितराजन्यकस्येव काननस्य खड्गिविक्रमकथामपि न विषेहे। संभोगानिव सद्यस्तनशशपदानुवृत्तीन्, जरागमानिव शिथिलाङ्गान् सारङ्गान् प्रकटितपन्नगरिपुरंहसा तुरगेण परीत्य शरवर्षेण शमयांचकार। ततश्च करवालखण्डितकठिनमहिषकंधरानिरन्तरनिपतितरुधिरझरसहस्रेषु अजस्रमभिपतताम‌रालतुण्डानां भेरुण्डानामुत्तालपक्षपवनकम्प्यमानकदलीदलमर्मरासु मरुक्षितिषु

तरक्षून्विव्येष। प्रत्यग्रनिहतवनहरिणरुधिरपिच्छिलचरणाग्रस्यन्दमानसान्द्रासृञ्जि संजगृहे सवित्रासतन्द्राणि तरक्षोः पदानि। मृगयाविक्षोभमाकर्ण्य तरक्षूणां तरुकुञ्जादभिमुखमापततां जिघत्सया व्यादीयमानेषु विशङ्कटदंष्ट्राशङ्कुसंकटेषु नदत्सु वक्त्रकुहरेषु कृतहस्ततया चिक्षेप चण्डानि शरमण्डलानि। ततः कामीव मदनशरताडिताङ्गो रामानुसरणमकरोत्। स खलु शासिता चतुष्पदाममीषामधिकपदत्वमसांप्रतमिति जानन्निव शरभाणां चतुरधिकानि पदानि चत्वारि चिच्छेद। अनन्तरमचिरविदलितवनकरिकुम्भकूटनिपतितमुक्ताफलबृन्ददन्तुरासु सिंहसरणिषु दृष्टिं बबन्ध। असहमान इव तदीयमाधिपत्यं मृगाणाम्, कर्णपूरायमाणकुण्डिलितकोदण्डगुणश्चण्डशरासारवर्षी सरुषो जघान सिंहान् सिंहसंहननः। ततः कण्डूलगजपतिमण्डलगण्डकपणमदजलमलिनितस्कन्धेषु मुचुकुन्देषु दृशं दिशन्, वनभुवि विभुश्चचार। वर्षग्रहैरिव मनुजपतिमहेषुभिरधिकमवग्रहे भिन्ने, वारिमुच इव वमथुवर्षमुचो मदमुचो बभूवुः। सबलगवयघातविसृमरधूलिविसरणधूसरोरस्कान्, अवस्किरमाणान्वल्मीकान्, विभुरिषुवर्षेण जघान विपिननिलयिनो लुलायान्। राजीवबन्धुरिव राजा रश्मिभिरिव शैत्यभेदिभिर्भल्लैरन्धकारानिव मार्गरुधो लुलाव भल्लूकान् ।।

स कदाचित्तृणबिन्दुरिव हरिणीमपातयदवनितले। विष्णुरिव महावराहविग्रहमग्रहीत्। युधिष्ठिर इव शल्यं जघान। अनुपत्य च वातवाहनहरिणरंहसा हरिणा वातहरिणान् खमुत्पततो बाणनिकरेण निष्पत्राचकार कृतहस्तः क्षितीश्वरः। स पुनरेवं शरभकुलापमृत्युना, तरक्षुक्षयेण, द्विपविपदा, मृगराजराजयक्ष्मणा, रुरुजरसा, लुलायप्रलयेन, गवयवयोवसानेन, घृष्टिसंघसंघातनिधनेन, प्लवगकुलोपप्लवेन, चमरगलसिरारुधिरमोक्षभिषजा, वातहरिणजातिव्याधिना, रोहितवर्गोपसर्गेणमृगयाव्यापारेण वने विजहार। तेन धरणिपतिमृगयाविहारेण दिग्गजबृन्दमन्तरेण दन्तिनः, कृतान्तमहिषम-

पास्य महिषाः, पवनवाहनहरिणादृते हरिणाः, शिशिरकरशशमुत्सृज्य शशाः, चण्डिकाकेसरिणं विमुच्य केसरिणः, कुमारबर्हिणं विहाय बर्हिणाः, बाणेन विशसनमवापुः ।।

## प्रोल्लयभूपतिना कन्यायाः दर्शनम्

अथ तस्य शाखावलम्बिनीम् अरुणमणिशिलोत्कीर्णां सविधवर्तिन्याः संवाहिकायास्तरलितमुखरमणीयवलयनिकरेण करेण कम्प्यमानाम्, अधिकविसृमरया विद्रुमपाटलया त्विषा पुनरुक्तपल्लवसंपदः सहकारशाखा रचयन्तीं जातिलिङ्गद्रवानुलिप्तमिव गगनतलमातन्वतीं डोलामधिरूढाम्, आलोलचरणनखमणिकिरणनिकुरुम्बैरनङ्गभुवनविजयमङ्गलाङ्कुरानिव कल्पयन्तीम्, मन्मथयागप्रवर्तनवेदिकाविन्याससूत्राणीव विस्तारयन्तीम्, डोलाविहारदूरप्रसारितपादारविन्दताडितशाखाञ्चलैरासन्नकङ्केलि॑भिः संवाह्यमानचरणामिव सरसकिसलयपाणिभिः, कनकमयावलम्बनरज्जुकलितकरयुगलचलितमणिवलय निनदेन सेवावसर इति मदनमिवाकारयन्तीम्, समधिकमदरागदर्शनहसिताभिरन्तिकचम्पकलताभिः शाखाभुजाग्रकलितेन तरुणसुमनःस्तबकदीपिकाचक्रवालेन निर्वर्त्यमाननीराजनमङ्गलामिव निरीक्ष्यमाणाम्, श्रमगुरुनिश्वाससौरभाभिसारिताभिर्मधुकरमण्डलीभिर्मुखशशिसंगमाभिलाषसमागतरजनिशङ्कामिवाङ्कुरयन्तीम्, अनवरतस्यन्दिभिरन्तिकतरुकुसुममकरन्दवारिभिरभिषिच्यमानामिव महिलासाम्राज्ये वसन्तेन, मलयपवनरलितशिखैर्महीरुहैरभ्यर्च्यमानामिव पुष्पप्रकरेण, मधुरहिन्दोलगीतिप्ररूढमुकुलकैः प्रियालतरुभिः स्तूयमानामिव शाखागतकोकिलालापैः, प्रकटितपल्लवपुटाञ्जलिभिः प्रणम्यमानामिव परिसरलताभिः, कोमलकरतलस्पर्शनानन्दितैर्माकन्दशाखिभिः सुकुमारकिसलयकलिकातालवृन्तैरिव वीज्यमानाम्, अभ्यर्णबालाशोक्रमूलकल्पितेन सततममुक्तपार्श्वया रत्या पुलकितभुजलतया आलिङ्गितकंधरेण सहचरवसन्तदत्तान्कूणितदृशा बाणान् ऋजूकुर्व-

ता मकरध्वजेन कटाक्षितावसरामिव दृश्यमानाम्, माणिक्यभूषण-मरीचिजाल कारुणिताङ्गीं विद्युत इवावतीर्णाम्, विद्रुमदण्डादिवोत्कीर्णाम् कुङ्कुमादिवाङ्कुरिताम्, कोकनदादिवोद्भूताम् अरुणादिवाविर्भूताम् पल्लवादिवोल्लसिताम्, प्रसवपरिमलहारिणीं पारिजातकोरकादिव पतिताम्, निश्वासामोदनिर्हारिणीं मलयपवनादिवोत्पन्नाम्, अखिलेन्द्रिवाह्लादकारिणीम् अमृतादिव समुत्थिताम्, माधुर्यजन्मभूमिमिक्षुदण्डादिवोदिताम्, कलमधुरालापिनीं तन्त्रीगर्भादिव समुत्पन्नाम्, कांचन काञ्चनगौराङ्गीं कन्यकामपश्यत्। इन्दुकलाया इव कान्तिमधुराङ्ग्या दर्शनेन तस्याः सलिलमिव सागरस्य समुल्ललास हृदयमवनिपालस्य ।।

तलो नरपतिरेवमचिन्तयत्–'अहो पूर्वकृतस्य पुण्यस्य कर्मणः परिणामः। यस्मादनिवारितमनेन चक्षुरञ्जलिना मधुरमधुरा कन्यामयी कापि सुधा पीयते। ब्रह्मणो नूनं स्वर्गवधुसर्गपूर्वाभ्यसनेन सृष्टिनैपुणी जाता। अन्यथा कथमीदृगवयवनिर्माणकौशलं घटते इति विचिन्तयन्, तदा प्रस्विन्न भुजान्तरसंक्रान्तप्रतिमां स्मरशरपरवशतया स्वयंगृहीतहृदयामिव राजकुमारीमुद्वहन्, तत्क्षणजनुषा रोमाञ्चेन हृदयगतायास्तस्या दर्शनतिरोधानशुचेव स्थूलस्थूलं निश्वसन्, अनुक्षणजृम्भिकारम्भमुखपिधानोदञ्चितस्य करस्य निजोरःस्थलहारमणिनिकरसंगतैः प्रतिबिम्बैस्तदालिङ्गनकुतूहलिना हृदयेनसमुत्पाद्यमानानेकपाणिरिव दृश्यमानः, विमलमणिकुण्डललब्धप्रतिबिम्बतया स्वयमभिसरणसंकेतरहस्यकथनाय कर्णान्तमुपगतयेव तया संलक्षितः, पुङ्खानुपुङ्खनिपतितमदनशरकुसुम निकरसौरभसुखमनुभवन्निव दरमुकुलितलोचनः पश्यन्, परवशो बभूव ।।

ततस्ताः कन्यकाः संभ्रमोत्तानितैः समीरणतरलितनीलोत्पलवननिर्विशेषैर्नेत्रैर्नृपतिमालोक्य, विस्मयाक्षिप्तचेतसस्तस्थुः। राजकन्यका च डोलाधिरूढैव मसृणमुकुलितापाङ्गेन किंचिदाकुञ्चितभ्रूलतेन, विस्मयोत्तानतारकेण, तस्य लावण्यातिशयमदृष्टपूर्वमा-

ख्यातुमिव कर्णान्तमुपेयुषा, अङ्कुरदनङ्गैरिङ्गितैःकिमपि याचमानेनेव, प्रसन्नेन, प्रेमरसवर्षिणा, भावगर्भितेन, आनन्दबाष्पकणस्थगितपक्ष्माग्रेण, विकासिना, विस्मृतनिमेषेण चक्षुषा राज्ञ्यो लावण्यामृतपूरमापिबन्तीव, किमप्युपदिशन्तीव, किमप्यभिलषन्तीव, हृदयमाकर्षन्तीव, स्वहृदयमर्पयन्तीव, मन्मथदुर्विनीतत्वमावेदयन्तीव, महति मोहार्णवि निपतन्तीमशरणां मामवलम्बस्वेति कथयन्तीव, तदङ्गसौभाग्यामृतपङ्कपतिते चक्षुषी समुद्धर्तुमक्षममाणेव, मुषितेव मनसिजेन, आचान्तेव रागेण, लुण्ठितेव मोहेन, कबलितेवोत्कलिकया, विलीनेवमदनाग्निना, चिरं तस्थौ। तदा कर्णमधुरस्यन्दिहिन्दोलगानमनाकर्ण्य, सरसपरिहासालापपेशलं सखीजनमनालप्य, विसृमरपरिमलसुभगविविधवनतरुकुसुमविरचिताभरणहस्तां प्रसाधिकामनवलोक्य, सविनयमुपायनीकृतामुद्यानपालिकया शिञ्जानमधुकरपुञ्जां प्रथमोद्गतामपिमाधवीकुसुममञ्जरीमनादाय, केवलं डोलापीठकनकमयरज्जववलम्बमात्रेण गात्रं स्थापयन्ती, विमुक्तबहुविधविभवानुषङ्गा, ताम्बूलप्रणयप्रसारितेन पाणिना चेटिकासमर्पितां वीटिकां स्पृशन्त्यप्यगृह्णती, पञ्चशरशरनिकरप्रहारमूर्च्छिता, मकरन्दबिन्दुवर्षेण कृतानुकम्पया वनलक्ष्म्या तत्क्षणक्रियमाणशिशिरोपचारेव सिच्यमाना, कर्णावतंसकमलगन्धलुब्धेन ध्वनता मधुकरेण 'कुमारीजनोचितामपि व्रीडामुन्मुच्य स्वयमभिसरणेन हृदयरुचितोऽयं जनः परिगृह्यताम्, इति केनापि मदनदूतेन कर्ण इव कथ्यमाना, अपाङ्गशुक्तिनिर्गतैर्लोचनांशुपूरैरध्वपरिश्रान्तमवनिपालमिव स्नपयन्ती, कठिनकुचतटघट्टनप्रसृतान्प्रसवशरपावकास्त्रस्फुलिङ्गानिव विहारविशीर्णानुरसि कुङ्कुमपरागान् स्थूलस्थूलेन निश्वासेन धुनाना, परिष्वङ्गव्यसनिनीभ्यां बाहुलताभ्यामङ्गस्पर्शव्यवधानभियापसार्यमाणानीव पतन्ति रत्नवलयानि अजानती, स्तनान्तरविसर्पिणीं हारतरलरत्नप्रभां तत्क्षणपतितमदनशरविभिन्नहृदयरुधिरधारामिव समुद्वहन्ती, संभ्रमस्रंसिनीभिरलकपङ्क्तिभिर्दिवापि तदभिसरणोचितां तमिस्रामिव तन्वती, अविर-

लपक्ष्माग्रपातिभिरानन्दबाष्पवारिभिर्निजकुच मणिपीठ मधितस्थुषः प्रसवबाणस्य सकलभुवनसाम्राज्याभिषेकमिव रचयन्ती, चामरपवनेऽपि स्विद्यदङ्गी, पुरः प्रसृतेन डोलापीठेन तदन्तिकमनुरागेणेवाकृष्यमाणा अपसर्पता च कन्यकाजनसहजया व्रीडया पश्चादिव नीयमाना, तत्पादतलसंभावितां स्थलीमपि बहुमन्यमाना, वनपवमानप्रेरितायां तदुपरिपातितकुसुमनिकरायामासन्नलतिकायामपीर्ष्यां कलयन्ती, मुहुरासन्नबालाशोकमङ्घ्रिणा ताडयन्ती, मुहुश्चन्दनपल्लवानवलम्बमाना, मुहुश्चम्पकमञ्जरीमाजिघ्रन्ती, मुहुः सहकारकलिकया ताम्बूलकरङ्कवाहिकां प्रहरन्ती, मुहुः संवाहिकायाः स्कन्धे करं विन्यस्यन्ती, मुहुस्तमालकिसलयान्तरितविग्रहा दर्शितत्रिभङ्गया दृशा स्मितविकसितकपोलं विलोकयन्ती स्थितवती।।

दृष्ट्वा च युवानमखिलातिरिक्तरूपसंपदमवनिपालमेवमचिन्तयद्राजकन्या—'अहो स्रष्टुः सृष्ट्यतिशयः, यस्मान्निष्पन्नमिदमखिलातिशायि लावण्यम्। अयं पुनरात्मभुवा धूर्जटिनयनाग्निदग्धे रतिपतावन्यो मकरकेतुरुत्पादित इव विश्वविमोहनाय विभाव्यते। नूनममुष्य हिमगिरिमेखलाविशालमतिमनोहरमासाद्य भुजान्तरं चिराय कौस्तुभपाषाणविषममधुरिपुवक्षःस्थलस्खलस्खेदमत्यासील्लक्ष्मीः। सर्वस्मिन्नपि जगति सौन्दर्यसारनिधेरमुष्य नान्योऽस्ति सदृशः पुमान्। अस्ति, यद्ययमेव मुकुरतले प्रतिबिम्बितः इति चिन्तयन्ती, तदा तदभिमुखचलितमनिवार्यं हृदयमनुगन्तुमीहमानेव, तन्मुखसौन्दर्यगुणाकृष्यमाणेव, दुर्वारमन्मथशरतापमसहमाना तदवयवलावण्यपूरपतनमभिलषन्तीव, 'सरभसमवतीर्य डोलायास्त्वदनुरूपं युवानमद्यैव वृणीष्व' इति यौवनेनोपदिश्यमानेव, पवनतरलपल्लवाङ्गुलिना तत्क्षणक्रियमाणावतरणसंज्ञेव सहकारेण, तत्कालसमुदितलज्जावनमितयोश्चक्षुषोरधोमुखविसारिण्या प्रभया कोमलनिजचरणनिक्षेपाय पुष्पोपहारमिव भूतले विकिरन्ती, दीर्घदीर्घेण निश्वासेन प्रदर्श्यमानावनितलावतारमार्गेव, चलितमणितुलाकोटिझणझणारववाचालचरणारविन्दम्, आलम्बनरज्जुशिथिलितकरयुगल-

तरलमणिकङ्कणक्वणितवितीर्णकर्णपारणम्, आरणितभूषणकलापकमनीयम्, आशिञ्जितमेखलम्, आसन्नसखीसत्वरदत्तहस्तावलम्बम्, अवततार डोलाया धरणितलम् ।।

अवतीर्य च सखीजनधार्यमाणशिथिलावष्टम्भशरीरं तिष्ठन्ती, कामसागरनिमग्नस्यात्मनः करालम्बमिव याचमाना; विगतनिमेषेण विस्मयस्तिमिततारकेण मनसिजगुरूपदिष्टान् अनन्यसंवेद्यान् तांस्तान्भावान् विवृण्वता लोचनेन तं राजकुमारं विलोकयन्ती, तेन च विलोक्यमाना, विचेतनेव गतमपि कालदैर्घ्यं नाजानात्।।

# नलचम्पू

## प्रारम्भश्लोकाः

जयति गिरिसुतायाः कामसन्तापवाहिन्युरसि रसनिषेकश्चान्द-
श्चन्द्रमौलिः ।
तदनु च विजसन्ते कीर्तिभाजा कवीनामसकृदमृतबिन्दुस्यन्दिनो
वाग्विलासाः ।।

प्रसन्नाः कान्तिहारिण्यो नानाश्लेष विचक्षणाः ।
भवन्ति कस्यचित्पुण्यैर्मुखे वाचो गृहे स्त्रियः ।।४।।

किं कवेस्तेन काव्येन किं काण्डेन धनुष्मतः ।
परस्य हृदये लग्नं न घूर्णयति यच्छिरः ।।५।।

अप्रगल्भाः पदन्यासे जननीरागहेतवः
सन्त्येके बहुलालापाः कवयो बालका इव ।।६।।

अक्षमालाप्रवृत्तिज्ञा कुशासनपरिग्रहा।
ब्राह्मीव दौर्जनी संसद्वन्दनीया समेखला ।।७।।

इत्थं काव्यकथाकथानकरसैरेषां कवीनामर्मी
विद्वांसः परिपूर्णकर्णहृदयाः कुम्भाः पयोभिर्यथा ।
यो वाच्यविवेकविक्लवधियामीदृग्विधामादृशां ।।
लप्स्यन्ते क्व किलावकाशमथवा सर्वंसहाः सूरयः ।।१५।।

वाचः काठिन्यमायान्ति भङ्गश्लेषविशेषतः ।
नोद्वेगस्तत्र कर्तव्यो यस्मान्नैको रसः कवेः ।।१६।।

काव्यस्याम्र फलस्येव कोमलस्येतरस्य च
बन्धच्छायाविशेषेण रसोऽप्यन्यादृशो भवेत् ।।१७।।

## कविवंशवर्णनम्

अस्ति समस्तमुनिमनुजवृन्दवृन्दारकवन्दनीयपादारविन्दस्य भगवतोविधेर्विश्वव्यापिव्यापारपारवश्यादवतीर्णस्यसंसारचक्रेक्रतुक्रियाकाण्डशौण्डस्य शाण्डिल्यनाम्नो महर्षेर्वंशः ।।क।।

श्रूयन्ते च यत्र श्रवणोचिताश्चन्दनपल्लवा इव केचिदनूचानाः शुवयः सत्यवाचो विरञ्चिवर्चसोऽर्चनीयाचारा ब्रह्मविदो ब्राह्मणाः। पुण्यजनाश्च न च ये लङ्कापुरुषाः सुसूत्राश्च न च ये लम्पटाः प्रसिद्धाश्च न च ये लम्पकाः कामवर्षाश्च न च ये लङ्घनाः सन्मार्गस्य नववचसोऽपि न च ये लम्बालकाः महाभारतिकाश्च न च ये रङ्गोपजीविनः सेविताप्सरसोऽपि न च ये रम्भयान्विताः ।।ख।।
किं बहुना······

जानन्ति हि गुणान्वक्तुं तद्विधा एव तादृशाम् ।
वेत्ति विश्वंभरा भारं गिरीणां गिरिमाश्रयम् ।।१८।।

तेषां वंशे विशदयशसां श्रीधरस्यात्मजोभूद्-
दे वादित्यः स्वमतिविकसद्वे दविद्याविवेकः।
उत्कल्लोलां दिशि दिशि जनाः कीर्तिपीयूषसिन्धुं
यस्याद्यापि श्रवणपुटकैः कूणिताक्षाः पिबन्ति ।।१९।।

तस्तैरात्मगुणैर्येन त्रिलोक्यास्तिलकायितम् ।
तस्मादस्मि सुतो जातो जाड्यपात्रं त्रिविक्रमः ।।२०।।

सोऽहं हंसायितुं मोहाद्बकः पङ्गुर्यथेच्छति ।
मन्दधीस्तद्वदिच्छामि कविवृन्दारकायितुम् ।। २१।।

भङ्गश्लेषकथाबन्धं दुष्करं कुर्वता मया ।
दुर्गस्तरीतुमारब्धोबाहुभ्यामंभसां पतिः ।।२२।।

उत्फुल्लगल्लैरालापाः क्रियन्ते दुर्मुखैः सुखम् ।
जानाति हि पुनः सम्यक्कविरेव कवेः श्रमम् ।।२३।।

संगता सुरसार्थेन रम्या मेरुचिराश्रया ।
नन्दनोद्यानमालेव स्वस्थैरालोक्यतांकथा ।।२४।।

उदात्त नायकोपेता गुणवद्वृत्तमुक्तका
चम्पूश्च हारयष्टिश्च केन नक्रियते हृदि ।।२५।।

## आर्यावर्तवर्णनम्

अस्ति समस्तविश्वंभराभोगभास्वल्ललामलीलायमानः समानः सेव्यतया नाकलोकस्य ग्राम्यकविकथाबन्ध इव नीरस(२)स्य मनोहरः, भीम इव भारतालंकारभूतः कान्ताकुचमण्डलस्पर्श इवग्रणी सर्वविषया(३)णाम् अनधीतव्याकरण इवादृष्ट प्रकृतिनिपातोपसर्गलोपवर्णविकारः, पशुपतिजटाबन्ध इव विकसितकनककमल कुवलयोच्छलितरजःपुञ्जपिञ्जरित हंसावतंसया प्रचुरचलञ्चकोरचक्रवाककारण्डवमण्डलीमण्डिततीरया भगीरथभूपालकीर्तिपताकतया स्वर्गगमनसोपानवीथीयमानरिङ्गत्तरङ्गयागङ्गया पुण्यसलिलैः प्लावितश्चन्द्रभागालंकृतैकदेशश्च, सारःसकलसंसारचक्रस्य, शरण्यः पुण्यकारिणाम् आरामो रामणायककदलीवनस्य धाम धर्मस्य आस्पदं सपदाम् आश्रयः श्रेयसाम् आकरः साधुव्यवहाररत्नानाम्

आचार्यभवनमार्ये मर्यादोपदेशानामार्यावर्तो नाम देशः ।।क।।

यस्मिन्ननवरतधर्मकर्मोपदेशशान्तसमस्तव्याधिव्यतिकराः पुरुषायुषजीविन्यः सकलसंसारसुखभाजः प्रजाः। तथाहि। कुष्ठयोगो गान्धिकापणेषु; स्फोटप्रवादो वैयाकरणेषु संनिपातस्तालेषु ग्रहसंक्रान्तिर्ज्योतिः शास्त्रेषु भूतविकारवादः सांख्येषु क्षयस्थितिषु गुल्मवृद्धिर्वनभूमिषु, गलग्रहो मत्स्येषु गण्डकोत्थानं पर्वतवनभूमिषु, शूलसम्बन्धश्चण्डिकायतनेषु दृश्यन्ते न प्रजासु ।।ख।।

यत्र चतुरगोपशोभिताः सङ्ग्रामा इव ग्रामाः तुङ्गसकलभवनाः सर्वत्र नगा इव नगरप्रदेशाः सदाचरणमण्डनानि नूपुरणीव पुराणि सदानभोगाः प्रभंजना इव जनाः, प्रियालपन साराणि यौवनानीव वनानि, विटपि हिताश्चेटिका इव वाटिकाः निर्वृतिस्थानानि सकलत्राणीवेक्षुक्षेत्रसत्राणि, जलाविलक्षणाः, पशुपुरुषा इवाप्रमाणास्तडागभागाः कुपितकपिकुलाकुलिता लङ्केश्वरकिङ्कराइव (१)भग्नकुम्भकर्णधन स्वापाः कूपाः पीवरोधसः सरित इव गावः (२)संतीव्रतापदोषाः सूर्यद्युतय इव कुलस्त्रियः ।।क।।

यत्र च मनोहारिसारसद्वन्द्वास्तत्पुरुषेण द्विगुना चाधिष्ठिताः कादम्बरीगद्यबन्धा इव दृश्यमानबहुव्रीहयः केदाराः ।।क।।

किं बहुना·····

नास्ति सा नागरी यत्र न वापी न पयोधरा
दृश्यते न च यत्र स्त्री नवापीनपयोधरा ।।

अपि च

भवन्ति कालगुने वृक्षशाखा विपल्लवाः
जायन्ते न तु लोकस्य कदापि च विपल्लवाः ।।

यत्र सौराज्यरञ्जितमनसः सकलसमृद्धिवर्धितमहोत्सव परम्परा रम्भ निर्भराः सततमकुलीनं कुलीनाः प्राप्तविमानमप्राप्तविमान भङ्गाः कतिपय वसुविराजितमनेकवसवः समुपहसन्ति स्वर्गवासिनं जनं जनाः ।।क।।

कथं चासौ स्वर्गान्न विशिष्यते ।।ख।।

यत्र गृहे गृहे गैर्यः स्त्रियः महेश्वरो लोकः सश्रीका हरयः पदे पदे धनदाः सन्ति लोकपालाः। केवलं न सुराधिपो राजा। न च विनायकः कश्चित्।।ग।।

यत्र चलतासम्बन्धः कलिकोपक्रमश्च पादपेषु दृश्यते, न पुरुषेषु ।।घ।।

यत्र चमरकवार्ता परमहिमोपघातश्च तुहिनाचलस्थलीषु श्रूयते,न प्रज्ञासु।।ङ।।

यश्च नीतिमत्पुरुषाधिष्ठितोऽप्यनीतिः, सटोऽप्यवट संकुलः कारूपयुतोऽप्यगतरूपशोभः।।च।।

यत्र च गुरुव्यतिक्रमं नक्षत्रराशयः मात्राकलहं लेखशालिकाः मित्रोदयद्वेषमुलूकाः अपत्यत्यागं कोकिलाः बन्धुजीवविधातं ग्रीष्मदिवसाः कुर्वन्ति न जनाः ।।क।।

किं बहुना·····

देशः पुण्यतमोद्देशः कस्यासौ नप्रियो भवेत्।
युक्तोऽनुक्रोश सम्पन्नैर्यो जनैरिव योजनैः ।।२८।।

तस्य विषयमध्ये निषधो नामास्ति जनपदः प्रथितः।
तत्र पुरी पुरुषोत्तम निवासयोग्यास्ति निषधेति ।।२९।।

जननीतिमुदितमनसा सततं सुस्वामिना कृतानन्दा ।
सा नागरी नागतनया गौरीव मनोहरा भाति ।।३०।।

यस्यामभ्रं लिहेन्द्रनीलशालशिखरसहस्रनिभृतांशुजालबालाशाद्वला इङ्कुराग्रग्रासलालसाः(२) स्खलन्तः खे खेदयन्ति मध्येदिनं सादिनं रविरथतुरङ्गमाः ।।क।।

यस्यां च स्फटिकमणिशिलानिबद्धभवनप्राङ्गण गतासु संचर-

द्गृहिणी चरणालक्तकपदपङ्क्तिषु पतन्ति निर्मल सलिलाभ्यन्तरतरलसणारुणकमलकाङ्क्ष्या मुग्धमधुपपटलानि।

यस्यां च विविधमणिनिर्मितवास भवनभव्य भित्तिषु स्वच्छासु स्वां छायामवलोकयन्त्यः कृतापरस्त्रीशंकाः कथमपि प्रत्यानीयन्ते प्रियैः प्रियतमाः।

यस्यां च दिव्यदेवकुलालंकृताः स्वर्गाः इव मार्गाः सततमपांसुवसनाः सागर इव नागराः समलवारणानि वनानीव भवनानि, (२) सुरसेनान्विताः स्वर्गभूपा इव कूपाः अधिकंधरोद्देशमुद्भासयन्तो हारा इव विहाराः ।।

## मुनेः वर्णनम्

एवंविधे च व्यतिकरे कोऽपि कान्तकार्तस्वर स्वरूपमुत्फुल्लापाण्डुपुष्पमालया मेरुशिखरमिव प्रदक्षिणाक्षीणलग्नया रक्षत्र राज्या जनितशोभं जटाभारमुद्वहन् अतिबहलमलयजरसरचिता विचित्र पुण्ड्रकमण्डनाममरशैलशिलामिव रङ्गत्त्रिस्रोतसं ललाटपट्टिकां कलयन् प्लवमान इवोज्जृम्भपंकज किञ्जल्ककपिलकायकान्तिकल्लोलेषु करुणारस पूर्णवक्षस्थल दीर्घिकायामन्तस्तरन्तीं बालकलहंस पक्षिपङ्क्तिमिव स्फारस्फारिकाक्षमालिकां बिभ्राणः कुशको पीनवासाः करकलितकुशकाण्डकमण्डलुमण्डलैः, तरुभिरिव विविध शाखैर्विधृत जटावल्कलैश्च, पर्वतैरिव समेखलैः स रुद्राक्षाक्षमालैश्च, नक्षत्रैरिवा समृगकृत्तिकाश्लेषैः सज्येष्ठाषढैश्च ससंमदैरपि नमदाकारमाकलयद्भिः अक्रीडैरपि च क्रीडापरैः रोमशैरपि विप्रवालकैः मुनिभिः परिवृतः सेवितपुराणपुरुषोऽप्यजनार्दनप्रियः प्रसन्नशंकरोऽप्यनाश्रितभवः प्रबुद्धोऽप्यबन्दीकृतजनः श्रमणोऽप्यजिनपरिग्रहः ग्रहगण इव नवधात्मको लोकानाम्। धनुर्धर इव नालीकसंघः हंस इव नदाम्भस्थानकप्रियः पन्नग इव नाकुलीनः सरस्वतीसंनिवासस्यमुखमन्दिरस्य वन्दनमालयेव प्रथमोद्भेद भासिन्या दंष्टिका-

रोमराजिरेखया श्यामलितोत्तरोष्ठपृष्ठः, कलिकाल कलङ्कशङ्-
काशरणागतैस्त्रिभिः पुण्ययुगैरिव सुसूत्रीभूयदेहलग्नैः त्रिपुष्कर
स्नानावसर विलग्नसरसबिसकाण्ड कुण्डलैरिव भक्त्याराधितत्रि-
पुरुषरचित रक्षासूक्ष्मरेखानुकारिभिः सितयज्ञोपवीततन्तुभिर्भू-
षितदेहः, शमी विद्रमा भाधरश्च प्रजापो विप्रजापश्च, सुतपाःकुतपश्-
लाघी च विकलत्रः सकलत्रश्च, यमान्तानुसारी सकुशलश्च,
विकचनवनलिनशङ्कया मिलन्मुक्तमुग्धमधुपमण्डलेनेव रुद्राक्ष-
वलयेन विराजितवामपाणिपल्लवः, न स्मृतः स्मरापस्मारेण, नाङ्-
गीकृतः कृतघ्नतया नालोकितः कितववृत्तेन नाकलितः कलिना, न
निरुद्धोविरुद्धक्रियाभिःअतितेजस्तयाद्वितीयइवपरब्रह्मणःतृतीयइव
सूर्याचन्द्रमसोः, चतुर्थ इव गार्हपत्याहवनीय दक्षिणाग्निनाम्,
पञ्चम इव दिक्पतीनाम्, षष्ट इव महाभूताधिदेवतानाम् सप्तम
इव मूर्तर्तूनाम्, अष्टम इव सप्तर्षीणाम्, नवम इव वसूनाम्, द-
शम इव ग्रहाणाम् अनवरतहृदयकमलकर्णिकान्तः स्फुरज्ज्योती रूप-
परमब्रह्मकान्तिकलोपनेव बहिर्निगच्छताच्छभस्मानुलेपेन कनक-
गिरिरिव विरलचन्द्रतापेनापाण्डुरितदेहः दीर्घसरस बिसकाण्डपाण्डुना
प्रचण्डपवनेनोर्ध्वमुल्लासितेन जटाजूटबन्धन पटप्रान्त पल्लवेन शिरः
पतद्गगनगलद्गङ्गाम्बुधाराहारिणो हरस्य स्वमिभक्त्या कृता-
नुकरणव्रतचर्यामिव कलयन् कोमले महसि तरुणे वयसि वृद्धे तपसि-
पृथुनि यशसि गुरुणि श्रेयसि वर्तमानः सदः सदाचाराणाम्, पात्रं
मैतीसुधायाः प्रासादः, प्रसदस्य, सिंधु साधुतायाः तरुणार्कमण्डल
मध्यान्मुनिरवातरत् ।।क।।

## राज्ञा भीमेन मुनेरभिवादनम्

राजतु दूरत एव तमायन्तमवलोक्य विस्मयविस्फरित विलो-
चनो हर्षवर्षविनिःसरद्बहुल पुलकोत्तम्भितोत्तरीयवासाः ससं-
भ्रममासनादुत्थाय कियन्त्यपि पदान्यभिमुखं समेत्य क्षितितल मिल-
न्मौलि मण्डलः प्रणाममकरोत्।

मुनिरपि सादारुणान्तयापि सौम्यया दृशा विद्रमप्रभा भिन्नया सुधासिन्धुतरङ्गमालयेव प्लावयन्नाशिषमवादीत्।

सिन्धुरस्पृहया स्पृशन्तिकरिणां कुम्भस्थमाधोरणा
भिल्लीपल्लवशङ्कया विचिनुते सान्द्रद्रुमद्रोणिषु।
कान्ताः कुङ्कुमकाङ्क्षया करतलेमृद्नन्ति लग्नं च य-
त्तत्तेजः प्रथमाद्भवं भ्रमकरं सौरं चिरं पातु वः ।।

दत्ताशीश्च(१)प्रणामपर्यस्तकर्णपूरपल्लव परामृष्ठपादपांसुरवनिपालेन स्वयमादरेणोपनीतमुच्चकञ्चनासन मध्यतिष्ठत्।

(अथ नरपति दत्ते प्राप्तसौन्दर्यनिर्यन्मणिमहसि, स तस्मिन्नासने संनिविष्टः)

अथनरपति दत्तेप्राप्तसौन्दर्यनिर्यन्मणिमहसि स तस्मिन्नासने
संनिविष्टः ।
रुचिररुचि सुमेरोः संगतः शृङ्गभागे कमल इव कान्तिं
कांचिदुच्चैर्बभार ।।

दत्त्वार्घमहणीयाय तस्मै सोऽपि महीपतिः ।
स्वहस्त धौतयोर्भक्त्या ववन्दे पपदयोर्जलम्
कृत्वातिथ्याक्रियां सम्यग्विनयं च प्रकाशयन्
तस्याग्रे भूतलं भेजे नोपविष्टः स विष्टरे ।।
ललाटपट्ट विन्यास्तपाणिसंपुटकुड्मलः
नोचैरुवाचवाचं च चञ्चद्दशनदीधितिः ।।
अद्य मे सुबहोः कालाच्छलाघनीयमभूदिदम् ।
त्वत्पादपद्मसंपर्शसंपन्नानुग्रहं गृहम् ।।

यतः समस्तमुनिमनुज वृन्दारकवृन्दवन्दनीय पादारविन्दाः, परमानन्द परिस्पन्दभाजः पांसुनिव पार्थिवान् तृणमिव स्त्रैणम्, निधनमिव धनम् रोगानिव भोगान् राजयक्ष्माणमिव लक्ष्मीम् आकलयन्तः सकलसंसार सुखविमुखाः कस्य भवादृशा भवनमवमरंति।

तदहमद्यानवद्यस्य भगवन्नभूवं भूम्नो यशोराशेर्भाजनम् आरूढः पदं श्लाघार्हम् आगतो गुणिषु गौरवम् उपलब्धवान्धन्यताम् संपन्नः पुण्यवतामग्रणीः जातो जनस्य वन्दनीयः।

तदित्थमनेक प्रकारोपकारिणां किंब्रवीमि, किंकरोऽस्मीति पौनरुक्त्यं सर्वस्वामिनाम्। केनार्थित्वमित्त्यनुचितादरो निःस्पृहाणाम् इदं मे सर्वस्वमात्मीक्रियतामिति स्वल्पोपचारः स्वाधीनाष्टगुणैश्वर्याणां भवताम्। तथापि प्रणयेन भक्त्या च मुखरितः किंचिद्विज्ञापयामि ।।ख।।

इदं राज्यमियं लक्ष्मीरिमे दारा इमे गृहाः ।
एते वयं विधेया वः कथ्यतां यदिहेप्सितम् ।।

मुनिरप्यवनीशस्य विनयमभिनन्द्य स्निग्ध मुग्धस्मितसुधा धवलिताधरपल्लवमब्रवीत्–। उचितमेतद्भवादृशां वक्तुं कर्तुं वा।

उपकर्तुं प्रियं वक्तुं कर्तुं स्नेहमकृत्रिमम्।
सज्जनानां स्वभावोऽयं केनेन्दुः शिशिरीकृतः ।।

अपि च

यथाचित्तं तथा वचो यथा वाचस्तथा क्रिया ।
चित्ते वाचि क्रियायां च साधूनामेकरूपता ।।

अपि च

विवेकः सह संपत्त्या विनयो विद्यया सह ।
प्रभुत्वं प्रश्रयोपेतं चिह्नमेतन्महात्मनाम् ।।

तदेतत्समस्तमस्ति त्वयि दीर्घायुषि, श्रूयतामिदानीं प्रस्तुतम्। अनवरतसुरासुरचक्रचूडामणीकृतचरणरजसश्चन्द्रचूडामणेर्देवस्यादेशेनागता वयम्। अवाप्स्यसि सकलजलधिजलकल्लोलमालालंकारभाजो भुवो भर्तुरुचितमतिमान्यं धन्यमसामान्यंकन्यारत्नम् इति।

## सालङ्कायनकृतः नलायोपदेशः

उपविष्टे च तस्मिन्ननभिवादनादुत्पन्नमन्युरीषत्कोपकम्पित-

करपरामृष्टकूर्चाग्निमग्रन्थिरग्रणीर्मन्त्रिमण्डलस्य भ्रूम भीषणया शोणकोणान्तरतरत्तरलतारयादृशाऽभिमुखमस्य सालङ्कायनःप्रणयपरुषाक्षरमभाषत।

कुमार राजहंसोऽपि अहंसरूपः इति मा स्म मोहवान्भूः। अनुभवति च मूढः शस्त्रसंघात इव कोशशून्यताम्। अविभवः पुरषो मेष इव कम्बलस्योपयोगं गच्छति ।

प्रद्युम्नजातोऽपि बाणयुद्धव्यतिकरकारिण्यासदोषयायौवनावस्थया निरुद्धोऽनिरुद्ध इवको नाम न क्लेशमनुभवति।

तत्तात सुविषमेघवर्तिनि विद्युद्विलास इवास्थिरे स्थितस्तारुण्ये मास्म विस्मर स्मयेन विनयम्।

अविनीतोऽग्निरिव दहति।

अजातनयश्छाग इव नाभिनन्द्यते जनेन।

किञ्चब्रूमः– सुसहायशून्यस्य भवतो यस्यामीमांसाभियोगा रक्षसा इव अन्यायाः पारदारिका इव, अयोगक्रिया लोहकारा इव, अश्रुतागमाः शोकवेगा इव सहायाः।

न च ते दुःशिक्षितनृपकलभव्याकरणमार्गेषु निपुणा नर्तकीव मित्र मण्डली।

तदायुष्मन्नहितया प्रकृत्या भुजङ्ग इव भयाय लोकस्य । उग्रसेनः कंसानुरागं जनयेत्।

अमृतमथनोद्यतहरिबाहुपञ्जर इव मन्दरसानुगतः को न घृष्यते। शुनीमिवास्थिरतां परिहर।

कुशीलताग्राही मा स्म तैलिक इव केवलं खलोपभोगाय भूः। आवर्जय गुणान्।

निर्गुणे धनुषीव सुवंश्येऽपि कस्याग्रहो भवति।

अभ्यस्य कलाः।

निष्कलो वीणाध्वनिरिव, प्रहास्यते न पुरुषः ।

त्यज जाड्यम्।

जाड्येयोगेन हिमानी दूष्यतां यति।

मा स्म मुखरो भूः ।

कर्णाटचेटीमिव मुखरतां न शंसन्ति साधवः।

भज माधुर्यम्।

धवलबलीवर्यपङ्क्तिरिव समाधुर्या वाणी मनोहरति।

वर्जय वैपरीत्यम्

विपरीतं शवमिव को न परिहरति।

कमलदीर्घाक्ष शिक्षाक्रेमेऽस्मिन्नपरमत्यभिधीयसे।

मा गाः स्त्रियाः श्रियो वा विश्वासम्।

अधिकमलवसतिरनार्यसगता स्त्री श्रीश्च कं न प्रतारयति।

या कालकूटद्वितीया नीरोषितापि नार्द्रहृदया भवति। स्वीकृतापि विवाहेन कंसानलङ्घनचापलेनोद्वेजयति।

अस्याः कारणेऽभ्रान्तः समस्तोमन्दरागः सदालोकः लोलनेत्रीकृताघृष्टा भुजङ्गमण्डली, प्राप्तो जलधी राजकुमार पराभवम्।

अनयावष्टब्धः को न गुरुवारणयोग्यो भवति, को न वाजिपृष्ठमरोहति कः कंकणन्नवञ्चनातः प्रकटयति, कः कण्ठे हारावमोचनं न कुरुते, को न काञ्चनशृङ्खलामनुभवति। कुरङ्ग इवान्धीभूतः को वागुरावञ्चनं करोति, कः कार्मुकनिर्मुक्त शिलीमुख इव न वैलक्षमागच्छति।

कस्य न पराभूतिर्भवति। कस्य नापूर्वं यशः समुच्छलति।

किमतोऽप्यस्याःपरमुच्यते।

यादवप्रियं शार्दूलमिव शूरं महत्तरं भयान्नोपसर्पति। सुनयनादेवरं सिंहमिव बलभद्रं दृष्ट्वा प्रपलायते। न वसुदेवोऽपि चक्षुः पातयति। केवलमनवरतशिक्षित वैदग्ध्यकालापराधात्मिकात्रपापरा परिहृत्य गुणिनो गुरून्परपुरुषे मायाविनि कृतकेशिवधे धृतमन्दरागे रागं बध्नाति।

तदायुष्मन्नतिगंभीरगुहा गिरीन्द्रभूरिव हृदयहारश्रेयोऽर्थिनां शरणं न स्त्री श्रीर्वा।

शृङ्गारप्रधानास्तात गाव इव विचारिताः सरसा भवन्ति न स्त्रियः।

तदेताः कन्दर्पकण्डूकषणविनोदमात्रोपकारिण्यो नात्य- न्त विश्वास योग्याः सर्वथा विश्वस्तं विश्वासमिव नरं कुर्वन्ति स्त्रियः।

श्रियोऽपि दानोपभोगाभ्यामुपयोगं नयेत्। न लोभं कुर्यात्। बहुलोभानुगतः किरणकलापोऽपि सन्तापयति जनम्।

अतः पुत्रः प्राप्स्यसि न चिरान्निजकुलकमल राजहंसीं राज्य- श्रियम्। अनवरतं कृतयशो दानन्देहि नारायण इव त्वयि चिरं रंस्यते खल्वियं लक्ष्मीः।

पाहि प्रजाः ।। प्रजापो ब्राह्मण इव क्षत्रियोपि न लिप्यते पातकैः। मा च वृद्धिं प्राप्य गुणेषु द्वेषं कार्षीः। व्याकरणे हि वृद्धिर्गुणं बाध्ते, न सत्पुरुषेषु।

वत्स मा यवं चेतसि कृथाश्छन्दसोऽयम्। छान्दसश्च गुरुर्वक्र स्वभाव एव गुरुर्वक्र स्वभाव एव भवति तत्किमनेनेति। यस्माच्चतुरा- नन्दिपदः पुण्यश्लोको भवान्। अतोऽङ्गभावं यान्ति ते वक्रोक्तयो- ऽपि गुरवः। सरलतया लघवोऽत्यन्तरङ्ग भवन्ति। किन्तु ते हवसाने कुटिलतामपि दर्शयन्ति।

तत्किं बहुना –

तथा भव यथा तात त्रैलोक्योदरदर्पणे
विशेषर्भूषितस्तैस्तैर्नित्यमात्मानमीक्षसे ।।

किं चान्यत् –

बिभर्ति यो ह्यर्घनवारि पौरुषं करोति नम्रेच न वा रिपौरुषम् ।
न तेन राज्ञा सहसागराजिता भवेन्मही किं सहसागरा जिता ।।

किं तेन जातु जातेन मातुर्यौवनहारिणा ।
अरोहति न यः स्वस्य वंशस्याग्रे ध्वजो यथा ।।

एवमुक्त्वा विश्रान्तवाचि वाचस्पतिसमे मन्त्राणि राजापि प्रेमार्द्रया दृशा नलमवलोक्य वक्तुमारभत ।

## नलस्य दिक्पालैः संभाषणम्

इति प्रकाशितप्रश्रयालोपो पार्थिवपुंगवे पुरंदरो दरदलितकुन्दकलिकाकान्तदन्तद्युतिद्योतिताधरदलमीषद्विहस्य लीला वलितकंधरः कुबेरमुखमवलोकयांचकार।

सोऽपि निषधेश्वर, श्रूयतामस्मदागमनकारणम्।

अस्ति विदर्भाधिपतेर्भीमभूमिपालस्य सुता सुतारनयन निर्जितेन्दीवरावराथिनी निजकान्तितिरस्कृत त्रिदिव नारीरूपसम्पत्तिः कुन्ददन्ती दमयन्ती नाम।

तस्याश्च चम्पकदलावयातदेहायाः किल स्वयंवरमहोत्सवः साम्प्रतं प्रस्तुतः इति नारदादधिगम्य वयमपि विदर्भाधिपतिपुरं प्रस्थिताः।

किन्तु लघयति पुरुषं स्वमुखेनार्थिभावो यतस्तत्र गत्वापि दमयन्तीं किं ब्रूमो वयमिन्द्रादयो लोकपालास्त्वामर्थयामह इत्यसदृशं महिम्नोऽस्मद्विधेषु स्पृहणीयरूपासि कं नोत्सुकय सीत्यनुचितमपरिचितेषु चाटुचातुर्यम्, अजरसः खल्वमरा वयमिति ग्राम्यः स्वप्रशंसोपक्रमः प्राप्नुहि त्रयाणामपिलोकानामधिपत्यमस्मत्संगमादिति महत्प्रागल्भ्यप्रलोभनम् अल्पायुषो मनुष्यास्तदस्माकं देवानां मध्ये कंचिद्वृणीष्वेति पापीयः परदोषोदाहरण द्वारेणाभ्यर्थनम्।

अतो देशकालकार्योक्ति कुशलस्त्वामुच्यसे। गच्छाग्रे भव दूतो देवानामशेषदग्ध्यविशेषोक्तिकोविदकिमन्यादिह शिक्ष्यसे तैस्तैरुपायैः ताभिस्ताभिः कलाभिः तैस्तैः प्रलोभन प्रकारैः क्रियतां देवकार्यम्, आर्याणां प्रायः परोपकारकरणार्थमेव जन्म जजीवतिं च न च

भवन्तमस्मदनुभावादन्यः कोऽपि कन्यान्तःपुरे रहस्यपि वर्तमानां विदर्भेश्वरसुतामुपसर्पन्तमुपलक्षिष्यते इत्यभिधाय व्यरंसीत्।

नलोऽप्येतदाकर्ण्य तदिदं संकटम्। इतो व्याघ्र इतस्तदी, इतो दवाग्निरितोदस्यवः इतो दुष्टदन्दशूक इतोऽत्यन्धकूपः इति न्यायात्। इतः कर्णान्तकृष्टशरासनो ममप्रहारी प्रहरति मकरध्वज इतश्चायमेतेषामलङ्घनीय आदेशः तन्न जानीमः किमत्रोत्तरम्। एकत्रार्थेऽस्माकं भवतां च प्रवृत्तिरिति प्रणयप्रार्थनाभङ्गकारिणी विहतविनया प्रतिकूलोक्तिः अनभिज्ञोऽस्मि दूतोक्तीनामिति शाठ्यम्। असमर्थोऽस्मि संदिग्ध क्रिया कारितायामित्याज्ञालङ्घनम्, आज्ञालङ्घनं च सेतुबन्धनमिव स्खलयति श्रेयः स्रोतः षण्डमुखदर्शनमिव वर्धयत्यलक्ष्मीम् रजस्वलाभिगमनमिव हरत्यायुः इत्यनेकविधमवधार्य न नाम दुरधिगमाः केऽपि पदार्थास्तत्रभवतामशेषजगदीश्वराणाम् न च न जानीय ममापि प्रसिद्धमध्यवसायम्। एवं स्थितेऽप्येष वः करोम्यादेशम्। आदिष्टपरापशो न श्रेया नादेशकरिणः किन्तु बलीयान्परतोर्विधिः प्रमाणम्, इत्यभिधाय भक्त्या भयेन च देवानां दौत्यादेशं समर्थितवान् स्थित्वा च कंचित्क्षणमुचितालापलीलयाकृत्वा च कांश्चिदन्योन्य प्रस्तुत प्रिय व्यवहारान् आपृच्छय यथागतं गतेष्वथ तेषु देवेषु निषधेश्वरश्चिरं चिन्तयां चकार।

## विदर्भेषु नलस्यावसथः

क्रमेण च निःसृते समस्तसेवकजने विशान्त तूर्यतालगीतासु निर्यातनर्तकी विरहखेदाविव मूकीभूतासु नृत्यशालासु निश्शब्दतया सुप्तास्विवार्थाधिकारककुटीषु शून्यतया मध्याह्न तन्द्रीमूर्च्छितेष्विव समस्तमण्डपेषु संक्रान्त सेवाविलासिनी चरणकुङ्कुमपदपङ्क्तितया विकीर्णविकसित रक्तारविन्द इव प्रकाशमाने राजभवनाङ्गणे घनं ध्वनन्तीषु भोजनावसर शङ्खकाहलासु धावमानेषु प्रत्यास्वादकजनेषु परिमृज्यमानास्वतिथि सत्त्रशालासु सज्जीक्रियमाणेष्वग्राशनब्राह्मणेषु प्रवेश्यमानासु गोग्रासयोग्यासु कपिलासु

पुण्यगवीषु प्रक्षाल्यमानेषु वायसबलिस्तम्भ शिखरकलकेषु बहिर्दीयमानेषु दीनानाथभिक्षुकभैक्ष्यपिण्डेषु, समुपलिप्यमानासु भोजनस्थानवेदीषु संचार्यमाणेषु चकोरपञ्जरेषु निवेद्यमाननैवेधासु पूज्यराज्याधिदेवतासु वैश्वदेवाहुतिगन्धवाहिनि वहति विविधान्नपाक परिमलमनोहरे महानस मरुति निर्वतितमज्जनादि क्रिया कलापे भजति भोजनभुवं भूभुजि बहिः सूपकारकलकलः समुल्ललास।

आज्यं प्राज्यमभिन्नकुन्दकलिकाकल्पश्च शालयोदनो
धूपामोद मनोहरा शिखरिणी स्वादूनि शाकानि च ।
पेयास्वाद्यकवल्यलेह्स्यबहुलं नानाविधं भुज्यतां
भोज्यं भीममहानृपस्य सुतया संप्रेषितं सैनिकाः ।।

अहो नु खल्वमीमत्स्यमांसैर्विहितमुदीच्यप्रतीच्यप्राच्यजनाः प्रियसक्तवो भोक्तुमेव न जानन्ति।

विरलः खलु दाक्षिणात्येषु मांसाशनंव्यवहारः ।

तदाकर्ण्यतां भो नैषधाः ।

आज्यप्राज्यपरान्नकूरकवलैर्मन्दां विधायक्षुधां
चातुर्जातक संस्कृतो नु शनकैरिक्षो रसः पीयताम्।
संभारस्पृहणीयते मनरसानास्वाद्य किंचिलतः
स्निग्धस्तब्धदधिद्रवेण सरसः शाल्योदनो भुज्यताम् ।।

राजा तु प्रतीहार विनिश्चीयतां किमयं बहिः कलकलव्यतिकरः इत्यभिधाय तत्कालयोग्यपरिजनपरिवृतो भोक्तुमुपाविशत्।

त्वरितं च गत्वागतश्च स प्रतीहारो विज्ञापयां बभूव।

देव दमयन्त्या प्रहिताः सूपकाराः सैन्यजनम्, आब्राह्मणान्त्यजागेपालकम् आकरितुरगवाहनम् आसामन्तनियुक्तकम् आस्वाद्यैस्तैस्तैरन्नविशेषैर्भोजयन्ति।

लग्ना सर्वतो दृश्यन्ते पर्वताः पक्वान्नस्य, राशयः शाल्योदनस्य, स्तूपाः सूपस्य निर्भराः सर्पिषः सिन्धवोमधुनः निकराः शर्करायाः स्रोतांसि दधिदुग्धयोः शैलाः शाकानाम्, निपानानि पानकानाम्

कुलयाः फलरसनाम्, कूटाः कषायाम्ललवणतिक्तमधुरोपदंशानाम्।

एवमकार्पण्यमिच्छया भोजित सैन्यम्।

अपि च

भुक्तान्ते घृतदिग्धहस्तलयोरुद्धर्तनं चन्दनं
पश्चान्नागरखण्डपाण्डुलदलैस्ताम्बूलदानक्रमः।
एकैकस्य मृणालतन्तुमृदुनो दले ततो वाससी
देव्या किंचिदचिन्त्यमेव भवतः सैन्यातिथेयं कृतम् ।।

इयं च रसवती देवस्य तया स्वहस्तपल्लवपरिमलनसंस्कृतै पाकविशेषैरलंकृत्य स्वमुद्रया मुद्रिता प्रहिता इत्यभिधाय व्यरंसीत्।

राजा तु मनावतरलितशिराः सस्मितमहो निरतिशय मुदारगम्भीरमुचितव्यवहारहारि लीलायितं तस्याः स्पृहणीयपरिमलश्चायमपूर्व इव कोऽपि पाकक्रमः।

तथाहि

इदमम्लमप्यनम्लास्वादम् इदमीषत्काषायमपिमधुरतां नीतम् इदमेकरसमप्येनकरसीकृतम्। इदमतिमृष्टतयाऽमृतमत्यतिशेते, रसवत्यापि रसवती विदर्भराजात्मजा इति विभायंस्तांस्तया प्रहितान्पाकविशेषानादरेणास्वादयामास।

चिन्तिवांश्च –

षड्रसाः किल वैद्येषु भरतेऽष्टौ नवापि वा।
तया तु पद्मपत्राक्ष्या सर्वमेकरसीकृतम् ।।

## दौत्यप्रवृत्तस्य नलस्य मनसि चिन्ता

अहो आश्चर्यम्–

रङ्गत्यङ्गकुरङ्गाक्ष्याश्चक्षुर्मे यत्र यत्र तु ।
दृश्यते तत्र तत्रैव बलाद्बाणकरः स्मरः ।।

तत्कथमियमन्यार्थे प्रार्थ्यते। तदुदह्यतामयं परप्रेष्यभावः।

याः। तिरयति स्वातन्त्र्यसुखम्, अभिमुखयति पारवश्यक्लेशम् आमन्त्रयति तिरस्कारं, आदारयति दैन्यम्। आह्वयति लघिमानम् आवाह्यति हास्यवादम्, समानयत्यौचित्यभङ्गम्, अङ्गीकारयति कार्पण्यम् अपहस्तयति वस्तुभावम्, पुरुषस्य।

सोच्छ्वासं मरणं निरग्निदहनं निःशृङ्खलं बन्धनं
निष्पङ्क मलिनं विनैव नरकं सैषा महायातना।
सेवासंजनितं जनस्य सुधियो दिक्पारवश्यंयतः
पञ्चानां सविशेषमेतदपरं षष्ठं महापातकम् ।।

किं चान्यत् –

प्रस्तुतस्यविरोधेनग्राम्यःसर्वोऽप्युपक्रमः।
वीणायां वाद्यमानायां वेदोद्गारो न रोचते ।।

तत्किमिदानीमिदमुच्यते। लोलाक्षि! लोकपालास्त्वामस्मन्मुखेन वृण्वन्ति इति प्रस्तुतानुरागभङ्गः तयादेशोऽपह्नूयते; स्वामिन्यन्यथा कथ्यते श्रेय स्खलनम् यथावृत्तमेवाख्यायते स्वार्थहानिः तद्वरमस्तु स्वार्थविघातो न तु विश्वस्तदेवता वञ्चनापातकम् इति चिन्तयन्नशेषमपितस्यै पुरन्दरोदशं सप्रपंचमाचचक्षे।

सापि स्तोकस्मितस्निग्धनम्रमुखीहं हे प्रियंवदिके प्रियास्मज्जीवितयाम्बया तातेन च मध्याह्ने समाहूय किमुक्तासि किं शिक्षिताऽसि। न नाम बालेयम् अविनीतेयम् आग्रहग्रहग्रस्तेयम् इति केनापि कर्णे जपेन तातस्य हृदयद्दूरीकृताहम्। वन्द्याः खलु गुरवो देवाश्च बिभेमि तेभ्योऽहम् इति प्रियंवदिकाख्यया सख्या सार्धमन्यालापमकरोत्

नलोऽपि मदिराक्षि, मदयति मदिरा तरलयति तारुण्यम् अन्धयति धनम्। उत्पथयति मन्मथः विरूपयति रूपाभिमानः खर्वयति गर्वः। सर्वजनप्रसिद्धमेतत्। किन्तु त्वमिदमसत्यतां मानैषीः। व्यभिचरतु तवाङ्गे सर्वमेतत्। नहि शशिनिवह्निः अमृते च विषाङ्करः संभवति। तदिमं देवादेशं मावज्ञासीः। सर्वथा प्रभवन्ति

प्राणिनाममी लोकपालाः। तत्रापि विशेषतः सकलत्रिदशाधिपतिरशेषसुरकिरीटमणिमयूखमालार्चित चरणारविन्दपुरन्दरो देवः। तद्वृणु कमप्यभीषाममृतभुजां मध्ये। मानस्य स्वर्गसुखानि। अभूमिरसि मर्त्यलोकस्तोकसुखानाम् इति पुनस्तामभ्यधात्।

एवं विधे च व्यतिकरे दमयन्त्या पुररुक्तमिमं जल्पमरण्यकरिण्येवारुन्तुदमङ्कुशमसहमानया मनास्तरलिते शिरसिस्तोकीकृते मनसि मुक्ते निःसह निःश्वासमरुति परावर्तिते चक्षुषि विवर्णतामानीते वदनारविन्दे प्रस्तावपण्डिता प्रियम्वदिका प्राह।

देव श्रुतं श्रोतव्यम्। अवधारितोदेवादेशः किन्तु न स्वतन्त्रेयम् ईश्वरेच्छय प्रवृत्ति निवृत्तयो यतः प्राणिनाम् अनालोचनगोचरश्चायमनुरागोऽङ्गनाजनस्य।

तथाहि –

तीव्र तपनतापप्रियाम्भोजिनो न सहते स्तोकमप्यमृतमुचोरुचश्चन्द्रस्य परिम्लायति मालतीमालिका सलिलसेकेन।

प्रसिंद्ध चैतत्–

भवतिहृदयहारी क्वापि कस्यापि कश्चि-<br>न्न खलु गुणविशेषः प्रेमबन्धप्रयोगे ।<br>किसलयति वनान्ते कोकिलालापरम्ये<br>विकसति न वसन्ते मालती कोऽत्र हेतुः ।।

एवमनकेविधोपाख्याननिपुणया तत्कालोचितम् अनुच्चस्मितसुधा स्निग्धम् अविरुद्धम् परिमितपरिहाससुन्दरम् अनुबृंहितानुरागम् उचित चाटुचटुलम् अशाठ्यम् अकठोरम्, अनुज्झितप्रियम् प्रियंवदिकया सहाल्पाल्पं जालपन् अयुक्तमिह कस्यान्तः पुरे चिरं स्थातुम् इति चिन्दयन्न पृच्छ्य दमयन्तीं नलः पर्यङ्किकापृष्ठा दुदतिष्ठत्।

प्रथमोत्थितया च तया लज्जावनम्रवदनारविन्दया सह सखीक-

दम्बकेन द्वित्राणि पादान्यनुगम्यमानो विहसन् अलमलमायासेन स्थीयतां सुखम् इत्यभिधाय स्वगृहानयासीत्।

गत्वा च शिरीषकुसुमदाममृदुनि शय्यातले निषण्णश्चिन्तायां चकार च–

हर्षादुत्पुलकं विकासि रभसादुत्तानितं कौतुका-
च्छृङ्गारादलसं भयात्तरलदृङ्नम्रं च लज्जाभरात्।
तस्यास्तन्नवसंगमे मृगदृशो दृश्येत भूयोऽपि किं
किंचित्काञ्चनगौरगण्डगलितस्वेदाम्बुरम्यं मुखम्।।

अपसरति न चक्षुषो मृगाक्षी
रजनिरियं, च न याति नैति निद्रा ।
प्रहरति मदनोऽपि दुःखितानां
बत बहुशोऽभिमुखीभवन्त्यपायाः ।।

इति विविधवितर्कविशविध्वस्तनिद्रः
सजलजडिम मीलत्पक्ष्म चक्षुर्दधानः
हर चरणसरोजद्वन्द्वमाधाय चित्ते
नृपतिरपि विदग्धः स त्रियामामनैषीत् ।।

# चम्पूरामायणम्

## प्रारम्भे श्लोकाः

लक्ष्मीं तनोतु नितरामितारानपेक्ष-
मङ्घ्रिद्वयं निगमशाखिशिखाप्रवालम्।
हैरम्बमम्बुरुहडम्बरचौर्यनिघ्नं
विघ्नाद्रिभेद शतधारधुरन्धरं नः ।।

उच्चैर्गतिर्जगति सिध्यति धर्मतश्चे
त्तस्य प्रमा च वचनैः कृतकेतरैश्चेत्।
तेषां प्रकाशनदशा च महीसुरैश्चे-
त्तानन्तरेण निपतेत् क्व नु मत्प्रणामः ।।

गद्यानुबन्धरसमिश्रितपद्यसूक्ति-
र्हृद्याहिवाद्यकलयाकलितेवगीतिः।
तस्माद्ददधातु कविमार्गजुषां सुखाय
चम्पूप्रबन्धरचनां रसना मदीया ।।

वालमीकिगीतरघुपुङ्गवकीर्तिलेशै-
स्तृप्तिं करोमि कथमप्यधुना बुधानाम्
गङ्गाजलैर्भुविभगीरथयत्नलब्धैः
किं तर्पणं न विदधाति नरः पितॄणाम् ।।

## देवताकृता महाविष्णुस्तुतिः

तदनु हविराहरणाय धरणौ कृतावतरणाः सर्वे गीर्वाणगणाः शतमखप्रमुखाश्चतुर्मुखाय दशमुखप्रतापग्रीष्मोष्मसंप्लोषणमावेद्य तेन सह शरणमिति शाङ्र्गधन्वानं मन्वाना नानाविधप्रस्तुतस्तुतयः क्षीराम्बुराशिमासेदुः।

संतापघ्नं सकलजगतां शाङ्र्गचापाभिरामं
लक्ष्मीविद्युल्लसितमतसीगुच्छसच्छायकायम् ।
वैकुण्ठाख्यं मुनिजनमनश्चातकानां शरण्यं
कारुण्यापं त्रिदशपरिषत्कालमेघं ददर्श ।।

क्षीराम्भोधेर्जठरमभितो देहभासां प्ररोहैः
कालोन्मीलत्कुवलयदलद्वैतमापादयन्तम् ।
आतन्वानं भुजगशयने कामपि क्षौमगौरे
निद्रामुद्रां निखिलजगती रक्षणे जागरूकाम् ।।

प्रह्लादस्य व्यसनममितं दैत्यवर्गस्य दम्भं
स्तम्भं वक्षःस्थलमपि रिपोर्यौगपद्येन भेत्तुम्।
बद्धश्रद्धंपुरुषवपुषामिश्रितेविश्वदृष्टे
दंष्ट्रारोचिर्विशदभुवने रंहसा सिंहवेषे ।।

नारायणाय नलिनायतलोचनाय
नामावशेषितमहाबलिवैभवाय ।
नानाचराचर विधायकजन्मदेश
नाभीपुटाय पुरुषाय नमः परस्मै ।।

इति प्रणम्योत्थितानेतान्स्तुतिरवमुखरितहरिन्मुखान्हरिहयप्रमुखानखिलानमरानरुणारुणतामरसविलासचोरैर्लोचनमरीचिसंतानैरानन्दयन्नरविन्दलोचनः स्फुटमभाषत।

अपि कुशलममर्त्याः स्वागतं सांप्रतं वः
शमितदनुजदम्भा किं नु दम्भोलिकेलिः ।

अपिधिषण मनीषानिर्मिता नीतिमार्गा-
स्त्रिदशनगरयोगक्षेमकृत्ये क्षमन्ते ।।

एवं भगवतः कुशलानुयोगपुरःसरीममृतासारसरसां सरस्वती-माकर्ण्य सम्पूर्णमनोरथानां सुमनसां संसत् पुंसे परस्मै विज्ञापयामास।

देव, कथमकुशलमाविर्भविद्भवता कृतावलम्बानामस्माकम्

अस्ति प्रशस्तविभवैर्विबुधैरलङ्घया
लङ्केतिनाम रजनीचरराजधानी ।
माणिक्यमन्दिर भुवां महसां प्ररोहै-
स्तेजस्त्रयाय दिनदीप दशां दिशन्ती ।।

एनां पुराणनगरीं नगरीतिसालां
सालाभिराम भुजनिर्जितयक्षराजः ।
हेलाभिभूतजगतां रजनीचराणां
राजा चिरादवति रावण नामधेयः ।।

यद्बाहुराहुरसनायितशस्त्रधारा
दिक्पालकीर्तिमयचन्द्रमसं ग्रसन्ति ।
यद्वैरिणां रणमुखे शरणप्रदायी
नैवास्ति कश्चिदमुमन्तकमन्तरेण ।।

अम्भोजसम्भवममुं बहुभिस्तपोभि-
राराधयन्वरमवाप परैर्दुरापम् ।
तस्मादशेष भुवनं निजशासनस्य
लक्षीकरोति रजनीचर चक्रवर्ती ।।

तेन वयं पराधीन इव भवामः ।

तथाहि ! सोऽयं कदाचित्क्रीडाधराधरमारुह्य सावरोधवधूजनश्चरणाभ्यां सञ्चरेतचेदागमिष्यत्याग इत्यनाविष्कृतातपो भयेन भगवान्सहस्रभानुरपि सङ्कुचितभानुरेव तत्सानूनि नूनं संश्रयते।

एष मृगाङ्कोऽपि मृगयायासपरिश्रान्ति विश्रान्त्यै ससंभ्रमं नमज्जनपरिवृते मज्जनगृहाभिमुखे दशमुखे तत्रत्यविचित्रतरशात-कुम्भस्तम्भाग्रप्रत्यग्रप्रत्युप्तस्फटिकशिलाशालभाञ्जिकापुञ्जकर-तलकलितनिजोपलमयकलशमुखादच्छाच्छाम विच्छिन्नधाराममम्बु-धारां निजकराभिमर्शादापादयंस्तस्य प्रसादपिशुनानां शुनासीरचिर-काङ्क्षितानां विंशतिविधवीक्षणानां क्षणमात्रं पात्रं भवति।

तेन पुलस्त्यनन्दनेन सङ्क्रन्दननन्दनात्स्वमन्दिरोद्यानमानी-तस्य मन्दारप्रमुखस्य वृन्दारकतरुवृन्दस्य बन्दीकृत सुरसुन्दरीनय-नेन्दीवरद्वन्द्वाच्च करारविन्दकलितकनककलशाच्च मन्दोष्णं स्यन्द-मानैरम्बुभिर्जम्बालितालवालस्य पचेलिमानामपि कुसुमानां पतन-भयमाशङ्कमानाः पवमानाः परिस्पन्दितुमपि प्रभावो न भवन्ति।

एतेऽपि पावका रूढिशङ्कावहां हुतवहाख्यां वहन्तस्तद्गृहे गार्हपत्यपुरोगाः पौरोगवधुरं दधते।

किं बहुना·····

स एष मानुषादवमाननमागमिष्यतीत्यमन्वानस्तदितरैरवध्य-त्वं चतुरानन वराल्लब्ध्वा समुद्धतः, सम्प्रति, सम्प्रहार समाक्रान्तदि-गन्तदन्तावलदन्तकुन्तव्रणकिणस्थपुटितवक्षस्थलः, स्थलकमलिनीं वनवारण इव रावणस्त्रिलोकीमभिभवन्भवदीयानित्यसम्मान्न जातु किंचिदपि जानातीति।

अथ भगवानाकर्ण्य गीर्वाणगणवाणीम्।

इन्द्रनीलाचलोदञ्चच्चन्द्रिकाधवलस्मितः
वाचमूचे सुधाधारां मधुरां मधुसूदनः ।।

भवतामपराधविधायिनस्तस्य यातुधानस्य निधनमधुनैव विधातुं शक्यम्।

किन्तु सरसिजासनशासनमप्यमोघीकुर्वन्नुर्वीतले पुत्रीयतः सुत्राममित्रस्य दशरथस्य मनोरथमपि पूरयितुमादृतमानुषवेषः सन्नहमेव तं हनिष्यामीति व्याहृत्यान्तरधात्।

ततः सा परिषदनिमिषाणामुन्मिषितहर्षा हृषीकेशात्प्रशमित दुर्दशानि निर्दशाननानि चतुर्दशभुवनानि बुद्ध्वा दुग्धसागरान्निरगात्।

ततस्तानमरान्प्राह स्म पितामहः ।

भवन्तस्तावदवतरिष्यतो लक्ष्मीसहायस्य साहाय्यार्थमप्सरःप्रभृतिषु युवतिषु वानराच्छभल्लगोपुच्छनीलमुखवेषभृतः, प्रथितप्रभावाः प्रजाः प्रजनयेयुरिति।।

## आञ्जनेयस्य मैथिल्या संभाषणम् ।।

तदनन्तरं समन्तात्प्रसारितनयना जनकतनया तस्यां शाखायां शाखामृगमुद्वीक्ष्य दुःस्वप्नबुद्ध्या चकितहृदया सलक्ष्मणाय रामायभर्त्रे भद्रमाशंसमाना जनमिमं दुरापस्वापं स्वप्नः कथमाप्नुयादिति विचिन्त्य मायया समायातनैर्ऋत पतिबुद्ध्या तस्मान्मारुतपुत्रात्त्रास।

सोऽपि समवतीर्य वचनवैचित्र्याज्जनकपुत्रीं प्रत्याययितुमाञ्जनेयः कृताञ्जलिर्व्यजिज्ञपत् ।

त्वया सह प्रस्थितचित्तवृत्ति
विभावरीकोकसमानधर्मा ।
वचोऽब्रवीन्मैथिलि ! मन्मुखेन
त्वां कौशलं कोसलराजपुत्रः ।।

शिरसा तव सौमित्रिरकरोदभिवादनम्
अपृच्छत्सोऽपि भद्रं त्वामधिपश्च वनौकसाम् ।।

एवं अभिहितया तया संभूतविस्रम्भतया भयादपेतया तावदनुयुक्तः पवनतनयो वालिमरणकारणं सुग्रीवस्य सख्यमाख्याय प्राचेतसचेत इव संततसंनिहित शमनाममङ्गलमङ्गुलीयमस्मै प्रायच्छत्।

सौख्यावहस्य पवनात्मज नीयमान
रामाङ्गुलीयक विलोकन वासरस्य ।
सत्यं कलां शतमतीं भुवि नैव भेजे
पाणिग्रहोत्सवदिनं जनकात्मजायाः ।।

ततस्तं जनकी निःसीमहर्षा बभाषे।

महाभाग ! सर्वथास्य दुरात्मनः प्रत्यासीददति मृत्युरेवमनला-भिधानया विभीषणदुहित्रा स्वमात्रा प्रेषितया भाषितं च। अयम-प्यनार्यशीलस्तुरीयमुपायमन्तरेण न मामार्यपुत्रस्य समर्पयिष्यति। नियतमहमपि मासादूर्ध्वं न शक्नुयां प्राणान्कृपणान्धारयितुमिति।

एतदाकर्ण्य मारुतिर्महानुभावे ! मा भैषीः। भवतीं वहन्नेव तुर्ण-मुल्लङ्घितसागरो रघुवरचरणसरसिजसमीपमुपयास्यामि। मामस-मर्थं न समर्थयेथा इत्यभिहितवान्।

महामहीध्रसध्रीचीं सोऽयं वृद्धिमुपेयिवान्
यया नूनमपां राशिः कुल्यातुल्यां दशां दधौ ।।

अथतमुवाच सा जनकराजसुता मुदिता
किमु तव दुष्करं चरणलङ्धितवारिनिधेः
अपि तु मया सह प्लवगपुंगव यस्यासि चे-
न्नियतमपायिनी परिणमेद्भवतः पदवी ।।

पातिव्रत्यहुताशनेन यदि तं कुर्यामहं भस्मसा-
त्सत्सं दाशरथेः शरस्य न भवेदात्मोचिता पारणा।
किं चैतस्य यशोनिशापतिरपि प्रम्लानकन्तिर्भवि-
दूभ्रातः। शासितरावणे रघुपतौ यात्रा मम श्रेयसी ।।

एवं व्याहृतः पवनसुतो विनीतां सीतां पुनराबभाषे।

मायामृगेण तव मैथिलि ! वञ्चितायाः
शाखामृगेण पुनरागतिरित्ययुक्तम्।
एषा कथापि भुवने वितता यदि स्या-
त्का नाम रामधनुषः प्रथिता प्रशस्तिः।।

किं बहुना, इत्येतदेव चिन्तितम्। यदर्हं राघव गृहिण्या-स्तदेव निश्चितम्। यत्सदृशमीदृशस्य समाचारस्य तदेव प्रकाशि-तम्। यदनुगुणं रावणापराधप्रतिक्रियायास्त देवानुमोदितम्। यद-नुकूलं कुलवधूशीलस्य तदेव कथितम्। यदुचितं क्षत्रियाणीवाणी प्रक्रमस्य तदेवोपक्रान्तमिति बहुशः प्रशस्य सर्वथा रामलक्ष्मणौ लङ्कामिमां प्राप्ताविति जानकि ! जानीहि ! अनुजानीहीमं जनं प्रस्थातुम्।

किञ्च–

काकुत्स्थेन विदितपूर्वमभिज्ञानं किमपि दीयतामिति।

सा तु दीर्घं निश्चित्य पुरा खलु चित्रकूटतटवने तरुणतर तरुणमणीयतया मन्दीभवन्नन्दन वैभवे नघुनन्दनेनाप धानीकृताङ्-काया मम पयोधर परिसरे खरतरनखराग्र विरचितविदारणं धाराधर-नामानं काकं रघुपतिर्व्यलोकयत्।

कुशरूपकुशेशयासनास्त्रं
विजहौ वासविवायसे सवीरः।
अथ तत्कृपया हताक्षिमात्र-
श्चिरजीवी स दधौ यथार्थ संज्ञाम् ।।

सैषा परिचित कथास्मरणा द्विगुणितदुर्दशा केशपिनद्धमप-रमिदमभिज्ञानमुन्मुच्य।

चूडामणिं कपिवरस्य ददौ दशास्य
संत्रास पुञ्जितरुषाग्निदशं कृशाङ्गी।
आदाय तम्प्रणतिपूर्वमसौ प्रतस्थे
माणिक्यगर्भवदनोरगतुल्यबाहुः ।।

# वरदाम्बिकापरिणयचम्पू

## नृसिंहदेवस्य परिणयः सुतोत्पत्तिश्च

निष्कण्टकीकृत्य नृपो धरित्रीममात्यवर्येष्वधिरोप्य राज्यम्।
साहित्यसङ्गीतमुखैः प्रसङ्गैर्निनाय कालं नियतप्रसन्नः ।।

कुलेन शीलेन गुणेन धन्या कन्या मया कापि विलोकितेति।
कथाप्रसङ्गेन कदाचिदूचे पुरोहितः पूर्णमनोरथस्य ।।

तदीय-वचन-निशमनमात्र-समुद्रिक्त-कौतूहलः, कियद्वा-वयः? कीदृशं रूपम् ? कमभिधानम् ? किमीयमपत्यम् कीदृशो वंशः? के पुनरस्या बंधवः ? कुत्र वा वर्तते ? सर्वमवगत्य सत्वरमागच्छेति पुरोहितं प्राहिणोत्, प्रहितः स एष तस्या बान्धवमुखाद् वृत्तान्तमखिलमवगम्य राज्ञे विज्ञाप्य तदनुमत्या साकममात्यगणेन दिवसकर कुलोत्तंस राचि-राज-रत्नाकर रेखाम्, श्रीरामाम्बिका-गर्भ-शुक्ति-मुक्ता-मणिम् अन्यूनतरान्वयोचित-शील-लावण्यदि-गुण-गण धन्याम्, कन्याम्, ओम्बमाम्बाभिधानाम् आनीय यथाविधि धरणिभुजा पर्यणीनयत्।

शङ्करीमिव शशाङ्ककिरीटस्तामुदूह्य, धरणीपरिणेता।
स्वर्विभोरपि मुहुः स्पृहणीयान् निर्विविश निखिलनिह भोगान्।।

कुलप्रदीपं गुणिनं कदा वा सुतं समासाद्य सुखी भवेयम्।
इत्युच्युतं प्रार्थयमान एव कालाननैषीत्कतिचित् क्षितीशः।।

कदाचन-स्वप्न-समागत-रमा-सख-वितीर्ण-कुमारवर-वर-प्रदान वचन-प्रसङ्गेन सह परिस्फुटावलग्नायाः, सपत्नी-वक्तशतपत्रैः सह मेचकी भवदुरोज-चूचुकायाः, पार्थिव-वीचिकया सहोपचीय-मानाखिल-प्रतीकायाः, वयस्या-जन-मनः-प्रसादेन सहाति-विमल-तर-कपोल-पालिकायाः, अवचन-प्रकाशित-निर्भर-गर्भभारायाः, नृपालानीत-समस्त-वस्तुजात-निस्तीर्ण दोहद-खेदायास्तस्या देव्याः, प्रकटिताखिल-जन-प्रमोद-प्रयोजनो वैजननमासः प्रादुरासीत्। अथ तदानीमवनीपतिरानीय समस्त कर्त्तान्तिक-वर्गमेकाग्रतया पुत्रो-दयसमयं प्रत्यपालयत्।

दुग्धाम्बुराशिलहरीव तुषारभानु-
मर्थं नवीनमनघा सुकवेरिवोक्तिः।
प्रत्यङ्मुखस्य यमिनः प्रतिभेव बोधम्
प्रासूत भाग्यमहितं सुतमोम्बमाम्बा ।।

नटदखिलजनं नदन्मृदङ्गम्, स्फुरदितरेतरपूर्णपात्रदानम्।
नगरमिव विभोर्नभोरुभोगं जगदभवज्जननेन तस्य सर्वम्।।

उल्लासैःसममधुरुत्सवाःप्रसिद्धिं
प्रासीदन् सह महतां मनोभिराशाः।
आशीर्भिस्सममुदगुर्मृदङ्गनादाः
काराभिस्सममगलन् कलिप्रकाराः ।।

मन्दानिलाहतमहीरुहपुष्पजालै-
र्मह्यामिवाकृषत मङ्गलरङ्गवल्लीः।
वल्गत्प्रदक्षिण शिखावलयैर्हुताशा
नीराजनामनुगृहं नियतं व्यतन्वन् ।।

अथ तदानीं कुमार-जन्म-सम्मद-निवेदनाय-सरभसमभि-पतन्तीनाम्, अनुपद विलम्बितमहं पूर्विकया युगपदेव "कुमारःकुमारः" इत्युद्घोषयन्तीनाम्, अन्तःपुरपुरन्ध्रीणाम्, अनुलापेन, पर्व-शर्वरी-परिवृढ-मरीचि-परम्परा-सुधा-पूरेण, कलशा कूपार इव प्रतिक्षण मन्तर्हृदयमपरिमितानन्दभरोपचीयमान-वपुरवनीपतिः, अपर-जनानौपयिकमपि अङ्गस्पृष्टमाभरणकलापमभिमताप-रिमेय-स्वापतेय-जातेन-समं वितीर्य तासामासादित-प्रसादः, सन्निहित-समाहित-पुरोहित-ससंभ्र-माहूत - मौहूर्तिक-वर्ग-निर्णीत-नैसर्गिक-चक्रवर्ति-पदार्पण-लग्नक-शुभ-ग्रह-चक्रचार-समुचित-लग्नबल -श्रवण-द्विगुणीकृतोत्साह-बहुप्रकार-प्रवर्तित-महोत्सवः, तत्समय-समेत-नानादेशागत महीसुर-व्रातसात्कृत-समस्त-वस्तु-जातः, पुरोहितेन सममभ्यन्तरं प्रविश्य-सूतिका-गृह-सविधमुपागतायाः पुरोहित-वनिताया-विशङ्कटाङ्कपर्यङ्कालङ्करणं, पूर्व सर्वंसहाधरशिखरवर्तिनं भानुमन्तमिव परिस्फुरन्तं बालकमालोक्य त्रैलोक्यमपि करतालान्तर्गतमेव तर्कितवान्।

पूर्णचन्द्रपुनरुक्तमाननं नन्दनस्य नरपालकेसरी ।
विस्मयस्तिमितवीक्षणश्चिरं पश्यति स्म फलिताखिलाशयः।।

विनयनयविवेकविक्रमादिष्वखिलगुणेष्वमुमच्युतंविदित्वा।
अभिजनकृतसम्मतिर्व्यतानीदवनिपतिस्सुतमच्युताभिधानम्।।

कुलोचितं कर्म कुमारकस्य व्यतानि सर्वं विधिवन्नृपेण ।
आसीद्दिनेनायममेयतेजाः सदाशयस्यद्गुरुदीक्षयेव ।।

धीरस्य धीरस्य गुरूपदिष्टा विद्यास्समस्तास्सकलाः कलाश्च।
अधारयद्यत्नमपास्यसद्यःसूचीरयस्कान्तशलाकिकेव।।

उद्यन्तं प्रथमावनीधरतटादोजांसि भानुं यथा
प्रत्यग्रा गुरुसन्निधौतमभजन् प्राग्वासनाभिः कलाः।
आमोदं हृदयेषु सर्वजगतामातन्वते साम्प्रतं
ता एताः परिहृत्य मोहमखिलं तानीव गाढंतमः ।।

अनन्तरमनन्य-सामान्य-सौजन्येन, अन्यूनाधीत-विविधा-युध नैपुण्येन, कारुण्य-दाक्षिण्यादि-गुण-शरण्येन, पुण्यतर-सरण्यधीन-मति-विन्यासेन, निपुण-गण्य-प्राज्य-साम्राज्य-रमा-समागम-पैशुन्य-मुखर-कल्याण-सर्व-लक्षणानुगुण्य-वर्णनीयेन, कलशार्णोराशि-कन्य-का-रमण-चरण-स्मरण-निशित-नियत-शुभाचारेण-निसर्गोदग्र-शक्ति -निराकृत कुमारेण कुमारेणानेन धरण्याःपतिरात्मनो नियतममन्यत् धन्यतममन्ववायम्।

कालाद् बहोरथ महीं विरहासहिष्णु-
माश्वास्य नव्यनिजशाश्वतकीर्तिमूर्त्या ।
नानागुणश्रवणकौतुकिनां सुराणां
नाथेन सख्यमभजन् नरसक्षितीशः ।।

अतः परमनूचिन्तित-निखिल-जन-हित-कृत्यैः-अमात्यैः, अनु-नीय समानीतः स्पृहणीय-विनीति-नीति-मुख-महनीय-गुण-गण-समुच्चरित-निधिरच्युत-धरणीपतिः-स्वयंवरादरणीमवनीं प्रधान-गृहिणीपदमानीय आत्मजना राजन्वतीमतानीत्।

अनुकल-जाज्वल्यमान-मणि-ज्योतिरातप-जाल-जटिलेषु, बिले-शय-तिलक-फणा-फलकेषु,निसर्ग-निशिताग्रेनिर्दयाग्र-क्रोडदंष्ट्रा-क्रक-च-चक्रे-जलद-मार्ग-लंघन-जङ्घालेषु, शिखरिशृङ्गजालेषु च निषद्य निर्वर्तित तीव्रतर-तपोनिरन्तरा वसुन्धरा निखिल-गुण-निरवद्यं मृग-नहुष-भरत भगीरथ-नलादि-नृपालानासाद्य नीतिप्रद्योत-विद्योतमान-मेनमासाद्य पत्यपद्यता मन्दमानन्दम्।

महीमहेन्द्रस्य तस्य स्वान्तमधिवसन्तम्, अरविन्दनयनम्, अभिगन्तुमिव, सन्ततमुरोरन्तराल-भुज-तटान्तरयोर्वि[illegible] वसति-



मिन्दिरावसुन्धरे। अथ नरपतेरस्य स्वभावसुभगं वपुर्नन्दनमिव वसन्तः, नयमिव विनयः, नालीक मुकुलमिव विकासः नदी-नायक-मिवविधूदयः, नक्षत्रेशमिव शरदागमः, नागेन्द्रमिव महोदयः, नारायणभुजमध्यमिव कौस्तुभमणिः, अद्योतयत नतमध्याजननयना-मृताप्लावनम् नलिन शरसञ्जीवनम्, नारितललितरसभाव-नम् नासत्यादि रूपपरिभावनम्, नवयौवनम्।

शरणागत-नरपालक-लोकालिक-भाग-भावुक - रेखा - मातृका - रेखायितोर्ध्वरेखाञ्चल - प्रपञ्चित-मत्स्यरेखया मकरकेतनमधो वि-धायेव वर्तमानम् संवाहनपर-वरारोहा परिषदुरोरुह-कुम्भ सम्भाव-नार्हता-प्रकाशन-कुशल-कलश चिह्न-समन्वितम्, अनुदिनमह-महमिकया विनमतामवनिपतीनाममित-बहुविध-मणि-गणस्थपु-टित-कठिन-किरीट-कोटि-संचयेनापि कठिनतां नादधादवनिभुज-श्चरणयुगलम्। सामन्त-वसुन्धराधिप-कुन्तल-कुसुम-वान्त-मक-रन्द-पूरनिरन्तर-क्षालनयेव चरणारविन्दतलान्तरे कमल-कुलिशात पत्राकाररेखाः प्रकाशन्त।

अनवरतमखिल-दैवत-पूजोपकरणता-समासादित-सुकृत-परिणतिभिश्चरणतामस्य समश्नुवानं बिसप्रसूनं शाश्वदशेष-जगदीश्वर-वदनसहस्रपत्रैर्वरिवस्यामजस्रमशिश्रियत्।

अस्मत्कुलाधिपतिराप जगत्त्रयाधःपातित्यमित्यपयशः परि-मर्ष्टुमेव।

प्राप्याधिकोन्नततरप्रपदत्वमस्य कालाद्बहोरवहतां कमठौ प्रशस्तिम् ।।

"मनोज्ञतारुण्यमदद्विपेन्द्रनिदम्भनस्तम्भविडम्बनार्हम्।
उपर्युपर्यूरुयुगं प्रवृद्धं प्रियाजनप्रेमभरैरिवास्य ।।"

श्रीनृसिंहकुमारोऽयं सिंह संहननोऽभवत् ।
सिंहमध्यतया तस्य चित्रं किमिव साम्प्रतम् ।।

सकल-कला-कलाप-चातुर्य-गांभीर्य-करुणा-रसौदार्य - शौर्यारा-धन-वितरणादि-स्पृहणीयमहनीय-गुण-गणानाम्, असम्बाध-संचर-णस्य-हृदयेऽवकाशं प्रस्तावयितुमिव विस्तारमगात् वक्षस्तटम्।

प्रफुल्ल कल्हार-पल्लव-तल्लज-स्थलारविन्द कान्ति-सन्तति सन्तताहरण-परिणत्येव-व्यक्तरागं हस्तयुगं समस्त-विमत पार्थिव-साम्राज्य-रमा-निरन्तर-सञ्चरणेनेव व्यञ्जयति स्म अनन्यसामान्यं काठिन्यम्।

विस्तृत-वक्षस्थल-लक्ष्मी-सौध-पार्श्व-द्वय-निक्षिप्त-मणि-कलश-लक्ष्मी-समान-कक्ष्यारभटी-सुमांसलमंसयुगलं तरुणिमारम्भ-स्तम्बे-रमकुम्भभावमवालम्बत।

रभसाश्लेष-रसाभिलाषिणीनां राजन्यकन्यकानां रागातियोगेन युगपदनुकलमभिपतद्भिश्चेतोभिरिव निरन्तरा, जय-दुंदुभि-मद-सिन्धुर-निनद-निरोध-धौरन्धर्य-हर्षोन्मेष-पोषसमिन्धानेव परिणाह-मवहत बन्धुराकन्धरा।

हृदन्तर - निरन्तर - सञ्चरदञ्जनगिरि - सप्रभ - कैटभारि -मुख-कञ्ज- मुखर - पाञ्चजन्य - निनद - प्रपञ्च-कञ्चुकित इव, रसना- चत्वार-विसृत्वर निरवद्य-विद्या-कलापाकूपार-क्षीरवापूरित इवागाद- कुण्ठः कण्ठः पिकस्वरताम्।

लावण्याब्धिभवोनित्यं तारुण्यशरदुज्ज्वालः।
असंख्येयकलश्चित्रमाननेन्दुः प्रवर्धते ॥
अनवद्यतदाननोपमाशादुरितेनैव शशी मषीविलिप्तः।
कमलं च सहस्रधा विभिन्नं कथयेत्साम्यकथां बुधः कथं वा॥

# केरलाभरणम्

## प्रारम्भश्लोकाः

न तामन्ये येषां कुकवनमहादावदहन-
प्रसर्पज्ज्वालाभिः प्रलयमुपयात्येव भुवनम्।
निगुम्भो (फो) यद्वाचां स जयतु विरिञ्चाननपुरी
नटद्वाणीपाणिस्फुरित मणिवीणाध्वनिसखः ।।

मर्माणि कृन्तति शनैरपहन्ति मेधा
मन्यादृशं मनसि वैकृतमादधाति
प्रायेण दुष्कविवचःश्रवणं बुधानां
प्राचीनजन्मकृतदुष्कृतदुर्विपाकः ।।

वन्ये वृक्षे फलमिव मयि न्यस्य वाचं भवानि
प्रायोहृष्टाभवसिसकलज्ञानशून्येऽद्य लोके।
प्राज्ञो भूपो नहि नहि पुनर्नैव विद्वान् गुणज्ञः
त्वद्दत्तां मे फणितिमनघां त्वत्पदाब्जेऽर्पयामि ।।

निन्दां कन्दलयन्तु केऽपि विबुधा मात्सर्यदुष्टग्रह-
ग्रस्ता द्वित्रपदैकबन्धनभवन्मूर्च्छाविमूढाशयाः।
वाग्गुम्भेष्वपि मामकेषु न हि मे हानिर्मणीनां गणाः
ज्योतिः पुञ्जममी किरन्ति किमुते हीनार्घतो निन्दिताः।।

सङ्गीतं श्रवणक्षणे सुखकरं नृत्तं तथालोकने
कामिन्यो नवविभ्रमाः कुचपरीरम्भान्तसौख्यप्रदाः।
वाचां गुम्भ(फ)नसंभ्रमस्तु सुकवेराचन्द्रतारं यशो
लोके स्थापयति प्रमार्ष्टि दुरितान्यानन्द मासिञ्चति ॥

शास्त्रेषु सत्स्वपि कलास्वपि तादृशीषु
काव्ये स्थितं मम मनः कृपयाम्बिकायाः
वाल्मीकितापसवरश्च पराशरस्य
भाग्यं मुनिश्च भुवनेषु कथं प्रसिद्धौ ॥

अस्मिन्नर्थेऽर्थवादो विधिरयमिति च प्रत्ययो नास्तियेषां
शब्दव्युत्पल्यभावादपि सकलजने तुल्यतां ये भजन्ते ।
उच्चैर्घोषेण मूढेऽप्यनुचितमतयस्तन्वते ये तु पूजां
तेषामग्रे प्रबन्धान् सरसमभिवदन् किन्नुकुर्यात् कवीन्द्रः॥

न रसो न गुणो न चार्थपोषो
मृदुता वा नहि मामके प्रबन्धे।
सरसीरुहनाभकीर्तिलेशैः
सरसानां हृदये पदं दधातु ॥

**कथाप्रारम्भः**

कतमो देशो रम्यः कस्याचारो मनोहरो महताम् ।

इति वादिनि देवपतौ संघर्षोऽभूद् वादिनि वसिष्ठगाधि-जयोः।

वसिष्ठः— देव, पाकशासन, कोङ्कण कलिङ्ग मगधकाम-रूप गुर्जरकुन्तल नेपालान् विना सर्वे देशाः समीचीनाः, समीचीना चाराश्चेति ममभिमानः।

इन्द्रः— भगवान्, गाधिनन्दन किमत्र भवतां भवतामभि-मतम्।

विश्वामित्रः— उक्ताचारानुष्ठाने सर्वोऽपिदेशो न समीचीनः।

स्वधर्मानुष्ठाने सर्वस्यापि सर्वो देशः समीचन एव। तदभावे काश्यपि विपरीता। तदुक्तं काशीखण्डे।

अशनं वसनं वासः काश्यां येषाममार्गतः ।
कीकटेन समा काशी गङ्गाप्यङ्गार वाहिनी ।।

इन्द्रः– अस्मिन्देशे धर्मश्चरति नास्मिन्निति केनैतत्-ज्ञातुं शक्यते ?

वसिष्ठः– देव, भवतश्चारौ मकरन्द मिलिन्दनामानौ विद्याधरौ सर्व देशावलोकनाय प्रेषय।

इन्द्रः– तथा (इति तावादिदेश। ततः प्रतस्थे चारद्वयम्।)

## आन्ध्रदेशीयानां वर्णनम्

मिलिन्दः– पश्य, कृत, ब्राह्मणवध इव चित्र वपनो विचित्र-वेषः पञ्चशिखेनोपनीतेन बालेन सह सस्त्रीबालं जनैरनुसृतः समुत्सार्यते ?

मकरन्दः– (विहस्य) सखे किं न जानासि ? अचिर निवृत्त विवाहो मङ्गलप्रदक्षिणाय वीथीं निर्गच्छति जामाता भागिनेयः।

मिलिन्दः– कथं भागिनेयस्य कन्यका दीयते ? महान् प्रत्यवायः।

मकरन्दः– रुक्मिणीपुत्रो रक्मिपुत्री मुदवहदिति श्रुतमस्ति किं नाम ?

मिलिन्दः– स खलु क्षत्रधर्मः। कथं ब्राह्मणधर्मो भविष्यति?

मकरन्दः– एतेऽपिद्विजत्वा तद्धर्ममनुवर्तन्ते।

मिलिन्दः– सामान्य प्रत्यासत्त्या तद्धर्मानुष्ठाने, प्रमेयत्व प्रत्यासत्या सर्वधर्मानुष्ठानमपि स्यात्।

मकरन्दः– नहि नहि। मातुलस्येव योषेति श्रुतिरत्र प्रमाणमिति वर्णयन्ति।

मिलिन्दः–

मातुलस्य सुता मूढवा मातृगोत्रां तथैव च ।
समानप्रवरां चैव सद्यश्चण्डलतां व्रजेत् ।।

इति प्रत्यक्ष वचनविरोधात् योषाशब्दं सामान्य वाचिनं कथं प्रमाणमिति मन्यन्ते।

मकरन्दः–

लोभाद्यैर्हेतुभिर्दृष्टैः यद्देशेक्रियते हि यत् ।
विदुः स धर्मः शास्त्रीय इति तद्देशवासिनः।।

तदुक्तं मनुनापि – विन्ध्यस्य दक्षिणतः पञ्चानाचारा उत्तरतः पञ्चानाचाराः इति।

मिलिन्दः – (निपुणं विलोक्य) सखे एतेषां महानयं परिणयोत्स-वाडम्बरः। अस्मिन् परिणयोत्सवे एकस्यायमेव जामातृपङ्क्तौ सम्बन्धदादूर्याय स्यालभागिनेय मातुलादिभिः तत्कामिनीभिश्च सह बान्धवा भुञ्जते। पत्राणि लोलयन्ति उच्छिष्टकबलैरन्योन्यं ताडयन्ति च। मधुवनीववानरैः पङ्क्तिर्दूष्यते कथं धर्मशास्त्रातिप्रसङ्ग?

मकरन्दः –

वैदिकाचारमुल्लङ्घ्य केचित्केवललौकिकाः ।
समयाचारमारुह्य भान्तिपूर्णमनोरथाः ।।

तिष्ठतु तावदेतेषां धमशास्त्र प्रसङ्गः। मनोहरः खल्वेतेषां मङ्गलाचारः। तथा हि –

किञ्चित्किञ्चित्प्रशिथिलगलत्केशपाशप्रसूनाः
मध्ये मध्ये मधुरमधुरं गीतमावर्तयन्त्यः ।
यूनां चित्तं नयनवलनैर्गादमुन्मादयन्त्यः
कुर्वन्त्यान्ध्रचो वरयुवतयो हन्त नीराजनानि ।।




(अन्यतोऽवलोक्य)

केचित्कच्चर जीर्णवस्त्रशकलैराकीर्णशीर्षाञ्जलाः
पञ्चाङ्गस्फुरदात्मकक्षविवरा विस्तीर्ण पुण्ड्रोज्ज्वलाः ।
ताम्बूलीदलकल्कसारमभितः संमार्जयन्तोमुहु-
र्गेहाद्गेहमटन्ति मङ्गलगिरा संवर्धयन्तो जनान् ।।

मिलिन्दः– क एते ?

मकरन्दः– एते खलु आन्ध्रजातीया यल्लुभट्ट मल्लुभट्टादयो नक्षत्रविद्याकुशलाः "तव तावदष्टमे मन्दो नवमे राहुः सप्तमे धरणिजो, जन्मनि गुरुः द्वादशे रविरित्यादि दुर्ग्रह चारान् वर्णयन्तः तच्छान्तये ग्रहयज्ञचरणेन भाव्यम्। पूर्णा च दक्षिणा दातव्या। तदशक्तौ चतुर्विंशति ब्राह्मणभोजनं ततोऽप्यशक्तौ द्वादश षट् पञ्चत्रयो वा। अथवा ममैव कुटुम्ब पूर्तिकरं देयम् इति गृह्णन्ति। अपि च पत्यापण वीथि संचरन्तः क्वचित्तुषमरीचमन्यत्र जीर्णक्रमुकमपरत्र जर्जर नागवल्लीदलमेकत्र धूमपत्र मूलानि इतरत्र शाकिनीदण्डानाददानाः धनिक द्वारमासाद्य ममायं ममायं पूर्वमाश्रयः पूर्वतरो ममैव ममायमाश्रय इति परस्परं तेन दीयमान धनं प्रति कलहायमानाः रोषावेषादन्योन्यं ग्रथिता निपतन्ति। तथा हि–

दत्वा किंचिन्नैव धान्यं धनं वा
दीनेभ्यो वा श्रोत्रियेभ्यः कदापि ।
लोभादेते मोहिताः पूर्वभावे
कष्टं कष्टं दीनदीनाश्चरन्ति ।।

मिलिन्दः– किं एते मौहूर्तिकाः भिषज इव निःशङ्कं सर्वभवनानि संचरन्ति ?

मकरन्दः– किं न जानासि ?

लब्ध्वा लब्ध्वा दक्षिणां श्राद्धदत्तां
गूढं चेट्यै मोहितास्त्वर्पयन्ति ।
भास्वद्गात्राः दर्भगन्धा क्षताद्यै
बृन्दे बृन्दे तेजसा च ज्वलन्ति ।।

मिलिन्दः – किमेते ज्येतिर्विदो भवन्ति।

मकरन्दः – जानन्तु वा मा वा निर्भरमेव वञ्चयन्ति पामरान्

तथाहि – कोपाघातो बालिशो दूरदेशं
तत्रास्ते वा याति वा किं निवृत्तः।
इत्थं प्रश्ने कर्णयोर्मानवाना
मायात्यास्ते याति चेत्यालपन्ति ।।

अस्तु तावदन्यत्र गच्छावः। इत एव प्रणत जनतुङ्गभद्राकलननिर्नि (र्णि) द्रा तुङ्गभद्रा। समीपवर्तिनो देशानवलोकयावः।

## माध्ववर्णनम्

मिलिन्दः – पश्य

नासामूलनिबद्ध पुण्ड्रविवरस्फूर्जन्मषीचित्रिताः
स्कन्धा सक्तशणोपक्लृप्तविचलद्भस्त्रीभरोद्वाहिनः।
मध्येदारितपक्वमांसलतर श्रीकारवल्लीफल
स्पर्धासादर पुण्ड्रशोभिततन बन्धाः क एते पुनः ।।

मकरन्दः – किं नाम न जानासि ?

कुशदीर्घानमिताङ्गा मधुमदमाद्यत्प्लवङ्गगतितुङ्गाः।
माध्वा एते केचिन्मठपतिमारादूधुमायान्ति ।।

इतः खलु पठपतयः केऽपि। एतेषामतिमधुरायते हरिपूजनम्।

मिलिन्दः– केन तावत्

मकरन्दः– विवृद्धकुचमण्डला विधृतगण्ड भूकुण्डला
झलंझलितमेखला झणझणन्मणीनूपुराः।
दर प्रशिथिलाम्बरा मुषित विधुदाडम्बरा
यतीन्द्रहरि पूजने समुपयान्ति वेगात् स्त्रियः।।

## केरलदेशीयानां वर्णनम्

नारदः – उत्सर्पिणी खलु कामप्रवृत्तिर्मुनीनामपि दृश्यते। सुरलोक सुन्दरी सहस्र विभ्रमलालसः सुरपतिः मुनिपत्नीमहल्यां किं न चकमे ? तथा हि –

पुम्भावानां जृम्भणं केरलीनां
प्रायः शृण्वन् किन्नरीणां मुखेन ।
रम्भादीनां भोगसंभावनायां
जम्भारातिर्नैव संरम्भमेति ।।

आरभ्य च धातुराकीटमयं स्वभावः सर्वेषाम्।

हितासु बालासु गुणाधिकासु
धनाधिकास्वप्रतिमासु रूपैः ।
चित्तं कुलस्त्रीषु न सक्तिमेति
यथा परस्त्रीषु विलक्षणासु ।।

भगवान् श्रूयताम्–

स्वत्वं दारेषु सर्वेषां कामनाया निवर्तकम् ।
परत्वमभिलाषस्य प्राणनाड्यभिधीयते ।।

सत्यमेवैतत्।

मकरन्दः – केरलदेशवृत्तान्तः सर्वोऽपि भवन्मुखद्वेतितव्यः। तदनुगृह्णात्तु मुहूर्तं मदुपरोध सहनेन।

नारदः – अनतिलंघनीयं खलु देवदूतवचनम्। वत्स, मलयशिखरमारुह्य पश्य –

मण्डनं वाससां खण्डः कर्णौ चूचुक लम्बिनौ ।
भाषा काकुस्वर प्राया बत केरल वासिनाम् ।।
करतलधृतदण्डाःपट्टकक्षावबद्धाः
तिलकित निटिलान्तः वस्त्रखण्डोपगूढाः।
कनकवलयहस्ताः कर्णलोलद्विभूषाः
सततविवृतकेशाः केरलीया व्रजन्ति ।।

मकरन्दः—नारद, एते खलु कामिजन मुर्धन्या धन्याः ।

तथाहि – स्रंसत्काञ्चीकलापैर्विगलितवसनैःशीर्ण-
कर्णावतंसैः
वल्गद्वक्षोजभारैर्विवलितनयनैर्विह्वलैर्मध्यनालैः।
नृत्यत्ताटङ्कचक्रै र्निटिलतट नटत्कुन्तलैर्निर्निरोधं
पुम्भावैः केरलीनां मदचपलदृशां ये त्रियामां नयन्ति।।

मिलिदः – परदारप्रवृत्तिः पातकाय इति कथमुल्लंघ्यते केरलीयैर्धर्मशास्त्रम्।

नारदः – वत्स, शब्दानामनेकार्थतया परशब्दस्याप्युत्कृष्टत्वमर्थ इति मन्यन्ते। न परकीयत्वम् येन तादृशदोषः स्यात्। येतु परत्वमन्यत्वमर्थ इति मन्यन्ते ते गच्छन्तु नाम। उत्कृष्ट दारगमनं दोषावहमनुत्कृष्ट दारगमनमदोषावहमिति वचनार्थः स्यात्।

मकरन्दः – किमत्र प्रमाणम्?

नारदः– पक्षान्तरासंभव एव। तथाहि न स्यात् परकीयत्वम्, केरले स्त्रीणां साधारणत्वेन परकीयत्वाभावात्।

मकरन्दः– केरले सर्वोऽपि कामिनीजनः परिणीयत इति श्रुतमस्ति किं नाम ?

नारदः– भुवि जनिमतां नृणां कदाचिदुत्सवेन भाव्यमिति परिणयोत्सवो नाट्यते। काचिन्निषादी तनयं प्रसूते, कश्चिन्निषादस्तु कषायपयी इतिवत् परिणेतुः किं तेन प्रयोजनम्? अत एव तदुद्देश्यताभावात् स्त्रीणां साधारणता।

मकरन्दः– भगवन् स्वदारव्यतिरिक्तत्वं परत्वमिति वर्णयन्ति।

नारदः– स्वत्वं किं नाम ? किं स्वविधेयत्वम्, किं वा स्व व्यवहारयोग्यत्वम्, अबाधितत्वे सति स्वोपभोज्यत्वं वा ? आद्ययोः परद्रव्य साधारणत्वात्, तृतीयस्यापि बलवदुपष्टम्भेन तत्तुल्यत्वात्। एवं स्वत्वस्य विकल्पासहत्वात् न तद्व्यतिरिक्तत्वं पर-

त्वम्। नापि शास्त्रदृष्ट्या परिगृहीतत्वम्, तत्रापि कामशास्त्र सम्भवात्। धर्मशास्त्र प्रकरणे कामशास्त्रवर्णनमनुचितमिति चेत् (न) विनिगमकाभावात्, शास्त्रत्वविशेषाच्च। तस्मादुत्कर्ष एव परशब्दार्थः। स च लावण्य निबन्धनो वा जातिनिबन्धनो वा ? न लावण्य निबन्धनः, अतिप्रसक्तेः। जातिनिबन्धन एव। अत एव सर्वोत्कृष्टा ब्राह्मणी जातिरिति इतरे ब्राह्मण्यादिषु न प्रवर्तन्त इति।

# चम्पूभारतम्

## पाण्डुना राज्यत्यागः

तदनु तापसशापेन विरचितमनस्तापेन तेन भूपेन चतुरङ्गबलमिव सप्ताङ्गराज्यमपि व्यसृज्यत।

अष्टाङ्गयोगानवतोऽस्यराज्ञो मिष्टान्नमासीन्मृदुकन्दमूलम्।
गर्भो वनस्याजनि केलिसौधौ दर्भोऽपि सिंहसनतां जगाहे ।।

अहो नरपतितापसयोः समानरूपं फलमिदमाचरितम्।
तथाहि -

बाणशापप्रयेगाभ्यां बाधितौ तावुभावपि ।
तपस्वितां यतः सद्यस्तादृशीमुपजग्मतुः ।।

क्रमादतिपतिते चावरोधवधूजनानुरोधगणदात्रे गणरात्रे–

अपाकरिष्यन्ननपत्यभावमपत्यभावं भुवनं करिष्यन्।
उवाच देवीमुचितं स पाण्डुरुपह्वरे जातु चिदूहदक्षः।।

परिपालयतोऽपि मे महीं परिपूर्तिर्न तनूजदुर्गतेः।
प्रजया हि मनुष्य इत्यसौ प्रथते हि श्रुतिवर्णपद्धतिः।।

गात्रं न केवलमशेषबुधोपलाल्यं
गोत्रं च तत्र भवतः कुमुदैकबन्धोः ।
आपाण्डु वर्तत इति स्फुटमद्य मन्ये
यस्मात्प्रजां न लभसे यदुवीरकन्ये ।।

न ह्यतीव विधिरप्यसुतानां नह्यते फलमिति श्रुतिसिद्धेः ।
जीवतो मम यथाहवसाध्यो मीलतोऽपि न तथा परलोकः।।

अहं किमम्बा किमभीष्टतापदे तवेति मातुर्धुरि तातपृच्छया।
प्रलोभतुल्यं प्रवदन्तमर्भकं मुदा हसञ्जिघ्रति मूर्ध्नि पुण्यभाक्।।
निन्द्यते पितृभिस्तप्तैर्निरपत्यधनः पुमान्।
अध्वनीनैरतिश्रान्तैरवकेशीव पादपः।।
कदापि तातशब्दस्य कल्पभूमिरुहामिव।
नार्थी भवितुमर्हामि नरवाहन संनिभः।।
किंभोगवैभवयशःक्षितिजीविताद्यै-
रंभोरुहाक्षिनियमैरनघैस्त्वमेव ।
शापातिरेकदवपावकशायिनो मे
तापापनोदविधये तनयं प्रसुष्व ।।

इत्यसंकोचतः, शोचतः पत्युरग्रभुवि समग्रमन्दाक्षरमणीयं मन्दाक्षरमणीयन्त्रितमिदं वचनं पृथापि कथयामास।

राजन् ! खलु पुरा मम पिता पितामहसमानस्य निशान्तमधिवसतः कृशां तनुलतां तपसा वहतोऽपि दिशां ततिषु निशान्तरविकान्तिन्मृशान्तरङ्गाङ्गरुचां तरंगपरंपरां तरलयतोऽशान्तमनसो मुनेरुपान्त परिचरणाय मामनुशासितशैशवराज्यामपि नियोज्यामकरोत्।

ततो नियोगान्समयेषु लब्धुं मया महायत्नजुषा महर्षेः ।
आरामवल्लीरपहाय तस्य भ्रूवल्लिमेव प्रतिपाल्य तस्थे ।।

यथा यथा सेवन यत्नजन्मना निदाघतोयेन निषिक्तमङ्गकम्।
तथा तथावर्धत तापसान्तिके महाविकासा मम भक्तिवल्लरी।।
तपस्विनस्तस्य तपः कृशस्य सरूपतामाप्तुमिवाश्रयद्भिः ।
दिने दिने मे दयनीयरूपैरङ्गैरशेषैरतिकाश्र्यमापे ।।

आपादनेन समिधामभिषेकवारामभ्यर्चनासुमनसामपितापसेन्द्रः।
मय्येव शिष्यजनतामममितां वितन्वन्नन्तेवसन्तमपि
कोपमपाचकार ।।

एकां समां तत्र वसन्कदाचिदेकां स मां पार्श्वगतामवेक्ष्य ।
समाधिवृत्त्या सह मौनमुद्रां समापयामास तपोधनेन्द्रः ।।

"वत्से ! भवत्सेवासंप्रदायेन संप्रति भृशं प्रसीदामि" इति व्याहृत्य स मुनिरनुकम्पितचेता मह्यमत्यर्थमभीप्सितार्थसमर्थापनपरतन्त्रं कमपि मन्त्रमुपादिक्षत् ।

अपि क्रुधामावसतेरमुष्मान्मत्वा गुरुत्वं वरमन्त्रलाभे ।
अपुष्पवत्यामपि मे दशायामामोदभारोऽधिकमाविरासीत् ।।

अधुना तस्य प्रभावेन शतमख मुखासु निखिलासु लेखारेखासु ये ये परार्ध्यास्ते ते रहसि कृतसंनिध्याः स्वनुगुणगण विभवानात्मभवान्मयि विकसदनुकम्पाः संपादयिष्यन्ति।

इति नृपाय कृपायतचेतसे यदुसुता मुनिनेतुरनुग्रहम् ।
अदशनव्रण पीडमहर्पतेरभिदधे रतसंगमनं विना ।।

इति वचनमयीं सुधां किरन्तीं यदुनृपतेस्तनयां प्रशंसमानः ।
पतिरनुमनुते स्म पौरवाणां प्रकृत महोत्सवपारदर्शनाय ।।

तदनन्तरम् :—

धर्मात्प्राप युधिष्ठिरं पवनतो भीमं च भीमं द्विषां
जिष्णोर्जिष्णुमतीव धृष्णुमनघा कुन्ती मुनेर्विद्यया ।
अन्या सापि तयैव तत्र नकुलं रूपास्पदं गीष्पतेः
सच्छात्रं सहदेवमप्यजनयन्नासत्ययोरन्तिकात् ।।

तदनु वासवनन्दनसंभृताः सपटुगीतिरव प्रमदालयः ।
सुमनसस्तु यथोचितमाचरन्निपतनं भुवि नृत्यविधिं दिवि ।।

जन्मोत्सवो महानेषां जलमत्यच्छमावहन् ।
विद्यामनन्यसामान्यां व्रीडां कुम्भभुवोऽनयत् ।।

स्वस्य चक्रगतिं सख्युः स्वयमप्याश्रिता इव ।
जवात्प्रदक्षिणज्वाला जज्वलुर्यज्वपावकाः ।।

सामोदो भीमसंभूतिसंभूताशौचवत्तया ।
संकुचन्निव संस्पर्शे समीरो मन्दमाववौ ।।

कन्यकात्वेऽपि मय्येषा कामुकीति स्मरन्निव ।
प्रसूतिदिवसं कुन्त्याः प्रादिद्युतदहस्करः ।।

पुष्पात्प्रागेव सुषुवे पुत्रमेषेति वीरुधः।
फलेग्रह्य एवासन्प्रसूनात्प्राक्पृथावने ।।

तदनु गुणगणैरभङ्गुरशुभंचुताविकाससमयेसमये –
प्रजाधिपोऽसौ प्रथमं युधिष्ठिरे सुतेषु तेजस्विषु तेषु पञ्चसु ।
प्रभाकरे पञ्चतपा इवोन्नते प्रपातयामास विलोचनद्वयम् ।।

तपस्विनीनां स्तनपायिनस्ते दरक्वणत्कीचकदत्तकर्णाः ।
वने दिनान्ते वसुधेन्द्रपुत्रा वल्केषु निद्रासुखमन्वभूवन् ।।

क्षुत्पीडया स्तनरसे कलहं शिशूनां
कुन्ती तदा शमयितुं कुचकुम्भ युग्मे ।
एकं युधिष्ठिर धनंजययोश्च भाग-
मेकं समीरणसुतस्य च संविभेजे ।।

### श्रीकृष्णस्य सभामण्डपप्रवेशः

समाप्यसंध्यौपयिकं स कृत्यं समापयिष्यन्नथ शङ्र्गधन्वा ।
अलङ्कृताङ्गो विदुरस्य हस्तमालम्ब्य मन्दं
निरगान्निकेतात् ।।

तदनु निखिलमहरारम्भकृत्यमवसाय्य बालातपेन बलाहक इव

घुसृणमसृणितेन पटीरपङ्केन चर्चितकलेवरः, पङ्केरुह शङ्किनीभिरञ्चललिखित राजहंस राजिभिरवकृष्यमाणेनेव पीताम्बरभागेन परिचुम्बित प्रपदपल्लवाः, निजोदरान्तरानवकाशतया बहिर्निर्गतैर्जगदण्डशिशुभिरिव मुक्ताफलैः प्रत्युप्तमेखलामुख भागः वर्षाहेमन्तसमययोरप्यविनश्वरं लक्ष्मीलीलाकमलमुपश्लोकितुमागतेन दिनमणिबिम्बेनेव कौस्तुभेन देदीप्यमान भुजान्तरः, दनुजपरिषदुत्पातरक्तपरिवेषेणेव पद्मरागकेयूरेण परिमण्डितभुजदण्डः, निर्गत्य सुयोधनदुर्वासिताया नगरभुवः स्पर्शनं परिहुर्तमिव द्वारि सविनयमुपागतेन दारुकेण संयोजितमणिपादुकः, किञ्चिदवनमित पूर्वकायेण विदुरेण वितीर्यमाणहस्तावलम्बाः, गुरुकृपप्रमुखैर्ब्रह्मसंघैः प्रतिपाद्यमानां जयाशिषं शिरसा प्रतिगृह्णानः, कुशलप्रश्नकोरकितमोदाभ्यां कुरुराजदेवव्रताभ्यां सदनाभिगमनाय संप्रार्थ्यमानः, चिरतरावसरं प्रतिपालयतामक्षौहिणी पतीनामञ्जलिकमलवनालिमयवलोकनेन संभावयमानः, मुकुन्दो बन्दिवृन्दपरिपठ्यमानाकंसादिविजबिरुदावलिप्रबन्धबन्धुरेण मङ्गलकुसुमगन्धसंपदन्धीकृतपुष्पधत्रझंकारसहचरवादित्रघोषेण मेघवर्जमुन्मिषन्तीभिः सौदामिनीभिरिव कनकवेत्रलताभिराकुलीकृतेन महताराजपदेन सुयोधनादिभिश्चतुर्भिरध्यासितपूर्वं सभामण्डपं शनैः शनैरवजगाहे।

द्वारं समेयुषि हरावथ तत्र गोष्ठ्याः
सर्वैः समं नरपतिः सहसोदतिष्ठत् ।
पूर्वाचलाश्रयिणि पूषणि पद्मपङ्क्तेः
सौरभ्यपूर इव षट्चरणैरनैकैः ।।

तत्रातितुङ्गे तरसोपनीते रत्नासनेऽयं रचितोपवेशः ।
पुरोहितैरग्रभुवि प्रतिष्ठां पूजामुपादत्त पुमान्पुराणः ।।
सभान्तरे तत्र समग्रकान्तिं संवीक्ष्य संवीक्ष्य सरोरुहाक्षम् ।
नरेन्द्रवर्जं नगरीजनेषु न कस्य वाभून्नयनप्रमोदः ।।

भद्रासनादुपनतं पदपल्लवाग्रं संवाह्यत्युपगते विदुरे दयार्द्रः।
सामाजिके बुधजने सति दत्तकर्णे, प्रज्ञादृशं नृपमभाषत
पद्मनाभः ।।

अल्पैरहोभिरधियुद्धमवेक्ष्य नङ्क्षय
च्चान्द्रं कुलं तव सुतैः सह पाण्डवानाम् ।
संधिं विधातुमधुना समये विधेयं
प्राप्तोऽमस्मि भरतर्षभ ते सकाशम् ।।

शतेन संधत्स्व तनूभवानां कुन्तीकुमारान्कुशलोदयाय ।
कल्लोलजालेन कलिन्दजाया गङ्गातरङ्गानिव गेयकीर्ते।।

पदारविन्दे प्रणतीः शिरोभिः शतं शतं सादरमर्पयन्तः ।
पाण्डोः कुमाराश्च भवन्तमेवं विज्ञापयन्तिस्म विनीतपूर्वम्।।

जाता वने वयममी भ्वदङ्कभूमौ वृद्धिङ्गताः शिरसि
शासनमादधानाः ।
निस्तीर्णसंगर पयोनिधयस्त्वयाद्य स्थाप्या यथांशमवनेरवने वने वा।।

बाल्ये वनान्तजनुषां मम पाण्डवानामेकापि रक्षणविधौ न बभूव
धात्री
इत्येव शोकमनिशं हृदये दधानस्तस्यास्तु नार्धमणि संप्रति
दित्ससित्वम् ।।

**धर्मराजस्य सर्वतोभद्रासनारोहणम्**

राज्याभिषेकसलिलादिव संगतं द्रागावर्तमुद्वहति मूर्धनि धर्मसूनोः।
कृष्णादयः शुभगुणे कृतिनो मुहूर्ते हैमं व्यधुर्मुकुटमुज्ज्वल-
रत्नजालम् ।।

द्विजप्रणामेषु नृपस्य लग्ना भूरेणुराजिर्भुजसीम्नि रेजे ।
एकाधिक द्वादशाहायनेषु क्षितिः कृशाङ्गी विरहादिवास्य ।।

तदानीमेव पराशरसुतविदुरसञ्जयैः सह संभाषमाणं रमारमणमग्रतो निधाय सविनयं युयुत्सुना दीयमानहस्तावलम्बः, भूभारलघुकरणेन प्रीयमाणैर्दिग्वारणैः प्रेषितमिव महान्तं किंचिदौपवाह्यमधिरूढः, शशिमण्डलेन शवरीप्रथमयाम इव धवलातपत्रेण परिष्क्रियमाणोपरिभागः, लालनवशेन पार्श्वयोरागत्य प्रमोदतरलपक्षपुटाभ्यां मरालदम्पतीभ्यां चतुर्मुख इव चामराभ्यामुपवीज्यमानः, हर्म्य शिखरावलम्बिनीनां पुरनितम्बिनीनां कपोलफलकस्खलनदूरविप्रकीर्णैरानन्दबाष्पबिन्दुमुकुलैरिव लाजाञ्जलिभिरवकीर्यमाणः,पुरःसरविविधवाद्यगुरुजनशिष्यायमाणगवाक्षपरम्परां तां नगरीं प्रदक्षिणीकृत्य द्वारभुवमवतीर्णः, निजमणितिलक प्रतिबिम्बानिव दीपाङ्कुरान्कनकपात्रमध्ये वहन्तीभिर्वारसीमन्तिनीभिर्विरचितारात्रिकमङ्गलः, पाण्डुसूनुर्निबिडवितानमाल्यधूपपरिमलसुरभिले मण्डपे कुरुकुलक्रमागतं सर्वतोभद्रं नाम सिंहासनमध्यवात्सीत्।

# नीलकण्ठविजयचम्पू

## मङ्गलाचरणम्

वन्दे वाञ्छितलाभाय कर्म किं तन्न कथ्यते ।
किं दम्पतिमिति ब्रूयामुताहो दम्पति इति ।।

दृष्ट्वा कौस्तुभमप्सरोगणमपि प्रक्रान्तवादा मियो
गीर्वाणाः कति वा न सन्ति भुवने भारा दिवः केवलम् ।

निष्क्रान्ते गरले द्रुते सुरगणे निश्चेष्टिते विष्टपे
मा भैष्टेति गिराविरासधुरि यो देवस्तमेव स्तुमः ।।

अपि च

लीढालीढपुराणसूक्तिशकलावष्टम्भसम्भावना-
पर्यस्तश्रुतिसेतुभिः कतिपयैर्नीते कलौ सान्द्रताम् ।
श्रीकण्ठोऽवततार यस्य वपुषा कल्क्यात्मनेवाच्युतः
श्रीमानप्पयदीक्षितस्य जयति श्रीकण्ठविद्यागुरुः ।।

यस्संरम्भः कृतिविरचने दुष्कवीनामभेद्यो
यच्चैकाग्र्यं तदुचितपदान्वेषणे चित्तवृत्तेः ।
लभ्यं तच्चेदपि कवयतामन्ततस्त्रीण्यहानि
स्यादेवं किं सरसकविताराज्यदुर्भिक्षयोगः ।।

अथवा किमिति स्मरामि द्रुष्कवीनधुना ।
सकल भुवनैकमङ्गलशङ्करगुणवर्णनप्रवृत्तेन ।
न स्मरणीयाः कुधियो लोकायतिका इव व्रतस्थेन ।।

कति कवयः कति कृतयः
कति लुप्ताः कति चरन्ति कति शिथिलाः।
तदपि प्रवर्तयति मां
शङ्करपारम्यसङ्कथालोभः।।

## स्वर्गवर्णनम्

अस्ति स्वादयितुं सुधास्ति वसितुं वासो नभश्चारिणां
धर्तुं सन्ति च भूषणानि शतशो न त्वस्ति धीर्जीवितुम्।
येनान्यानुपजीव्य सर्वविभवे कर्मैकलभ्ये पदेऽ-
प्यायस्यन्ति वृथैव सेवक इति स्वामीति दुर्मेधसः ।।

इंद च परमाद्भुतमुत्प्रेक्षितं तस्यां, यत्किल विविधतपः प्रबन्धनिस्तन्द्रतया विस्मृतलोकतन्त्रेषु, चिरविधृतब्रह्मचर्यजीर्णतयाऽकालमृत्युषु कन्दर्पस्य, ब्रह्मर्षिहतकेषु, भूतलादागत्य प्रसक्तेषु क्रीडितुमप्सरोभिः, पर्णशालां प्रविशाम इति प्रविशत्सु केलीगृहं, विस्रंसय जटामिति वेणीमालम्बमानेषु, अपनय वल्कलमित्यपनेतुकामेषु कूचदुकूलानि, न लोहितं कुर्यादिति निषेधत्सु नखक्षतानि, आः कष्टमसम्मतोऽयं पन्थाश्शिष्टानामिति पिहितकर्णेषु, चुम्बनभेदप्रस्तावनायां, निवीतधारणव्यग्रेषु नीवीमोचनावसरे, मन्त्रजपमुखरेषु मणितावसरे, आः स्मृतमद्य व्यतीपात इत्यन्तरा गन्तुकामेषु अनुयुञ्जानेषु पुनः पुनरार्तवदिनानि शपथपूर्वकं, अतिक्रामति निषेकलग्नमित्यसहमानेषु बाह्यसुरतव्यापारविलम्बम्, अवधीरयत्सु पुरुषायितं, असम्मन्यमानेषु बन्धभेदान्, विगायत्सु वीटिकोपसेवनमप्यनुचितोऽयं काल इति, अनन्दमूर्च्छावसर एव निभृतमनुसन्दधानेषु मन्त्रलिङ्गानि, परवशरतान्त निद्रावसर एव यावत्सन्निपातं च सहशय्येति परिहरत्सु पर्यङ्कशायिकां, द्वितीयसुरतारम्भ एव देहि मे कमण्डलुमिति त्वरमाणेषु मन्दाकिनीगमनाय, विहसन्ति विषीदन्ति विलज्जन्ते विस्मयन्ते च रम्भादि मेनकान्ता देव वारकान्ताः।

## देवदानवयुद्धवर्णनम्

तत्क्षणं च पुनरनुक्षणोपचीयमानममरबलं, अपक्षीयमाणमात्मबलं च निरीक्षितुमप्यतितिक्षवः, तरक्षव इव बुभुक्षिताः, दन्दशूका इव दण्डघट्टिता, बलिबाणशम्बरजम्भनमुचिविरोचनमुखा महासुराः सरभसमवमुच्य वारवाणं, अवबध्य गोधाङ्गुलित्राणं अपिनह्य निषङ्गमक्षयशरपूरितोत्सङ्गं, अधिरुह्य शताङ्गमायोजित खरतुरङ्गं, आबध्य निटिलेषु भ्रुकुटीविभङ्गम्, आसेव्य वीरपाणम्, आलम्ब्य संशप्तकव्रतम्, अनुज्ञाप्य परस्परम्, आपूरयन्तो दिङ्मुखानि गुणध्वनिभिः, अवभ्रंशयन्तो गगनतलादुडून्यप्यट्टहासैः, विसंज्ञयन्तः खड्गविच्छुरणेन वीक्षितुमागतानि सिद्धचारणमण्डलानि, विस्मापयन्तः समरसंरम्भेणैव कर्मन्दिनमपि कलहानन्दिनम्, उत्सारयन्तः पादातमूरुवेगेन, परिचूर्णयन्तो रथान् परिधाभिघातैः, विद्रावयन्तो हव्यान् करतालिकाभिः, विघूर्णयन्तो मतङ्गजानङ्गुलीयन्त्रणेन, संवर्तमारुतावर्तितसागरगर्तदुर्दर्शवक्त्र विवरोल्लसल्लेलिहाननिजरसनावलोकनजनितसाध्वसध्वस्त चेतनमासाद्य सेनामुखे निविष्टमन्तकम्, अपहृत्य तदीयमेव कालदण्डमयोधम्, अभिहत्य तेनैव तम् आदिमं जयमापेदिरे।

कालदण्डहतस्यास्य कण्ठे प्राणा जुघूर्णिरे ।
अन्तकं यद्धतं नेतुमन्तकोऽन्यो न विद्यते ।।

पार्श्वतस्तस्य परे केचिदतिचिरोपरोधसंवर्धितप्रतिघानलव्यतिकरविशेषभीषण ज्वालाकलापदुरापमपि परिवृत्य जातवेदसं, प्रशमय्य परुषहुङ्कारभयङ्करैर्मुखमारुतैरस्य दुस्सहं ज्योतिः अपकृष्यास्य वाहनं मेषमग्रचरणग्राहं आहृत्य शक्तिमपि बलादस्य हस्ततलात्, "अरे रे लब्धोऽयमन्नहरः क्रतुभुजां हव्यवाहो नाम निर्जरापशदः, तदद्य निर्वापयतैनमुदकुम्भैः, निक्षिपतैनमापूपिकानां वशे महानसेषु, मैवं मैवमुद्बोधयतैनमुचितैर्मुखमारुतैः, हस्ते कुरुत चैनमद्यैव दग्धुममरावतीं, "परित्यजत रे रे बालिशा बाडबोऽयं शिखां

प्रदर्शयति इति परिहसन्तः, परिक्षिपन्तः, तर्जयन्तः, ताडयन्तश्च पलाययामासुरसुरभटाः एनम्। ततः समित्याहितमसुरभटैस्त-दत्याहितमालक्ष्य सख्युराशुशुक्षणेः, क्षणेन सज्जीभूय भूयसा वेगेन सव्यापसव्यानि संचरन् मण्डलानि चण्डलाघवोत्क्षिप्ततरुकाण्डष-ण्डमाहिण्डमानोपल खण्डताण्डवोद्दण्डम्, अतिसम्भ्रमभ्रामित-पांसुमांसलतृणपूलसङ्घसङ्गत कङ्कगृध्रवायसादि विहङ्ग-मम्, अतिविशङ्कटशङ्करशिरोघटितविकट जटाजूट सङ्कट-भ्रमदभ्रसरिज्जलनिर्झरझळझळघोषभीषणझङ्कारमुखरितनभोवि-भागम्, आलम्ब्य युगविगमोचितं रूपं, आपतन्नापन्नसुरबले, विघूर्णयन् जीर्णपर्णमिव दिक्षु विदिक्षु चाश्वीयं, अवचूर्णयन् रथ-षण्डमारण्यमिव तरुकाण्डं षण्डं, अवकिरन्नुपलखण्डानिव मदोच्चण-डानपि वेतण्डान्, अन्धीकुर्वन् पदातिजातम्, अवरुन्धन् सेना-पतीन्, परावर्तयन्नस्त्रशस्त्राणि, प्रभञ्जयन्नञ्जसैव जयध्व-जान्, परिस्खलयन् महासुरानपि, संवर्त इव मारुतः समरसीमनि सर्वतोऽप्यक्रमेणपराचक्रमे।यावदित्यमस्पन्दतगन्धवाहः,तावदावर्तित लोचनो विरोचनः, सङ्ग्रामैकरुचिर्नमुचिः, प्रकटितसमराडम्बरः शम्बरः सावष्टम्भो जम्भः, समरमदोल्बणो बाणः, अतिबली च बलिः, आलक्ष्य वक्त्राणि परस्परं, ईषदिव समयमानाः, विस्मयमानाः पराक्रमैः विबुधानामिदमूचिरे। हन्त कथममरा अपि पराक्रमन्ते, तेषु च दूत्योचित संचारमन्थरश्श्वा मातरिश्वा।

## अमराणां सत्यलोकगमनम्

अमराश्च तमनुवर्तमानाः पथि वैमानिकानां, दैत्यदानवयातु-धानाध्यासितानि सिद्धचारणविद्याधराद्यावसथानि विलङ्घ्य, ततो-ऽविदूरादुत्सन्नकिन्नरीगानचातुर्यम्, उपशान्तगान्धर्वतौर्यमौख-र्यम्, असम्भावितकर्मदिवसम्मर्दम्, अनाशङ्कनीय ब्रह्मार्षिस-ञ्चारसङ्कयम्, अतिनीचरक्षःपिशाचमदिरागण्डूषदूषितमन्दा-किनीतीरतरुषण्डगूढचरदेवर्षिमण्डलम्, आखण्डलनगरोपशल्य-

मन्तःकरणशल्यमालोकयन्तः, पुराहंसावतंसितैस्सर्वगामिभिरप्सरोजनतौर्यत्रिकालंकृतैर्विमानैरतिबाह्यमानतयाऽगृह्यमाण तत्तत्प्रदेशसौन्दर्यमगृह्यमाणद्राघिमाणमध्वानमधुना पद्भ्यामेवाक्रम्यमाणतया गृहीतविपरीतमतिक्रामन्तः, पदे पदे श्राम्यन्तः पथि, पथिकजनसाधारणमपि तत्तत्पथेष्वातिथ्यं गूढसञ्चारवशादलभमानाः, दानव सेनागतागतोचितान् कथञ्चिदतिलङ्घ्य कानपि कक्ष्याभेदान् दिवः, तपोभिरपि तपोलोकसमीपमापेदिरे। प्रविष्टमात्राश्च ते परिहृतरजस्तमोगन्धानुबन्धतया परिणतसत्वैकसारेषु तत्रत्यवस्तुषु महीचरा इव महेन्द्र भोगेष्वदृष्टचरं विशेषमालक्षयन्तो विसिष्मियिरे।

अपि च पुनरात्मविज्ञाननिरस्तावरणतया निस्सीमविकसद कृत्रिमज्योतिषाम्, अधिकारमलक्षपणाय केवलमनुत्तरं योगैश्वर्यमनुभवताम्, अत्रभवतां सनकसनन्दन सनत्कुमारादिमहायोगिनां, मूकेष्विव वाग्मिनां, मूर्खेष्विव बुद्धिमताम्, अन्धेष्विव चक्षुष्मताम्, अधनेष्विव, महेश्वराणां, कीटेष्विव सरीसृपाणां, सरीसृपेष्विव चतुष्पदां, चतुष्पात्स्विव मानवानां, मानवेष्विव महीभृतां, महीभृत्स्विव मरुतां, मरुत्स्विव मरुत्वतो, मरुत्वत्यपि पतन्तीमवज्ञामुकुलितां दृशमवलोकयन्तः, शृण्वन्तश्च तेषामेव 'हन्त वराकश्शतमन्युर्नामायमेव परितोष्य यश्शतेनाश्वमेधैरपि भगवन्तमिन्दुशेखरं प्रार्थयामास दानवामिषं स्वाराज्यम्। पश्यत पश्यत कुबेरमिमं पशुपाशविमोचिना पाशुपतव्रतेन समाराध्य परमात्मानं सखाऽसि ममेत्यनुगृहीतोऽपि यः पिशाच इव धनपालतां वव्रे। किं बहुना। आत्मभूतोऽप्ययमष्टमूर्तेर्भगवतो वैश्वानरः विफलीकृत्य विवेकम्, उपास्य चिरतरं कालमुमारमणमपि, आसाद्य हव्यवाहतामन्नहरोऽस्मि देवा- नामित्यभिमन्यते कृतकृत्यमात्मानम्। हन्त चिरादिमान् देवपशूनद्राक्ष्म

किन्न निगृह्णन्ति मनः किन्न भजन्ते जनाश्शिवं शरणम् ।
अभिसन्धिभेदमात्रान्मोक्षो (क्षा) पायेन बध्यन्ते ।।

इत्यादीनि परिहासवचांसि, पश्यन्तस्तरतमभावमैश्वर्येषु, परित्यजन्तः स्वर्गाधिराज्यदुर्मदम्, अपत्रपानष्टदृष्टयस्स्वयमाधिपत्यादस्मदीयादत्र भिक्षाटनं ज्याय इति मेनिरे।

## सुरासुरैः मन्दरपर्वतानयनम्

इत्थमतिभारभङ्गुरास्सुरासुरा यावदासेदुरन्तिकं दुग्धनिधेस्तावदुद्वेगःश्वेतद्वीपसदामुदजृम्भत।

'पश्यत पश्यत पर्यन्ते नीयमानं महागिरिम्, पातयिष्यते नूनमत्रायमर्णवि, परिप्लावयिष्यते च स निश्शेषमिदमन्तरीपं, तदद्यैव सज्जीभवत समुत्तिष्ठत सर्वतोऽपि वेलामुच्छ्रयध्वम्' इति, 'हन्त केनेदमुत्प्रेक्षितं बकबन्धकौशलम्, किञ्चिदपि चेदुच्छ्वसिति सागरः किं करणीयमुच्छ्रितयापि वेलया, तदारोक्ष्यामो वयमद्यैव वैकुण्ठमर्कमण्डलं वा धाम त्रिधाम्नः' इति, 'अनुचितमेतदालोचितम्, अयुक्तं हि सेवकानामपहाय भगवन्तमन्यत्र गन्तुम्' इति, 'किमुच्यते भगवन्तमपहायेति, किं न विचारितं भवता, भगवानेव मन्दरपातदर्शनकुतूहलव्याजेन प्रस्थातुकामो वर्तत इति कतिवारानेषु पपात मन्दरः, कतिवारान्नोदजृम्भत सागरः, कस्यापि ब्रह्मणः कल्पे न जानीमो वयं विप्रवासम्, अहो खल्वमीभिराधुनिकैर्बाध्यामहे भागवतैः' इति, 'भवतु भवतु कथयन्तोऽपि दृढमितोऽपि कबलितास्सरिद्भिस्साागरैश्च महत्स्वायतनेषु महीगतेषु शाङ्र्गपाणेः कति न भवद्विधाः परमभागवताः, तदास्यतामिहैव भवद्भिः, आधुनिकास्तु वयमज्ञातपारावारा गोपायन्तः क्वचिदात्मानं गोविन्दमेव निरन्तरमनुसन्दधीमहि' इति च विप्रवदतां विविधान् वादान्, पश्यतामसकृदुन्नम्योन्नम्य, परिपृच्छतामागच्छतो वैमानिकान्, परिभ्रमतामभितोऽपि कोलाहलेन महता, पारिषदानामग्रणीः कुपितो विष्वक्सेनो बहिर्निर्गत्य परितोऽपि चक्षुः प्रसारयन्नवलोकयन्नानीयमानमभ्यर्ण एव मन्दरम्, अवधारयन्स-

नुपदमेव तस्य सिन्धौ निपातनम्, विज्ञापयामास विनयेन विदित-वेदितव्यमपि स्वधर्म इति विश्वम्भरम्।

व्यन्यस्तकौस्तुभमवप्लुतवैजयन्ति
विस्रंसमान कनकाम्बर लोभनीयम् ।
सद्य फ़णीन्द्रशयनादुदतिष्ठदीशः
कैलासशैलशिखरादिव कालमेघः ।।४७।।

**सुरासुरैर्मथ्यमानात्सागरात् अनेकेषां वस्तूनां प्रादुर्भावः**

यावद्यावत्सागरं ते ममन्थुस्तावत्तावत्सोऽर्पयन्नेकमेकम् ।
भूयो भूयः क्षोभमेवाप देवैः दृष्टास्वादास्तत्र किं ते दयन्ते ।।५।।

ततश्च।

साध्वी गौस्सुरभिर्नाम सागरादुदभूत् स्वयम् ।
गोप्रसूता हि गावी स्यामसाधुश्चेति जानती ।।६।।

स्नातुं वाञ्छति शङ्करोऽपि पयसा स्तन्येन यस्याः स्वयं
तोयं पावनमुत्तमं त्रिजगतां यद्गात्रनिष्यन्दजम्।
यद्रूपां समुपासते शमधना वाचं पुराणीं परां
सा दिव्या सुरभीकरोतु सुरभिर्वाचं कवीनामपि ।।७।।

प्रथमसमुद्गतामखिलकामदुधामनघां
सुरभिमभिप्रपद्य सुरसिद्धमहर्षिगणे।
स्तुवति धृताक्षमा इव वदान्यशिखामणयः
सममुदयाम्ब भूवुरथ पञ्च महातरवः ।।८।।

अमीषां च पुनरखिलभुवनाद्भुतानां किसलयान्येव कनकांशुकानि, जीर्णपर्णान्येव चीनाम्बराणि, मुकुला एव मुक्ताफलानि, निर्यासा एव वैडूर्याणि, फलपाका एव पद्मरागाः, परागा एव पटवासाः, मधुकरा एव महेन्द्रोपलाः, प्ररोहा एव हारलताः, प्रसवासवा एव परिणामाः सुधारसस्येत्याचक्षते।

किं कर्म दुष्कृतमिदं तरुजन्महेतुः
किं वा महत्सुकृतमीदृशकीर्तिमूलम् ।
किं वा तृतीयमिदमीदृशमन्यदेवे-
त्यद्यापि शाम्यति न वादकथा मुनीनाम् ।।९।।

अवस्थाप्य च तानानुपूर्व्येण परिहृवतजरारोगपरिश्रमासु पञ्चेन्द्रियसमुज्जीविनीषु छायासु तेषामायासमवधूय पुनरपि ते ममन्थुरमृतार्णवम्।

अभ्युद्यतीं मथनतः किल निष्कलङ्काम्
आनन्दकन्दलमयीममृतांशुरेखाम् ।
उत्तंसपुष्पकलिकेयमुमापतेरि -
त्यालोचयन्नुपददे मनसा मुकुन्दः ।।१०।।

ततश्चिन्तित एव सन्निहितो नन्दी शिव इव सभाजितो देवासुरैः समर्पितां मधुसूदनेन शशाङ्करेखामाददानः सादरमिदमवादीत्।

किमिव दयितं शम्भोः केन प्रसीदति देव इत्यविरतसमासक्तं
चित्तं तवैव हरे हरे ।
तदिह भगवन्माहाभाग्यं तव प्रणुमः
कथं त्वमसि शरणं शैवानां नस्त्वमेव महागुरुः ।।११।।

जानीषे ननु नाम केशव जगन्नाथस्य नाथस्य नः
प्रीतिंपारमिकीमनन्यसुलभां पुष्पेषु नीलोत्पले।
अस्मिन्नुत्पलबन्धुरित्यतितनूभूतेऽपि भूतेशितुः
प्रीतिं चिन्तय तावतीमुपचितामिन्दौ ततो वाऽधिकाम् ।।१२।।

तदहमेव प्रसादयन्ननेन भगवतः कपर्दपदमाराधयामि हस्तेन ते परमात्मानम्। अग्रेभुजे च विश्वेषामग्रपूजनमेतदुचितमाचरितम्। तदितो यथाभिमतमिमानि वस्तून्युपयुज्यन्ताम्' इत्यभिधाय तिरोभवति शिलादनन्दने, पुनरपि सञ्चुक्षोभ सारस्वतो गर्भः।

नैर्मल्यादुपसम्भृताः फणधरस्त्रैणानुबिम्बाश्शतं
स्वस्थानक्षुभितोद्गतामृतारसस्यन्दोपसन्दानतः ।
प्राप्तप्राणसमागमा इव ततः प्रादुर्बभूवुः स्त्रियो
नासीरग्रपताकिका रतिपतेर्नानाजयाङ्का इव ।।१३।।

ततश्च विद्रुमलता इव वीचीभिराह्वताः, तटित इव तत्तत्समयोपनम्रपयोधरोत्सङ्गपरिभ्रष्टाः, कौस्तुभरत्नपाञ्चालिका इव कौतूहलाय विनिर्मिताः केनापि, पञ्चशरराज्यलक्ष्मीविभूतीरिव परिगृहीतविग्रहाः, तुल्यवयोरूपविभ्रमाः, तुल्याम्बरविभूषणाः, हंसीरिव मानसादम्भोदविगमे समुत्तरन्तीः ताः बहिरालक्ष्य सर्वेऽपि सुरासुराः विरम्य सागरमथनवृथाक्लेशादुत्तरमप्यमृतमुपेक्ष्य सन्निहिते अधरामृत एव दृष्टिमादधिरे। तापसा अपि तद्दर्शनक्षुभितहृदयाः मन्त्रजपादुपरम्य मणितभेदानधिजिज्ञासाञ्चक्रिरे। पञ्चाग्निमपि विमुच्य पञ्चास्त्रविद्यामेव परमर्षयोऽपि बहुमेनिरे। किं बहुना। श्रुतिन्यायविदोऽपि सूक्ष्मदर्शिनः, तासामालोकनं अग्निष्टोमस्य, द्वारोपसर्पणं द्वादशाहस्य, गाननिषेवणं गवामयनस्य, नाट्यावलोकनं नक्षत्रसत्रस्य, वाङ्मिश्रणं वाजपेयस्य, परिष्वङ्गं पौण्डरीकस्य, वदनास्वादनं वाजिमेधस्य, दन्तक्षतं दाक्षायणयज्ञस्य, नखलेखनं नानाविधानां संस्थानाम्, कुचमर्दनं कुण्डपायिनामयनस्य, रशनावमर्शनं राजसूयस्य, विपरीतरतं विश्वसृजामयनस्य, चरणताडनं चान्द्रायणस्य, परिभाषणं च पराकसान्तपनयोः फलमाचक्षते।

## मोहिन्या कृतम् अमृतविश्राणनम्

ददाना च सा देवेषु दयारसमिव सुधारसम्, दैतेयावुभौ राहुकेतूनाम देवपङ्क्त्युपवेशिनौ भुजगवपुषौ पीतामृतावेव चन्द्रार्कसूचितौ दर्वीकाण्डेन विदारयामास कण्ठपदे।

अन्तर्निगीर्णममृतं प्रथमं हि येन
तस्यासुरस्य तदशिष्यत भोगमात्रम् ।

यस्यामृतं वदन एव धृतं स राहुः
अद्यापि पर्यवसितः फणमात्रशेषः ।।५२।।

यद्दृष्टं चन्द्रसूर्याभ्यां तद्दृष्टं निजया दृशा ।
क्षन्तुं शशाक तेनैषा मन्तुं न खलयोस्तयोः ।।५३।।

अनुगृह्येत्यममरानामृष्टोदरं सुधाकलशमन्तर्निहितदर्वीझण-झणात्कारमौखर्यपूरितमग्रेनिधाय दानवानामपेक्षमाणेव क्षणं विश्रम-मासाञ्चक्रे। तदनु सुधापानलब्धबलास्सुपर्वाणः परिगलितशङ्का-तङ्काः पत्यक्षमेव तां प्रस्तोतुमारेभिरे ।।

वन्दामहेकमलनाभमनन्तमाद्यं,
वन्दामहे भुवनमोहनशक्तिमैशीम्।
वन्दामहे तदुभयाद्वयवादमूलम्
आनीलकण्ठमवतंसितचन्द्ररेखम् ।।५४।।

निरातङ्कं स्वामिन् निरुपधिदयासार भगवन्
प्रपन्नानुग्राहिन् परमपुरुष त्वत्करुणया।
जिताः क्षुद्रा दैत्या जितमखिलमेतत्त्रिभुवनं
कृतं कर्तव्यं नः किमिव करणीयं पुनरितः ।।५५।।

आनीलकेशमरविन्ददलायताक्षम्
आविष्कृतस्मितमपारकृपानिदानम् ।
कूलङ्कषस्तनतटार्पित कुंकुमाङ्कं,
शाङ्गिर्गन्निदं शरणयेम तवाद्य रूपम् ।।५६।।

उल्लङ्घ्य निर्माल्यमुदासितं यत्,
अजानताऽनेने पदे भवत्याः।
तत्स्वामिनि स्वामिनि वासवे नः,
क्षन्तव्यमित्येव निवेदयामः ।।५७।।

इति स्तूयमानैव सा सुपर्वभिरिदं किमापतितमियं का तरुणीति शङ्काकलङ्कितैः, आलोक्य रिक्तममृतभाजनम् आविष्कृतम-हारोषपरुषैरसुरैस्सन्नह्यमानैर्युद्धाय सद्य एव शङ्खचक्रगदाखड्ग

सरसीरुहलाञ्छितसुरलोकभयङ्करमाबभार रूपं नारायणी। "भो भो महेन्द्रप्रमुखा देवा, मशकानिवैतानुत्सार्य दानवान्, मन्दरं यथा पुरं प्रतिष्ठाप्य, वासुकिं विसृज्य विरूपाक्षमभिप्रसाद्य, लब्धानुज्ञास्सुखं पालयत स्वाराज्यम्, इत्यनुगृह्य देवानन्तर्दधे सह चतुर्मुखेन शाङ्गधरः।

तिरोभूते सद्यस्त्रिभुवनगुरौ स्वामिनि हरौ
विषीदन्तो दैत्या विबुधगुरुमानम्य शतशः ।
अयाचन्त स्थातुं निभृतमभयं भोगिभुवने
तथेति स्वीचक्रुस्तदपि विबुधा देशिक गिरा ।।५८।।

अथ पुनरन्तर्निगूढ मत्सरानप्यभिनीतमहाविनयान्, अपनीतविषानिव महोरगानसुरान्विसृज्य सुधारसास्वादसुहिततया कन्दुकमिव मन्दरं करतलेन धारयन्तः, प्रशंसन्तो वासुकिं भवत्प्रसादेन वयममर्त्या अभूयेति, परिरभ्य निर्भरम्, प्रस्थाप्य रसातलम्, उपनिवेशयन्तो यथापुरं मन्दरम्, उपतस्थिरे चन्द्रशेखरम्।

'क्षमेथाश्श्रीकण्ठ प्रचलनमिदं मन्दरगिरेः
क्षमेयाः काकोलं कबलयितुमाशासनमपि।
क्षमेया यत्पूजास्वपचरितमासीदहरहः
प्रपन्नास्त्वामेकं शरणमशरण्या वयममी।।५९।।

अक्ष्णोः पुष्पवतोरेकमर्पयन्नीश ते पदे।
चक्षुषी पुण्डरीकाभे चतुरोऽलभताच्युतः ।।६०।।

देवानामपि दुर्लभं पदमिदं लब्धं मयोपायतो
द्वित्रैर्बिल्वदलैः प्रतार्य शिवमित्येवं जनो मन्यते।
मद्भक्ताङ्घ्रिरजस्स्पृशोऽपि सुलभं क्षुद्रं पदं वेधसो
दत्त्वा सेवक एव वञ्चित इति स्वामिन् भवान्मन्यते ।।६१।।

इति स्तुवन्तो विबुधाः, 'प्रसन्नास्स्मो युष्मासु परिपालयत

यथापुरं स्वाराज्यम्' इति प्रसन्नगम्भीरामाकर्ण्य पारमेश्वरीं गिरमाकाशसम्भवाम्, परमानन्दनिर्भराः प्राक्प्रस्थापितेन गुरुणा सज्जीकृताम्, परित्यक्तामसुरैः, प्रसाधितां विश्वकर्मणा, परितोऽप्यभिनवामिव सर्वसौभाग्यवतीममरावतीमासाद्य, प्रणम्य वाचस्पतिम्, प्रसाद्य यथोचितं महर्षिगणान् परिरभ्य परस्परम्, प्रतिष्ठाप्य सिंहासने शतक्रतुम् आदिष्टानि तेन स्वानि स्वानि स्थानानि, यथापुरममराः परिपालयाञ्चक्रिरे।

अर्चन्तस्तरुणेन्दुचूडमसकृत् सङ्कीर्तयन्तो हरिं
ध्यायन्तस्त्रिजगद्विमोहजननीं शक्तिं परां शाम्भवीम्।
आज्ञां मूर्धनि बिभ्रतः सुरगुरोरानन्दयन्तो मुनीन्
स्वच्छन्दास्त्रिदिवौकसो बुभुजिरे स्वाराज्यमव्याहतम् ।।६२।।

वाचं व्याकुरुते चिरन्तनगिरं मीमांसते चोभयीं
पान्थः काव्यपथेषु पादकमले सक्तः पुरारेरिति।
मामेतत्कथयिष्यतीति रचितं काव्यं मया तत् पुनः
तावद्वक्ष्यति वा न वा तदुपरि न्यस्तः समस्तो भरः ।।६३।।

# विश्वगुणादर्शचम्पू

## प्रारम्भे श्लोकाः

पद्यं यद्यपि विद्यते बहु सतां हृद्यं विगद्यं न तद्
गद्यं च प्रतिपद्यते न विजहत्पद्यं बुधास्वाद्यताम्।
आदत्ते हि तयोः प्रयोग उभयोरामोदभूमोदयं
सङ्गः कस्य हि न स्वदेत मनसे माध्वीक मृद्वीकयोः ।।

विश्वावलोकस्पृहया कदाचिद्विमानमारुह्य समानवेषम्।
कृशानुविश्वावसुनामधेयं गन्धर्वयुग्मं गगने चचार ।।

तत्र –

कृशानुरकृशासूयः पुरोभागिपदं गतः ।
विश्वावसुरभूद्विश्वगुणग्रहणकौतुकी ।।

## श्रीमहाविष्णुः

जीवानां दृषयादिमत्त्व मयतां स्वार्गापवर्गास्पदं
देहं दत्त्वति श्रियः प्रियतमे नैवोपकारस्मृतिः ।
दुःखे जातुचिदागते स्वकलिताद् दुष्कर्मणः पक्त्रिमा
न्नाथे हन्त निरागसि व्यसनिभिर्नैर्घृण्यमारोप्यते ।।

हन्त जन्तवः पामराः स्वापराधं परमकारुणिके परस्मिन् ब्रह्मण्यध्यस्यन्ति।

तथाहि –

क्लेशत्यागकृतेऽर्पितेन करणव्यूहेन देहेन च।
स्वानर्थं बत जन्तुरार्जयति चेमन्तुर्नियन्तुः कुतः ।।

शस्त्रे शत्रुजयाय नैजगुरुणा दत्तेऽथ तेनैव चेत् ।
पुत्रो हन्ति निजं वपुः कथय रे तत्रापराधी तु कः ।।

किं बहुना·····

शास्त्रं भूरि निजस्वरूपमतये स्वाराधनार्थं वपुः
स्वध्यानाय मनश्च बुद्धिमनघां लब्धुं च तीर्थादिकम्।
तत्त्वान्यप्युपदेष्टुमुत्तमगुरून् दत्त्वाऽनुगृह्णाति नः
संसारे तदपि भ्रमेम यदि किं कुर्वीत सर्वेश्वरः ।।

## भूलोकवर्णनम्

इति परिक्रामन् किंचिदुत्तरमुपसृत्याधस्तादालोक्य च सखे सकल पुरुषार्थ साधनानुष्ठानस्थानभूतं तावदवलोकय भूलोकम्।

स बहुमानम्·····

स्वर्गौकोभिरदोनिवासिपुरुषारब्धातिशुद्धाध्वर
स्वाहाकार-वषट्- क्रियोत्थममृतं स्वादीय आदीयते।
आम्नायप्रवणैरलंकृतिजुषेऽमुष्यै मनुष्यैः
शुभैर्दिव्यक्षेत्र सरित्पवित्रवपुषे देव्यै पृथिव्यै नमः ।।

कृशानुः— ननु सखे ! नाकगतोऽपि भवान् न मध्यमलोकं नमस्कर्तुमर्हति।

तथाहि –

जननमरणक्वाधि व्याधिप्रभेदशुभेतरा
कलनमलिना लोकाः शोकातुराश्च भुवं गताः।
तदिहमद्रिभिः क्षुद्रै श्छिद्रैकमार्गणतत्परैः।
प्रभुभिरुदितक्षत्यै क्षित्यै बुधः स्पृह्येत कः ?।।

बालत्वे वा तरुणिमनि वा प्रायशो वार्द्धके वा
मृत्वा मर्त्या बत यमभटैर्बद्ध्यमाना व्यथन्ते।

श्रेयस्तेषाममित विपदां जीवतां वा किमास्ते ?
कस्मिन् प्राये पुनरनडुहां कर्षणक्लेशहानिः ।।

विश्वावसु : – सत्यमे वं , तथापि सखे मह्याश्रयं मानुषजन्म मा दूदुषः।

तथापि :–

रामः क्षेमस्य दाता भुवि ननु मनुजो रावणस्य प्रहर्ता
तत्तातः किं न मर्त्यस्त्रिदशकुलपतेर्दैत्ययुद्धे सहायः।
कृष्णो वृष्णो मदं योऽहरत नरतया न श्रुतः किं ? त्वयासौ
के वा देवाः प्रभावात् स्वयमतिशायिता ? मानावद्दानवा वा ।।

किं च

मन्धाता च भगीरथश्च सगरोमान्यः ककुत्स्थो रघुः
पूरुः सोऽपि पुरूरवाः स च शिबिः पुण्यश्च रुक्माङ्गदः।
वैदेहो नहुषश्च हैहय पतिर्वीरो ययतिर्नलः
पार्थश्चेति नृपाः प्रशस्तयशसः प्रादुर्बभूवुर्न किम् ।।

कृशानुः– (सार्द्धाङ्गीकारम्)

कामं जनाः केऽपि गुणाभिरामाः क्षमातले सन्तु युगान्तरेषु
कलौ युगेऽस्मिन् गुणलेशवन्ध्याः सर्वेऽपि सर्वेतरदोषभाजः ।।

किं च

मन्देतरस्मरमलीमसमानसाना
मन्यु-स्पृहा-दुरभिमान-मदास्पदानाम्।
काले कलौ कलुषतः कलितोदयानां
दोषाय दृष्टिरपि हन्त दुरीश्वराणाम्।

विश्वावसुः – तथापि सर्वथा कलिकालिका अपि मानुषा न दुषणीयाः। यतः सर्वकालमपि केचन सन्त्येवसाधवः।

पश्य –

दुरितभरितक्षीबक्ष्मापप्रसादनिरादराः
कमलनयनस्वैरक्रीडागृहायित हृद् गुहाः।

निगमपदवीनिर्वाहाय क्षितावुदिताः स्वयं
कति न कृतिनः संदृश्यन्ते ? कलावपि निर्मलाः ।।

अथवा यदि ते मद्वचसि न विस्रम्भस्तर्हि तत्र तत्र संचारमारचय्य तत्तद्गुणदर्शनं करवाव।

## काशीवर्णनम्

बद्धाञ्जलिरग्रतोऽवलोक्य सानन्दम् –
काशी सकाशीभवदिन्द्रगेहसौधाग्रभागा बहुसप्ति नागा।
इन्धे मयूखैरियमन्धकारव्युत्पत्तिशून्या शिव शेखरेन्दोः ।।
कृशानुः – वयस्य किमेषापि तव स्तवास्पदम्।
पश्य –

ये मिष्टान्नभुजो गतोत्तमस्यारोहाः सुगेहान्तरे
मत्ताभिर्महिलाभिरत्र विहरन्त्यामुक्त मुक्तास्रजः।
ते घोरास्थिधरा विराजदनडुद्वाहा विषाहारिणो
नर्तिष्यन्त्यवशाः श्मशाननिलया नीचैः पिशाचैः समम् ।।

काशीमुद्दिश्य –

दत्तं साधुमुदे यदेकमपि तत् क्षेत्रप्रभावाद्भवेत्
कामं कोटिगुणं भवान्तर इति ख्यातं त्वयि त्वास्थाया।
वासं प्राप्य मुहुर्बहूनि ददतो वासांसि जन्मान्तरे
लोका हन्त भजन्ति दिग्वसनतां हे काशि तुभ्यं नमः ।।
वाराणसि त्वयि सदैव सरोगभूमावारोग्यभूमिरिति
कामममलीकवादः।
संतस्थुषां भवति यत्र वपुः सशूलं जन्मान्तरेऽपि
जलभावदुत्तमाङ्गम् ।।

विश्वावसु : – अनिपु णधिषण गु णमपि किमिति दोषीकरोषि यदेतन्नगरवासिना भोगिनाऽपि योगिनामप्राप्यं शिवसारूप्यमाप्यते।

अत्र देहमपवित्रमपास्यन्नच्छमृच्छति वपुः किल यस्य।
लोचने, शुचिरवाप्तनिराले मस्तके हरिपदाम्बु जटाले ।।

अदः पुरवासिनमन्याप्येषा धन्यता।

प्रदोषवत्प्राप्त इह प्रदोषनटोऽन्धकारिव्यपदेशमेति।
प्रकाशयन्त्येष हि तारकोद्यद्वर्णान्नृणां कर्णनभः प्रदेशे ।।

इति गङ्गा तीरजनपदं कृत्स्नमवेक्ष्य साञ्जलिबन्धम् –
प्रातः प्रातर्जाह्नवीवारि भक्त्या गाहं गाहं कलुप्तनित्यक्रियेभ्यः।
पुष्पैराद्यं पूरुषं पूजयदभ्यः पूतात्मभ्यो भूसुरेभ्यो नमोऽस्तु।

कृ.– किमेतद् देशवासिनोऽपि ब्रह्मणाः केवलं कलिमहात्म्या कलितशास्त्रीयचर्याविपर्यया भवता नमस्क्रियन्ते ? पश्य तावत् प्रायेणास्य काशीदेश जनस्य सुचर्याविपर्यासम्।

शस्त्रैर्जीवति शास्त्रमुज्झतिपरं शूद्राहृतैरम्बुभिः
स्नात्याचामति देवताः स्नपयति स्वैरं पचत्योदनम्।
उच्छिष्टान्न बिभेति या ति यवनैरुच्चावचैः सङ्गतिं
मातङ्गन्निकटं गतानगणयन् मार्गान् मुहुर्गाहते।।

किं च :–

प्रातर्हन्त कृताप्लवोऽपि रजकस्पृष्टाञ्जडोरासभै
रूढान् धारयते पटाननुदिनं धृत्वा बहिर्गच्छति।
गत्वा म्लेच्छ मुखाशुचीन् स्पृशति च स्पृष्ट्वापि न स्नात्यहो
नस्नातोऽप्यथ भुङ्क्त एष चपलो भुक्त्वापि न व्रीडति।।

अपि च

नीचैर्दुर्यवनैः शुनीभिरपि वा निःशङ्कमालोकितं
भुङ्क्तेपङ्क्तिविदूषकैः सह नरैरज्ञातवेदाक्षरैः।
मद्यास्वादनमत्तचित्तजनतामोहायभीहानितः
कर्माण्यारभते श्रुति स्मृति वचोदूराण्यसारण्यहो ।।

अपि च

कन्यांकामप्युदूह्य प्रविजहदुदयद्यौवनामज्ञ एनां

द्रव्याशापाशकृष्टो भ्रमति चिरतरं हन्त देशान्तरेषु।
अन्येन्याश्लेषवाञ्छाविगलितवयसोरात्तमालिन्यमत्यो-
र्दम्पत्योर्व्याकृतैवं हतविधिरुभयोर्लोकयोः शोकयोगम्।।

अपि च :—

नाऽधीतेऽत्र जनो यदि कश्चिदधीते शते सहस्रे वा।
दुस्तर्केषु श्राम्यति दूरीकुरुते श्रुतिः स्मृतिसुतर्कान्।।

वि०— कष्टमरे ब्राह्मणनिन्दां शृण्वतः कम्पते मे हृदयम्। यरत्वोपन्यस्तः सच्चर्याविपिर्ययः स एष कलेरेव दोषो न ब्राह्मणानाम्। कलौ युगे कार्तयुगं चारित्रं कुत्र नाम संभाव्यते ? दुरितलति-कोपघ्नात्मा दुर्जयः
खलु कलिः।

हर्म्यस्थानमधर्मकर्मविततेर्दुर्मानधर्मासनं
शास्त्रस्तोमललाटभूलिपिलयः शान्तिः सवानामपि।
सर्वाम्नायवचस्समापनदिनं संस्था सदर्चाविधे-
रर्थाशाजनिभूरभूदिह महानर्थावहोऽयं कलिः ।।

एतादृशे कलियुगेऽपि शतेषु कश्चि
ज्जातादरो जगति यः श्रुतिमार्ग एव।
यत्किञ्चिदाचरति पात्रमसौ स्तुतीनां
श्लाघ्यं मितापमपि किं न मरौ सरश्चेत्।।

किं च —

ये कायस्थजनाश्चयेनृपसुता ये च द्विजाश्शस्त्रिण-
स्ते यत्नादनुसृत्य निर्दयतया शुष्कांस्तु रुष्कान्धीमान्।
देवान् भूमिसुरांश्च पान्ति कृतिनस्ते स्वगृहेष्वासते
ब्राह्मण्याय जलाञ्जलिः किल भुवि प्राज्ञैः प्रदेयो भवेत्।।

सर्वतो दृष्टिं प्रसार्य सश्लाघम् —

अक्रान्तासु वसुन्धरासु यवनैरासेतुहैमाचलं



विद्राणे क्षितिभृद्गणे विकरुणे निद्राति नारायणे।
निर्विघ्नप्रसरे कलावपि बलन्निष्काण्टकं वैदिकम्
पन्थानं किल तत्र तत्र परिपात्येको हि लोकोत्तरः ।।

पुनः सश्लाघम् –

त्यजतु विहितमेतद्देशवासी निषिद्धम्
भजतु तदपि लोके नास्ति धन्यस्तदन्यः।
त्रियुगपदनखश्रीदत्त शुद्धिर्यदङ्गे
लगति दुरितभङ्गे लग्नको गाङ्गपूरः।।

प्रौढेषु गौडेषु च कान्यकुब्जेष्वङ्गेषु वङ्गेषु च मैथिलेषु।
अन्येषु सत्स्वेव बुधेषु धन्येष्वद्यापि जीवन्त्यधिभूमिविद्याः।।

इदं तावदवधेहि ।।

एतद्देश्यप्रचुरचरितान्यन्यदेशस्थितानां
रोचन्ते चेन्ननु न मनसे मा रुचान्काऽत्र हानिः।
प्राज्ञाः पुत्राः जनयितृहृदे पश्य यद्वत्स्वदन्ते
तद्वद्विद्वन्न परमनसे तावता कोऽत्र दोषः ।।

किं च –

प्रातश्शीतजले निमज्ज्य विबुधानभ्यर्चयत्युच्चकै -
रार्यः पर्युषितं तु नाभ्यवहरत्यन्धः क्षुधान्धोऽप्यसौ।
भागे गोमयलिप्त एव पचते भुङ्क्ते ततोऽन्यत्र य-
न्नीतं तद्विजहाति भुक्ति नियमो दृष्टः क्व भूयानियान् ।।

## वेदान्तिवर्णनम्

कृ०– सत्यं पुनर्महच्चमरणामप्येषां न रोचते नमस्क्रिया। यदेतेषु मिथ्यावादिन एव बहुलमुपलभ्यन्ते। अमी खलु प्रामाणिकार्थं दूरीकृत्याप्रामाणिकमर्थमुररीकुर्वन्ति।

तथाहि –

प्रत्यक्षगोचरमशेषमपि प्रपञ्चं मिथ्येति मायिन इमे प्रतिपादयन्ति
सर्वप्रमाणसरणीमतिवर्तमानं ब्रह्माश्रयन्ति च परं बत
निर्विशेषम् ॥

पुनः सरोषम् –

हन्त ब्रह्मबन्धव इमे ब्रह्मणे परस्मै द्रुह्यन्ति।

यत :–

यदेव सर्वज्ञामपास्तदोषं भवार्तिहारि श्रुतमागमान्ते।
अज्ञं परं ब्रह्म तदेव भुङ्क्ते संसारतापानिति संगिरन्ते॥

न केवलममी परस्मै ब्रह्मणे द्रुह्यन्ति, किन्तु तत्प्रमाणेभ्यः श्रुतिभ्योऽपि।

मिथ्यार्थवेदकत्वाच्छ्रुतिषु कुमतिभिः कर्मकाण्डे निरस्त
प्रामाण्ये ब्रह्मकाण्डैः सहगुण वचनैः शेषितो ब्रह्मशब्दः।
मिथ्यार्थास्मिन्विभक्ति प्रकृतिरपि परं ब्रह्म नैवाभिधत्ते
वाच्यत्वानाश्रयत्वात्कथमुपनिषदां मानतां जानतां ते॥

परमेते श्रुतिभ्यो न द्रुह्यन्ति, किन्तु, शारीरकायापि।

पराशरभुवा शास्त्रं ब्रह्मज्ञानाय निर्मितम्।
असमञ्जसतां नीतमद्वैतब्रह्मवादिभिः॥

किं च यादृशस्वभावः सर्वेश्वरस्तद्विपरीतमेव तमुशन्ति विरुद्धमतय एते।

सर्वज्ञमज्ञ इति सर्वपदाभिधेयं
कस्याप्यवाच्य इति सर्वमहागुणानाम् ।
स्थानं च निर्गुण इतीह समस्तवेद
वेद्यं त्ववेद्य इति तं जगदीशमाहुः॥

किं बहुना –

विविध दुरितव्रातस्फीत स्थिरव्यसनाकुला-

दतिमितमतेर्जीवादेवाभिदां परमेशितुः।
अपगत परिच्छेदामोदाम्बुधेरुपगच्छताम्
मशकशिशुतोऽभेदो न स्यात्कुतो मदहस्तिनः।।

अपरं च –

दृश्यं मिथ्या दृष्टिकर्ताऽपि मिथ्या
दोषो मिथ्यैवेति या धीरमीषाम्।
साधिष्ठानांशेपि किं नेति चिन्ता
साधिष्ठानां पण्डितानामुदेति।।

वि.—वयस्य ! मैवं महीसुरदूषणेषु विजृम्भिष्ठाः।

पारम्पर्यत आगतो निजकुले पन्था न हातव्य इ-
त्यद्वैतं परिगृह्य हन्त जगतो मिथ्यात्वमाचक्षताम्।
अध्येतुं निगमानशेषत इमान् कर्माणिनिर्मातुम-
प्यास्तिक्याच्चतुरा निकाममितरे के? तावदेतादृशाः।।

किं च –

श्रुतीरध्येतारः किमपि विदितारः प्रतिदिनं
क्रतूनाहर्तारः किमपि जपितारो मनुगणम्।
अमी स्मार्ताः श्राद्धान्यपि रचयितारो विधुनते
श्रुतेरप्रामाण्यं प्रसजदननुष्ठापकतया।।

कृ० – समन्तादवलोक्य

निस्तुला अप्यमी विषयाः शैवप्रचुरतया न श्लाघामर्हन्ति। अत्र हि तत्त्वहितपुरुषार्थानयथावस्थितानभिदधानाः शैवा विदुषोऽपि विमोहयन्ति।

तथाहि –

मदनजनके वीतातङ्के महागुण शेवधौ
परमपुरुषे नित्यासक्तां श्रुतिं कमलामिव।
बत पशुपतौ शूलापेते मनोभवदाहके
निहितहृदयां शैवा जल्पन्त्यभाग्यहता इव।।

सूर्यादारोग्यमिच्छेत्कमपि हुतवहात्सम्पदुल्लासमिच्छे
दीशानाज्ज्ञानमिच्छेदनवधिविभवं मोक्षमिच्छेन्मुकुन्दात्।
इत्याद्यासत्यवाद्यादिममुनिभणितीशकलय्यापि विष्णोः
सेवां शैवास्त्यजन्तो बत भवहतये भावयन्ते भवं ते ।।

अपि च

तद्विष्णोः परमं पदं हि तमसः पारे सदा पश्यता
सान्द्रं सूरिगणेन निर्मलमहानन्दात्मकं शाश्वतम्।
अप्रेप्सन्त इमे समेतमनिशं वेतालभूतालिभि-
र्लोकं भीकरमञ्चितुं व्यवसिता माहेश्वरं नश्वरम्।।

वि. – सखे गुणग्रहणकुतूहली भूयाः।

नित्यं कर्म समाचरन्ति निगमाञ्शास्त्राणि चाधीयते
सन्तन्वन्ति च सप्ततन्तुनिचयं धिन्वन्ति भक्त्याऽतिथीन्।
साम्बं त्र्यम्बकमर्चयन्ति शुचयः शैवाः सदैवादरा-
देषामीदृश धर्मणां कतिपये दोषा विषह्या न किम् ।।

स्मरहरपरिचर्या साम्प्रतं तन्यते या
जनयति हरिभक्तिं हन्त जन्मान्तरे सा।
शमित दुरितवर्गं सा च सूतेऽपवर्गं
कुतं इव फलहानिः ? कुर्वतां शर्वपूजाम्।।

परंतु –

सा रुद्रभक्तिर्वितनोति भद्रं या विष्णुविद्वेषलवासहिष्णु।
त एव धार्माय भवन्ति दाराः कदापि यन्नाभिमृशन्ति जाराः ।।
शेष शायिविद्वेष एव हि मूर्धाभिषिक्तो दोषः पुरुषाणाम्।

पश्य :–

नास्तिक्यमावहति नारकमतानोति प्रौढिं निहन्ति परिलुम्पति
सम्पदं च।
आयुः क्षिणोत्युपचिनोति समस्तदोषान् द्वेषो मुकुन्द विषयो
विषयोगतुल्यः ।।



कृ०ः– तथ्यमेव तथाप्यवैदिकव्रतेष्वेव प्रयततां शिवभक्तिमभिनयतां पाषण्डविशेषाणामेषां वेष एव भीषयति हृदयम्।
तथा हि –

श्रिताभव्यमार्गाश्चिताभस्मशुष्यन्निरालाजटलाः स्फुटालापशून्याः।
श्मशानाग्निसंख्या दृशा निर्दहन्तः पिशाचा इवामी दिशासु
भ्रमन्ति।।

किं च एषामतिजुगुप्सिता रीतिः

पक्षीकृत्य गिरीशं सिद्ध्या रहिताश्च मानहीनाश्च।
इच्छन्त्यधिगन्तुमिमे धनं जयं लिङ्गदर्शनेनैव।।

अन्ये चात्र –

दीर्घवक्रनखरं खरकल्पा उद्धरन्त इव बाहुयुगं ते।
शौचमाचरितुमप्यसमर्था नीचबुद्धिहृदया विहरन्ति।।

वि. - निमृश्य :–

सखे गुणग्राहिणा नैतेऽपि दूषणीयाः ।

शीतोष्ण जृम्भणसहेषु जितेन्द्रियेषु
कष्टोपवासपरिशुष्ककलेवरेषु।
पुण्यस्थलाटनपराकृतकिल्बिषेषु
जनीहि कानपि गुणान् जटिलेष्वमीषु ।।

## ज्यौतिषवर्णनम्

इत्यन्तो वीक्ष्य साशङ्कम् –

क इमे पुस्तकहस्ताः कल्य एवोत्थाय तत इतः पर्यटन्ति।

कृ०–निपुणमवलोक्य सपरिहासम् –

ज्योतिः शास्त्रमहोदधौ बहुतरोत्सर्गापवादात्मभिः
कल्लोलैर्निबिडे कणान् कतिपयाँल्लब्ध्वा कृतार्था इव।
दीर्घायुः-सुत-संपदादिकथनैर्दैवज्ञपाशा इमे
गेहं गेहमनुप्रविश्य धनिनां मोहं मुहुः कुर्वते ।।

किं च- विलिखति सदसद्वा जन्मपत्रं जनानाम्
फलति यदि तदानीं दर्शयत्यात्मदाक्ष्यम्।
न फलति यदि लग्नं द्रष्टुरेवाह मोहं
हरति धनमिहैवं हन्त! दैवज्ञपाशः।।

अपि च- प्रमोदे श्वेदे वाऽप्युपनमति पुंसो विधिवशाद्
मयैवं प्रागेवाभिहितमिति मिथ्या कथयति।
जनानिष्टानिष्टाकलन परिहारैकनिरता
नसौ मेषादीनां परिगणनयैव भ्रमयति।।

अस्तु वा तथ्यवादी दैवज्ञास्तथापि वृथा तद्वचः श्रवणम्।

तथाहि– असुखमथ सुखं वा कर्मणां पंक्तिवेला
स्वहह ! नियतमेते भुञ्जते देहभाजः।
तदिह पुरत एव प्राह मौहूर्तिकश्चेत्
कथय फलममीषामन्ततः किं ततः स्यात्।।

वि. :– एहिकामुष्मिककर्मारम्भोपयोगिनो नोपालम्भमर्हन्ति ज्योतिर्विदः।

शृणु तावत्–

न दैवं न पित्र्यं च कर्मात्र सिध्येन्न यत्रास्ति देशे ननु ज्यौतिषज्ञः।
न तारा न चारा नवानां ग्रहाणां न तिथ्यादयो वा यतस्तत्र बुद्धाः।।

यच्च समर्थितं मौहूर्तिकवचननिशमनं मुधेति तन्निपुण निरूपणा न भणन्ति।

यतः- भानोः शीतकरस्य वापि भुजगग्रासे पुरो निश्चिते
तीर्थानामटनं जनस्य घटयेत्तापत्रयोच्चाटनम्।
इष्टे प्रागवधारिते सति धृतेस्तुष्टेश्च लाभो भवेद्।
दृष्टे तु व्यसनेऽत्र तत्परिहृतिःकर्तुं जपाद्यैः क्षमा।।

अविस्रम्भश्चद्दैवज्ञवचनेष्वनुपपन्नः

वृद्धिह्रासौकुमुदसुहृदः पुष्पवन्तोपरागः
शुक्रादीनामुदयविलयावित्यमीसर्वदृष्टाः।
आविष्कुर्वन्त्यखिलवचनेष्वत्र कुम्भी पुलाक
न्यायाज्जोतिर्नयगतिविदां निश्चलं मानभावम्।।

इत्थं किल नीतिविदो विदुः।

विदैवज्ञं ग्रामं विबुधविधुरं भूपतिसभम्
मुखं श्रुत्या हीनं मनुजपतिशून्यं च विषयम्।
अनाचारान् दारानपहरिकथं काव्यमपि च
प्रवक्तृत्वापेतं गुरुमपि सुबुद्धिः परिहरेत्।।

## भिषग्वर्णनम्

कृ० - अस्त्वेवम् - इत्यन्यतो वीक्ष्य सोपहासम्
मिथ्यौषधैर्हन्त ! मृषाकषायैरसह्यलेह्यैरयथार्थतैलैः।
वैद्या हमे वञ्चितरुग्णवर्गाः पिचण्डभाण्डं परिपूरयन्ति।।

किं च- न धातोर्विज्ञानं न च परिचयो वैद्यकनये
न रोगाणां तत्त्वावगतिरपि नो वस्तु गुणधीः।
तथाप्येते वैद्या इति तरलयन्तो जडजना
न सून्भृत्या मृत्योरिव वसु हरन्ते ! गदजुषाम्।।

अपि च - कषायैरुपवासैश्च नृणामुल्लाघतां कृताम्।
निजौषधकृतां वैद्यो निवेद्य हरते धनम्।।

वि. - वयस्य ! विश्वोपकारिषु वैद्येषु अवद्यानि न कलयेथाः

पश्य- मस्ते दुःसहवेदनाकवलिते मग्नेस्वरेऽन्तर्गलं
तप्तायां ज्वरपावकेन च तनौ तान्ते हृषीकव्रजे।
दूने बन्धुजने कृतप्रलपने धैर्यं विधातुं पुनः
कःशक्तःकलितामयप्रशमनाद्वैद्यात्परोविद्यते।।

मा बोधि वैद्यकमथापि महामयेषु
प्राप्तेषु यो भिषगिति प्रथितस्तमेव।
आकारयत्यखिल एव विशेषदर्शी
लोकोऽपि तेन भिषगेव न दूषणीयः।।

कष्टमहो कृतोपकारेष्वगदङ्कारेषु कृतघ्न एव निर्विविको लोकः। इत्थं हि कवयः कथयन्ति।

निर्वृत्ताध्वरकृत्य ऋत्विजमथोत्तीर्णापगो नाविकं
युद्धान्ते सुभटं च सिद्धविजयो वोढारमाप्तस्थलः।
वृद्धं वारवधूजनं च कितवो निर्घृष्टतद्यौवनो
ध्वस्तातङ्कचयश्चिकित्सकमपि द्वेष्टि प्रदेयार्थिनम्।।

## कविवर्णनम्

इति विमानमग्रतश्चालयन्नग्रतोऽवलोक्य सोपालम्भम्।

कृ०– सखेऽत्र पश्य कवीनामेषां शास्त्रैर्विप्रतिषिद्धां चर्याम्।

श्रीनाथस्तवनानुरूपकवनां वाणीं मनोहारिणीं
कष्टं हा कवयः कदर्यकुटिलक्ष्मापालसात्कुर्वते।
दूरोपाहृतसौरसैन्धवपयो देवाभिषेकोचितं
संसेके विनियुञ्जते सुमतयः शाकालवालस्य किम्।।

किं च - स्तुवद्भवनिवर्तके सति हरौ कविः सूक्तिभिः
करोति वरवर्णिनीचरितवर्णनं गर्हितम्।
अनीतिरवनीपतिर्गृहशुनी तनुंमौक्तिके
विभूषयति देवतामुकुटभागयोग्यैर्यथा।।

विं - आन्तरध्वान्तहरयः कवयस्त्वया नाधिक्षेप्याः।
कामं वाचः कतिचिदफलाः सन्तु लोके कवीनां
सन्त्येवान्या मधुरिपुकथासंस्तवाः कामदोग्ध्र्यः ।
वित्तं कामं भवतु विफलं दन्तमश्रोत्रियेभ्यः
पात्रे दत्तैर्भवति हि धनैर्धन्यता भूरिदातुः।।

कल्याणं भगवतकथाग्रथनतः काव्यं विधातुः कवे
स्तस्यैवाङ्गतया क्वचिद्रचयतः शृङ्गारवीरादिकम्।
को दोषो भविता ? यदत्र कविताशीलैः समाश्रीयते
पन्था व्यास वसुन्धरा श्रुतिभवग्रन्थादिषु प्रेक्षितः ।।

कृ०- नरस्तुतेर्विधातारो न वस्तुत इमे बुधैः।
श्लाघनीया इति कवीञ् शास्त्राध्वन्यो विनिन्दति।।

वि.- धनचपलसकलपुरुषसाधारणमिदं दूषणमविवेकिभिः कविष्वेव केवलमाधीयते।

यतः - पद्यैर्हृद्यतमैः स्तुवन्ति कवयः प्रायेण पृथ्वीपती
नन्ये तान् स्तुवते वचोभिरचमत्कारैरसारैरपि।
पद्यारम्भणशक्त्यशक्तिविहितो भेदः कवीनांभव-
त्यन्येषां च परं नरस्तुतिकृतो दोषस्तुसार्वत्रिकः।।

क्षणमालोक्य सादरम् —

प्राचेतसव्यासपराशराद्याः प्राञ्चः कवीन्द्राः जगदञ्चितास्ते
गोष्ठी नवीनापि महाकवीनां पूज्या गुणज्ञैर्भुवनोपकर्त्री ।।

तथाहि-

माघश्चोरो मयूरो मुररिपुरपरो भारविः सारविद्यः
श्रीहर्षः कालिदासः कविरथ भवभूत्याह्वयो भोजराजः।
श्रीदण्डीदिण्डिमाख्यः श्रुतिमुकुटगुरुर्भल्लटोभट्टबाणः
ख्याताश्चान्ये सुबन्ध्वादय इहकृतिभिर्विश्वमाह्लादयन्ति।।

परन्तु- सम्पन्निर्मदभावयवमोरनघयोः साहित्यपाण्डित्ययोः
सामर्थ्यान्यजनोपकारकतयोः साम्राज्यदाक्षिण्ययोः।
औदार्यप्रियवादयोश्च कथयन्त्याचारविज्ञानयोः
सामानाधिकरण्यमेव विबुधोत्तंस प्रशंसास्पदम्।।

इदं चावधेयम् —

प्रणतचरणरेणुविष्णुचित्तः शठमथनरसो मुनिः स भूतः
मधुरकविरितोपरे च धन्याः कति न पुनन्ति जगन्ति सूक्तिपूरैः।

## तार्किकवर्णनम्

कृ०— पुरतो विमानं प्रस्थाप्य पार्श्वतो दृष्ट्वा—
पश्यैतानाग्रहिणः पुरुषान् य एते व्यर्थमेव न्यायग्रन्थ
संततचिन्तनेने विश्राम्यन्ति।

तथाहि— कर्मब्रह्मविचारणं विजहतो भोगापवर्गप्रदां
घोषं कञ्चन कण्ठशोषफलकं कुर्वन्त्यमी तार्किकाः।
प्रत्यक्षं न पुनाति नापहरते पापानि पीलुच्छटा
व्याप्तिर्नावति नैव पात्यनुमितिर्नो पक्षता रक्षति।।

किं च— हेतुः किं च विशिष्टधीरनुमितौ न ज्ञानयुग्मं मरुत्
त्वाचो नेति च मोहवादमुखरा नैयायिकाश्चेद्बुधाः।
मेषस्याण्डमियत्पलं बलिभुजोदन्ताः कियन्तस्तथे
त्येवं सन्तत चिन्तनैः श्रमजुषो न स्युः ? कथं पण्डिताः ।।

विशिष्य चैतस्य शुष्कतार्किकस्य रीतिर्विवेकिनामुपहासास्पदम्।

शृणु तावत् - न जिघ्रत्याम्नायं स्पृशति न तदङ्गान्यपि सकृत्
पुराणं नाधीते न गणयति किं च स्मृतिगणम्।
वदञ् शुष्कं तर्कं परपरिभवार्थोक्तिभिसौ
नयत्यायुः सर्वं निहितपरलोकार्थयतनः।।

अपि च- प्रयत्नैरस्तोकैः परिचितकुतर्कप्रकरणाः
परं वाचो वश्यान् कतिपयपदौघान्विदधतः।
सभायां वाचाटाः श्रुतिकटु रटन्तो घटपटान्
न लज्जन्ते मन्दाः स्वयमपि तु जिह्वेति विबुधः ।।

वि. — वयस्य विविधोपकारविधायकान् नैयायिकान् मावमंस्थाः

शृणु तावत्— मोहं रुणद्धि विमलीकुरुते च बुद्धिं
सूते च संस्कृतपदव्यवहारशक्तिम्।
शास्त्रान्तराभ्यसनयोग्यतया युनक्ति
तर्कश्रमो न तनुजे ? किमिहोपकारम्।।

तथाहि– प्रायः काव्यैर्गमितवयसः पाणिनीयाम्बुराशेः
पारज्ञस्याप्यपरिकलितन्यायशास्त्रस्य पुंसः।
वादारम्भे वदितुमनसो वाक्यमेकं सभायाम्
प्रह्वा जिह्वा भवति कियतीं पश्य कष्टामवस्थाम्।।

किं बहुना- अपरीक्षितलक्षण प्रमाणैरपरामृष्टपदार्थ सार्थतत्त्वैः।
अवशीकृतजैत्रयुक्तिजालैरलमेतैरजधीततर्कविद्यैः।।

निरूप्य– अद्भुतस्तर्कपाथोधिरगाधोयस्य वर्धकः।
अक्षपादोऽतमः स्पृष्टस्त्वकलङ्कः कलानिधिः।।

पुनरालोच्य सश्लाघम्–

ज्ञानाब्धिरक्षचरणः कणभक्षकश्च
श्रीपक्षिलोऽप्युदयनः स च वर्धमानः।
गङ्गेश्वरः शशधरो बहवश्च नव्या
ग्रन्थैर्निरुन्धत इमे हृदयान्धकारम्।।

## मीमांसक वर्णनम्

कृ०–अपरत्र व्योमयानमानयन्नग्रतो निर्वर्ण्य सोपाम्भम्
मीमांसकाः कतिचिदत्र मिलन्दि वेद-
प्रमाण्यसाधनकृतोऽपिनतेऽभिवन्द्याः।
उद्घोषितोऽप्युपनिषद्भिरशेष शेषी
ब्रह्मैव नाभ्युपगतः पुरुषोत्तमो यैः।।

विशिष्य च मीमांसक गोष्ठ्यां विश्रुताः शबरादयः शबरा इव भगवद्भक्तानां विनिन्दनीयाः।।

ते मीमांसाशास्त्रलोकप्रसिद्धाः सर्वर्षीणांसेहिरे नैव सत्ताम्।
चैतन्यस्यापह्नवं देवतानां चक्रुर्विश्वं नश्वरं मन्यमानाः ।।

वि. –सखे निखिलनिगमार्थं निर्धारण बद्धादरेषु मीमांसकेषु मा स्मसन्नह्येथाः

शृणु— आदौ धर्मे प्रमाणं विविधविधिभिदाशेषतां च प्रयुक्तिम्
पौर्वापर्याधिकारौ तदनु बहुविधं चातिदेशं तथोहम्।
बाधं तन्त्रं प्रसङ्गं नयनद्यनशतैः सम्यगालोचयद्भो
भिन्ना मीमांसकेभ्यो विदधति ? भुवि के सादरं वेदरक्षाम्।।

पश्य तावद्भागवत इव जैमिनिमुनेः शासनं वैदिकैः सर्वैरप्यनतिक्रमणीयम्।।

तथाहि —

नैयायिका वा ननु शाब्दिका वा त्रयीशिरस्सुश्रमशालिनो वा।
वादाहवे विभ्रति जैमिनीयन्यायोपरोधे सति मौन मुद्राम्।।

यच्चमीमांसकेषुदोषोद्धारतंतदज्ञानतः।
भगवदनभ्युपगमनं दैवतचैतन्य निह्नवश्चैषाम्।
कर्मश्रद्धावर्धकतत्प्राधान्यप्रदर्शनायैव।।

पुनरालोच्य बहुमानम् —

आगमनरूपविचारिण्यधिकरणसहस्रशिक्षितविपक्षे।
स्वामिनि जैमिनियोगिन्यपि रज्यति हृदयमस्मदीयमिदम्।।

किं च— शबरकुमरिलगुरवो मण्डनभवदेवत्पार्थसारथयः।
अन्ये च विश्वमान्या जयन्ति संत्रायमाणतन्त्रास्ते।।

## वैयाकरणवर्णनम्

कु०—अस्त्विति विमानमन्यतो गमयन् पार्श्वतो दृष्ट्वा सोपहासम्।

टिड्ढाणञ् द्वयसच्चुटूङसिङसोस्तिप्-तस्-झि-सिप्-थस्-थ मिब्-वस्-मस्-तानिचि च ष्टुना ष्टुरत इञ् शश्छोड-ट्यचोऽन्त्यादिटि लोपो व्यार्वलि वृद्धिरेचि यचि भं दाधा ध्वदाम्नाज्झला-वित्येते दिवसान्नयन्ति कतिचिच्छब्दान् पठन्तः कटून्।।

झोऽन्तः शश्छोटि शेषोध्यसखि ससजुषोरुर्विरामोऽवसानं
छे चेति व्यर्थवाचः सदसि यदि सतां शाब्दिकाश्चेद्बुधास्युः।
किं तैरेवापराद्धं ? नटविटगणिकानृत्यहस्तप्रचारै
स्तोधी तोधी तधीति त्तकिटतकिट धिक् ताहधिक् तत्तकारैः।

किं च– सूत्रैः पाणिनिकीर्तितैर्बहुतरैर्निष्पाद्यशब्दावलिं
वैकुण्ठस्तवमक्षमारचयितुं मिथ्याश्रमाः शाब्दिकाः।
पक्त्वाऽन्नं महता श्रमेण विविधापूपाम्यसूपान्वितम्
मन्दाग्नीननुरुन्धते मित बलानाघ्रातुमप्यक्षमान्।।

वि.–मह्याभरणेषु वैयाकरणेषु भवान् मा स्म कलयतु दोष-शकलम्

यतः – कृतदुरितनिराकरणं व्याकरणं चतुरधीरधीयानः।
बुधजनगणनावसरे कनिष्ठिकायां परं जयति।।

पातञ्जले विष्णुपदापगायाः पातंजले चापि नयेऽवगाहम्।
आचक्षते शुद्धिदमा प्रसूतेरा च क्षते रागमधोक्षजे च ।।

अपि च –

नृणामनभ्यस्तकणाभृदीशगिरां दुरापा बुधराजगोष्ठी।
अबुद्धयापश्रुतिपद्धतीनां युद्धाक्षेमेवोद्धतयोद्धृसार्था।।

तथाहिः –

नाङ्गीकृतव्याकरणौषधानामपाटवं वाचि सुगाढमास्ते।
कस्मिंश्चिहुक्ते तु पदे कथञ्चित्स्वैरं वपुः स्विद्यति वेपते च।।

कृ० –साक्षेपम् - कथं सखे। शतकोटिपाणिनिगदितादपि पाणिनिगदितमेव व्याकरणमाद्रियन्ते सन्तः।

वि. – पाणिनीयमेव हि व्याकरणं प्रयोगौपयिकं प्रविशदप्रतीतिकारणमिति तत्रैवादरः पण्डितानाम्

तथाहि –

सूत्रं पाणिनिबद्धं कण्ठे कलयन् समुद्वहति सुदृशम्।
वर्णादीनां धर्मान्बुद्ध्वा विधिवद् बुधः प्रयुङ्क्तेऽसौ।।

## वैदिकवर्णनम्

कृ०– अस्त्विति विमानमन्यतश्चालयन् पुरोऽवलोक्य-सखे! पश्य छान्दसार्थ चापलेन विक्रीयमाणाम्नायान्।

आः कष्टमाप्रहृष्टाः शिष्टा अपि वित्तचापलाविष्टाः
अध्यापयन्ति वेदानादाय चिराय मासि मासि भृतिम्।।

वि. – वयस्य मैंव वादीः

नाध्यापयिष्यन् निगमाञ् श्रमेणोपाध्यायलोका यदि शिष्यवर्गान्
निर्वेदवादं किल निर्वितानमुर्वीतलं हन्त! तदाऽभविष्यत्।।

कृ.–विरुद्धमिदंभाषितंयद्वेदापायेसतिनयज्ञाभ्युदयःस्यादिति।

वि. – अवगच्छ तावदेतदविरुद्धमेव।

नाम्नायज्ञो मखे यस्मिन् यजमानतया स्थितः
तत्समागमतः सोऽनि नाम्ना यज्ञो भवेन्न किम्।।

## राजसेवकवर्णनम्

कृ०– पुनरन्यतो दृष्ट्वा सोपहासम् पश्यैतान् राजसेविनः परित्यक्तलोकद्धयसौख्यान् स्पष्टमौर्ख्यान् पुरुषान्।

नैषां संध्याविधिरविकलो नाच्युतार्चाऽपि साङ्गा
न स्वे काले हवन नियमे नापि वेदार्थ चिन्ता।
न क्षुद्वेलानियतमशनं नापि निद्रावकाशो
न द्वौ लोकावपि तनुभृतां राजसेवापराणाम्।।

वि० – दुस्सहैषा बहुजनपोषकाणामेषां निन्दा।

अशुभपुषि कलावप्यप्रमत्ताः स्वधर्मा-
दनुदिन मुपकारानाचरन्तो बुधानाम्।
बहुजन परिपुष्टौ बद्धदीक्षास्त एते
तनुसुखमपि हित्वा तन्वते राजसेवाम्।।

# वरदाभ्युदयचम्पू

## द्वितीय विलासः

### ब्रह्मणा यज्ञकरणसंकल्पः, सरस्वत्या तद्विघातः, देवैः विष्णुप्रार्थना च

अथ कोपवतीं सरस्वतीं तापमहार्येव चिकीर्षुमश्वमेथम्।
अवलोक्य मुनीन्द्रबृन्दमारादरविन्दाननमेवमाचचक्षे ।।

हे भगवन् ! विधातः ! सर्वदा दुर्वारकोपा नोपागमिष्यति सरस्वती। ततस्सावित्र्यादिपत्न्यन्तरसमेतो भवानत्र चिकीर्षितं क्रतुमारब्धुमर्हतीति। तथैवेति तामरसभूरप्यभ्युपगम्य तमध्वरं सावित्र्यादिसंयुतो निराशङ्कस्सङ्कल्पयामास।

अथानुतिष्ठन्हयमेधदीक्षामभ्यागतानध्वरदर्शनाय ।
सुरासुरान्मानयितुं विधाता धरासुरान्धर्मयुतो न्ययुङ्क्त ।।

पत्युः प्रजानां परमाज्ञया तत्समासदस्साधु समाजयन्तः
भूमीसुरा भूरितरां सपर्यां विशेषतस्ते त्रिदशेषु तेनुः।।

सुपूजनेनावमतास्सुधाभुजां सर्वेऽपि दैत्यास्सदसस्स्वयम्भुवः
तत्त्वावबोधादरतस्तिरस्कृताश्चित्तादुदुरूहाश्वनिर्गता वहिः।।

अनन्तरममरबृन्दमवमन्तुकामा भीमा दैत्यस्तोमास्संग्रामाय मतिमारचयामासुः। तांश्च संयते यतमानान्कार्याकार्यविवेचनो विरोचनो वचनमिदमवोचत। भो भोः पूर्वदिवाः ! अनालोचितरुचिरमनर्थोदर्कममुं सन्नाहमुपजहातु भवन्तः। तथाहि:—

सहसा कुर्वतां कर्म शर्महानिरसंशयम्।
सुलभा शलभानां हि वह्निमह्नाय विन्दताम् ।।
असाध्ये यतमानो द्रागनालोच्य निजं बलम् ।
उपलां बालकस्तुङ्गमुद्धरन्निव स्विद्यते ।।

प्रबलैरपि चाविचार्य कार्ये यतमानैर्बत सेव्यते विवादः।
अविमृश्य पदं ह्रदे मदेभा ददतो ग्राहमुखं द्रुतं प्रयान्ति।।

विकलनिजपक्षशक्तिर्विचेष्टमानो जनः परबलेन।
आकुलतामाकलयेत्कोकिलपाक इव काकलोकेन ।।

प्रायेण दुर्बलमपि प्रबलावलम्ब-
सम्पन्नमुल्बणबलोऽपि न लोप्तुमीष्ठे।
किं कुञ्जरः कथय केसरिकन्दरान्त-
कासार सारस कदर्थनलब्धवर्णः।।

प्रस्पर्धते जडात्मा परेण यस्तदूबलं ह्यपश्यन्सः ।
कबलीक्रियते रिपुना कलशीतनयेन सलिलराशिरिव ।।

यदुपायत एव साधनीयं क्रियते तत्र न विक्रमस्समर्थैः ।
वसनं दृढकपृकेषु लग्नं कृतिभिर्न प्रतिकृष्यते बलेन ।।

मध्ये निधाय कमपि क्षपयेद्विपक्षा-
न्साक्षाद्यदि स्पृशति तैः प्रबलैर्विनश्येत् ।
आधाय कुम्बमनलोऽन्तरतो जलस्य
क्वाथाय जायत इयात्क्षयमन्यथायम् ।।

इत्थञ्च निगदन्ति नीतिविदः—

प्राज्ञापचारः कुजनानुसारः प्रजाजिघांसा प्रमदैकसक्तिः ।
बालेन सख्यं बलवद्विरोधो मृत्योर्विवर्ताष्पडिमे निरुक्ताः ।।

सङ्घर्षमुत्पाद्य मिथोरिपूणां भङ्गंबुधास्सङ्घटयन्ति तेषाम् ।
ग्रावोपरिग्रावनिपातनेन ग्राव्णोर्द्वयोरप्युदियाद्विभेदः ।।

इदञ्चावधेयम्,

कपटेन पटेन चाविधेया विकृतिस्साधु हृदश्च वर्ष्मणश्च ।
लघुधीरिह यः प्रकाशयेत्तां लभते केवलमेव लाघवस्सः ।।

ततश्च,

सकलदुरितहारी सर्गरक्षान्तकारी
दितिजनिचयखाती देवतापक्षपाती ।
हरिरधि हयमेधं ब्रह्मणाऽऽराध्यते त-
त्समरमिह न देवैस्सम्प्रतं सांप्रतं नः ।।

परन्त्वत्रायमुपायः प्रतिभाति। अपङ्क्तिःल पङ्जासनो विनैव सरस्वतीमश्वमेधेन यजते। तदुपज्ञं तस्याः क्रोधमेधयद्भिरस्माभिरध्वरमङ्गस्सङ्घटनीयस्तन्मुखेनैव। एतच्च वैरोचनं वचनमुचितमित्यभिनन्दन्तो दितिनन्दना अरविन्दभवसुन्दरीसन्दर्शनाय प्रस्थाय सरस्वतीमुपासेदुः, ते च सद्य एव द्विजवेषधरा असुरा गिरां देवतामेवं तावदभितुष्टुवुः।

जय देवि सदा सर्व सदागमसमीडिते ।
जय देवि बुधानां सद्वरदे परदेवते ।।

कविलोकचकोरिचन्द्रिकां त्वामरविन्दासनपूर्वपुण्यशैलीम् ।
परिपीय विलोचनानि मातर्महतीं कामपि सौहितीं लभन्ते ।।

सा च वाचां देवी स्तुतिप्रसन्ना, किं नाम भवतामागमनप्रयोजनमिति तानप्राक्षीत्, पृष्टाश्च ते तामेवमवोचन्—

कुमतिभिर्मुनिभिः प्रतिबोधितो वनजर्भुवनितान्तरसंयुतः ।
सवनमारभते भवतीं विना कवनमम्ब विना प्रतिभामिव ।।

इमाममर्यादामसहमाना वयमेतदुदन्तं भक्त्यै प्रत्यावेद्य त्वन्मुखेनैव तन्मखप्रत्यूहं कर्तुकामास्समागतास्स्मः। ततश्चः –

मखभङ्गं विरिञ्चस्य मुखभङ्गं सुपर्वणाम्।
कर्तुमर्हसि दृप्तानां हर्तुमर्हसि नश्शुचम् ।।

पत्युर्मखप्रत्यूहः कथङ्कारं करणीय इति मा शङ्किष्ठाः।
हन्तानाधृत्य धातुस्सहचरि भवतीमश्वमेधः प्रवृत्तो-
प्यत्यर्थं दुस्सहत्वात्प्रथितशकनया स त्वया वारणीयः।
रोद्धव्यं वस्तु भव्योत्तरमपि निपुणैस्स्वव्यधाकारकञ्चे-
दत्युष्णं पौष्णमंहश्चिदमपि किरणं वारयन्त्यातपत्रैः ।।

इत्येवमत्याग्रहिणीं दैत्यानामुक्तिमुपशृत्य कुपितवत्या सरस्वत्या प्राजापत्याध्वरप्रत्यूहं कर्तुमत्युल्बणवैयात्यया वेगवत्याख्य तटवत्याकारं निभ्रत्या सह्यगिर्यधित्यकातो निर्गत्य सत्यव्रतं प्रत्याजग्मे।

सर्वामुर्वीमुदञ्चन्तरझरतरसा साध्रुना सधुनाना-
पातालं व्याप्नुवाना किल जलवलनैरभ्रगर्भं लिहाना।
व्याधून्वा नाथ नानागिरिकुलमचलं लोकमानान्पुनाना
नीरन्ध्रीभूतदिक्का सरसिजवसते स्सिन्धुरूपा पुरन्ध्री।।

तदा किल मदाकुल सुरकरटिवरकरटतटस्यन्दमानदानपूरव्यतिकर किम्मरितनीरतया कुलशिखरिशिखराक्रमणसमयसमुपनत तदीय धातुपांसु मांसलतया च सञ्जातयमुनासरस्वतीसङ्गगङ्गाप्रवाहमोहमावहन्ती, घनतरस्यदसमुत्पारितविविधविटपि पटलनिबिडतरुणकुसुमनिकरविसृमरमकरन्दधाराभिः प्रवाहजवाकृष्यमाण क्षोणीधरकन्धरोत्थित कण्ठारवकण्ठरव श्रवणकातर कलङ्कसारङ्गसमाश्वासन व्यासङ्गवेलासमुपनततरङ्गसङ्घातविदलि-

तकुरङ्गलाञ्छनमण्डलगलदमृतझरीभिश्च पुररुक्तमाधुर्यगाम्भीर्या, सलिलोपरि परिप्लवमान हरिदश्वस्यन्दन धुरन्धरगन्धर्वकान्ति-सन्दोहसंवलन दशाद्विगुणित विशालशैवालमाला, पतनोत्पतनोल्ल-सत्कल्लोलसङ्घसंङ्घोषाडम्बरपरिकम्पितनिलिम्पलोकानोकह-शाखाग्रनिष्पतत्पुष्पतत्याम्रेडितडिण्डीरखण्डषण्डपाण्डुरा जलम-ध्यबलमान वलहककुलान्तरसंदृश्यमाननक्षत्रलक्षसमर्पितपुष्परप-र्णाम्यर्णवर्तिपुण्डरीकमण्डलीमोहा, आक्रमन्तीव रसातलम्, आचाम-न्तीव भूतलम्, आप्लावयन्तीव त्रिविष्टपम्, आप्यायन्तीव सप्तरत्नाकरान्, आकम्पयन्तीव सप्तकुलाचलान्, सञ्चा लय-न्तीव दिक्चक्रवालम्, संक्षोभयन्तीव ब्रह्माण्डम्, उद्विग्नयन्तीव दिग्गजान्, उन्मूलयन्तीव महाटवीम्, उपरुन्धन्तीव पद्मबन्धु-गतिम्, प्रतिषेधयन्तीव चन्द्रचङ्क्रमणम्, भक्षयन्तीव नक्षत्र-गणम्, भत्सयन्तीव स्वं विना प्रक्रान्ताध्वरकर्माणं ब्रह्माणम्, मज्ज-यन्तीव प्रपञ्चम्, लज्जयन्तीव प्रलयजलधिम् तर्जयन्तीव पत्यध्व-रत्र्हत्विजः, कबलयन्तीव काञ्चीनगरीम्, राजपत्नीव विधृतीवचि-त्रोर्मिका, युध्यमानभटपंक्तिरिव व्यालोलपरमकरवाला, अङ्गरीति-रिवाऽवग्राह ग्राहिका, विकृतिरिवोच्चोदका, ऋक्षवन्तनगरीव रक्षितश-म्बराडम्बरा, दाशरथि दयाझरीव समूलकाषङ्कशितानुकूलमहाग-श्श्रेणिका, कृपणगृहिणीव कुवलयभूषिता, कुजनतेव सतामरसता-माकलयन्ती, सवेगगमनापि राजहंसगतिः, सवनसमृद्धिरपि वितत्ताग-राजिलोपाश्रिता, अप्रधानशीलतया प्रख्यातापि स्वर्णस्तोम परिपूरित-राकलशा, नागोल्बणप्रवाहापि भूभृदाकर्षण प्रवृत्ता, कञ्जभवनसव-नभञ्जने रागवती वेगवती द्रागवतीर्णवती सत्यव्रतसन्निकर्षम्।

स्ववर्जमारब्धमखं विरिञ्चं सनिर्जरं द्रागिव तर्जयन्ती।
निर्जग्मुषी सह्यतटाद्युगान्तपर्जन्यवद्वेगवतीजगर्ज।।

तदा किल श्रुताद्भुतवेगवती गर्जितानां पितामहवितानशा-लागतानां देवतानां भूदेवतानाञ्च सञ्जातापरमाकुलतानोपगता वाचामपिगोचरताम्। तथाहि –

नादे नादे चाद्भुतपूरस्य समृद्धे
धावं धावं तत्र सुरैर्भूसुरजालम्।
हस्तस्रस्तप्रस्तरमस्तस्तुतशस्त्रं
त्रस्तत्रस्तं ग्रस्तमाभूद्दुस्तरदुःखैः ।।

उद्वेगागर्जितेर्धातुरुद्वेगागर्जिते क्रतौ।
स्वाहाकारश्शमं प्राप्तो हाहाकारो विजृम्भितः।।

अपि च,

वेगवत्यागमोद्वेग विद्रुताशेषमानुषा ।
वितानशाला सा भेजे स्वयमेव वितानताम् ।।

अनन्तरमाकस्मिकात्यद्भुतनदीस्रोतस्समापतनचकिता वितानविलोकनार्थमागतास्सर्वेऽपि सनिर्वेदं चतुर्वदनं यजमानं शरणमुपजग्मुरब्रुवंश्चैवम्—भगवन्पितामह ! परित्रायस्व परित्रायस्व शृणु चेदं वचनम्।

हठान्महीभृत्कटकानशेषानामज्जयन्तो मुखलग्नफेनाः ।
नाग्नास्तुरङ्गा इव यज्ञहान्यै नदीतरङ्गा दृतमापतन्ति।।

दीप्रवहागमनतोर्निवत्येऽस्मिंस्तवक्रतौ।
नदीप्रवाहागमनञ्चेद्विघ्नो नास्य किं भवेत् ।।

इदं वचनं निशमयन्नितिकर्तव्यतामुग्धो हिरण्यगर्भो योगदृष्ट्या दैत्यदुरुक्तिमुपश्रुत्य कुपितवत्याः भारत्याः कृतमित्यधिगत्य, गत्यन्तरविरहाद्गरुडध्वजमेव भगवन्तं शरणमुपगच्छन्नच्छमतिरित्थमनुसमधत्त।

भवकैरवभास्करासुरारे तव कैङ्कर्यविधातभीतचेताः ।
तरणं विपदं बुधेरभीप्सन्शरणं त्वच्चरणाम्बुजं भजन्ति ।।

भवत्पदकुशेशये भवनिवृत्तये स्वाशये
रमासख दयोदधे रचितभक्तभव्योदधे ।
यथा न भयमध्वरे भवति सिन्धुतोमध्वरे
तथा नु मयि धन्यतां विदधती कृपा तन्यताम् ।।

हर्तुं सत्वरमापदां समुदयां कर्तुं बहूस्सम्पदो
धर्तुं नाथ समस्तलोकमुद्धर्तुं भवादाश्रितान् ।
लोप्तुं प्राप्तमदान्द्विषस्सु चरितं गोप्तुञ्च निश्शङ्कितं
कश्शक्तः कमलासहाय जगतित्वन्तः परो विद्यते ।।

वर्णत्रयं सुविधं श्रीमत्स्यादित्यनुश्रववचस्स्वम् ।
दव्यर्थतयैव विवृण्वन्श्रीमत्स्यात्मा श्रुतीरुदाहरस्त्वम् ।।

कूर्मरूपो भवान्शौरे येनापि वसुधा भृता ।
तेन त्वं चकृषे चित्रं देवान्न वसुधाभृतः ।।

कोलतां त्वत्परः प्राप्य कोलतामिव मेदिनीम्।
खण्डितोग्रारिरुद्धर्तुं पण्डितो वनराशितः ।।
रूपवत्कार्यमपि ते नृहरे विस्मयावहम् ।
हिरण्यमपि विख्यातं यदनष्टापदं व्यथाः ।।

अपि कुप्रतिग्रहमवाप्य जनो यदि नाम कार्यमिह निर्वहति।
परमल्पकोऽपि परिवृद्धिमियादिति वामनेने भक्ता विवृतम्।।

प्राहार्षीस्त्वं राम तुष्ट्यै बुधानां लङ्कारक्षोदक्षमस्वादुशब्द-
त्वत्पुत्राभ्यां त्वत्सुकाव्यं ररक्षे लङ्कारक्षोदक्षमस्वादुशब्दम्।।

त्वं यमुनाभेदनकृत्यदाश्रितो यस्त्वदीक्षणं धत्ते ।
तद्भ्रातृभेदकस्स्यात्तत्पितृभेदनमपि क्षमः कर्तुम् ।।

कृष्णोऽपि गोपीषु बहुपरक्तो भवांश्च तासां नयनैश्च पीतः ।
आपायत्यर्जुनदीप्तिमग्र्यमतो विदुस्त्वामिह विश्वरूपम्।।

कृते त्वया कलिध्वंसे कृते च प्रकटीकृते ।
त्रेतां द्विजा ग्रहीष्यन्ति त्रियुग द्वापरोऽत्र न ।।

एवं देवस्य चतुराननस्य स्तुत्या प्रसन्नः पन्नगपतिशयनो भगवान्स्वयं पुरस्सरसरस्वतीप्रवाहनिरोधाय तदभिमुखो मखपरिरिरक्षिषया जगदेकसेतुस्सेतूभूय शिष्ये।

अम्भोवेगादध्वरविघ्नोदयभीत्या देवे खिन्ने पद्मभवेदीनदयालुः।
सेतोर्बन्धे हन्त विलम्बो भवितेति क्षिप्तं सेतुस्सेतुकृदेव
स्वयमासीत् ।।

धातुःक्रतुं त्रातुमभीतहेतुस्सेतुर्यदासीत्पतगेन्द्रकेतुः ।
अतीव सा वेगवती सचिन्ता सती तदा वेगवती बभूव ।।

सन्दर्शनेनैव समस्तंमहस्संहर्तुमग्रे चतुरं स्फुरन्तम् ।
दुरत्ययं सेतुमवेक्ष्य दिव्यं धुनीव सा दूरत एव तस्थौ ।।

तदानीन्तु :—

अहरीशमण्डलकृतस्थितिमग्रावाप्त सत्कृतिं जगति ।
अजलध्याकलितममुं त्वद्भुतसेतुं महर्षयो दद्दृशुः ।।

**प्रणेमुश्चैवम्**

रमामुखाब्जभानवे समाश्रितद्युधेनवे
प्रकाशमानमूर्तये शुकादिगीतकीर्तये ।
दयारसैकसिन्धवे भयार्तदीनबन्धवे
विमोहदोषहारिणे नमो यथोक्तकारिणे ।।

अनुश्रवान्तचारिणे जनश्रमापहारिणे
हिताहितावधीरिणे नताशयानुसारिणे
रुचा घनानुकारिणे सुचारुरत्नधारिणे
नमोऽन्धयातुवैरिणे नमो यथोक्तकारिणे ।।

## तुष्टुवुश्चैनम्

जय जय जगदीश शम्भवैरि प्रमुखमखाशनबृन्दवन्दितांघ्रे ।
हुतवह हुतदिव्यहव्यभाग ग्रहसफलीकृतसप्तिसप्ततन्त्रे ।।

कोऽयं तवाश्रितजनेषु दयोदये य-
त्पाथस्विनी जनकपादपयोरुहोऽपि ।
दासस्य धातुरवनौ सवनावतार्यं
दामोदर प्रतिरुणत्सि सरित्प्रवाहम् ।।

इह बहुमुखवाहिनी मरौत्सिद्युवति-
कृते सरसीरुहाक्ष पूर्वम् ।
प्रणत सुरतरो भवान्दयालु
स्तनयकृते निरुणद्धितामिदानीम् ।।

विधिरयमवितानस्स्या -
दवितानस्स्याद्भवान्यदि मुरारे ।
अध्वरहित एवासी-
दध्वरहितमेक्ष्य सैन्धवरयस्त्वाम् ।।

अत्यल्पहानिमधिकप्रतिलाभमिच्छ -
मङ्गीकरोत्विति नयोपदिदिक्षयेत ।
वेधोऽश्वमेथमखविघ्ननिरोधहेतो -
स्त्वं सर्वतोमुखविधातमुरीकरोषि ।।

इत्यादिकया स्तुत्या वेगवत्यास्सेतुं नारायणमाराध्य तत आराध्याऽऽयान्तं भगवन्तमरविन्दजं प्रत्युदन्तमेतं निवेदयन्तो मुनयः प्रशशंसुः ।

विष्णोर्भक्तिविपक्तिरुक्तिपदवीमत्येति सत्येशते
यस्मात्वन्मखविघ्नसम्भवपरीहाराय नारायणः ।
सेतूभूय दयारसैकनिलयस्सिन्धोस्सबन्धोः पुरः
पर्यङ्के फणिरत्नदिव्य सुषुमोपेते सशेते स्वयम् ।।

वचनमिदं ऋषीणां वल्गुसर्गाधिकारी
श्रुतिपथमुपनीय क्षिप्रमुत्थाय हृष्टः ।
नतिनुतिततिमिस्तं नागमोगे शयानं
मुनिविबुधसमेतो मोदयामास देवम् ।।

तदनु तदनुमत्या तत्र दूने विरिञ्चे
पुरुषहृदयतुष्टयै पूरणं कर्तुकामे ।
श्रुतिषु तुरगमेधे चोदितं यद्यदङ्गं
तदखिलमपि कर्तुं तापसास्ते प्रवृत्ताः ।।

इति श्री वेङ्कटाचार्यकृते वरदाभ्युदये चम्पूप्रबन्धे
द्वितीयो विलासः।

# चोलचम्पू

## कुलोत्तुङ्गस्य अन्तःपुरप्रवेशः

तदानीमेवोत्थाय धर्मासनात्, प्रविश्य भोजनगृहं, विरचित भोजनविधिः, गृहीत ताम्बूलः, आमूलाग्र सुधाधवलिततया सुरासुरनिर्मथ्यमानक्षीरोदधिसमुद्भूतफेनपुञ्जमिवैकतः कृतम् अत्युन्नततया शरदभ्रपटलविजिगीषया अतिक्रामन्तमिव गगनमण्डलम्, दिशि दिशि विद्योतमानैः नवरत्नप्रभाझरीवाहिभिः सौवर्णैः कलशैः उपरि विभूषितान्तरालम्, तत्र तत्र विराजमानरत्नदीपप्रभापरम्पराभिः कबलितान्धकारम्, एकतश्च समुदञ्चितविपञ्चीरवम्, एकतश्च गम्भीरतरवाद्यमानमृदङ्गम्, एकतश्च मुखरितमुरजम्, एकतश्च श्रूयमाणवेणुनादम्, क्वचिदारभ्यमाणनृत्तप्रसङ्गम्, ;क्वचिदुद्गीयमानसङ्गीतम्, क्वचिदभिनीयमानभावम्, क्वचित् संस्तूयमानमनोभवपराक्रमम्, क्वचित्प्रशस्यमानचन्द्रकिरणम्, क्वचित् सम्पूज्यमानमन्दानिलचरितम्, क्वचित्प्रवर्त्यमानकाव्यविनोदप्रकारम्, तदुचित परिचारिकाभिः मणिदीपिकाहस्ताभिः निर्दिश्यमानवर्त्मा, प्रविश्यान्तःपुरसौधम्, "किं चापल्यमुपैषि चाम्पेयकलिके ! विपञ्चीमालिंगमाना च कं सञ्चिन्तयसे ? किं मधुराधरे ! मधुरसलुब्धा त्वं विधुरितहृदयेव विधुं न सम्मानयसि ? किं कदम्बवल्लरि ! नितम्बभरेणेव विलम्बसे शम्बरानयने? किं कुन्दरदने ! सुन्दरिके चन्दनाहरणे मन्दयसि? किं भ्रमरिके ! भ्रमसि वृथा भ्रान्तवदने भ्रमरान्न निवारयसि निपततोऽपि? विदग्धवचने! मुग्धवनितेव स्निग्धतरापि मयि दुग्धप्रदानं कथं विस्मरसि ? मदनिके ! मदनवशेन मदवनविषयेऽप्यद्य किं त्वं न दयसे ? प्रवालमञ्जरि! विशालपात्रेषु रसा-

लरसमापूरय, सुरसालानि दाडिमीबीजानि च; त्वरावतिके ! संत्वरस्व संत्वरस्व, चत्वरमागतो देव इति विसृत्त्वरेण जयशब्देन कथं न ज्ञायते ? गजराजमंदगतिविराजमानगतिविलासे राजानमिमं सम्भावय राजवनिते ! प्रत्युद्गमनेन'' इति शृण्वन् वचनानि मदकलमालपन्तीनां मणिमयपञ्जरविहारिणीनां शुकशारिकाणाम्, द्वारपालिकाभिः प्रणम्यमानः,प्रत्युद्गम्य प्रियया जयशब्दपूर्वकं दत्तहस्तावलम्बः, चन्द्रशालामासाद्य सुखोपधानं स्वास्तीर्णमृदुलशयनं तया साकं मञ्चमध्या- स्य तरुणतरुणतरकिरणपरम्पराभिः कतकरेणुभिरिव निर्मलयन्तं ज- गदर्णवम्, गगनसरसि विलासमातन्वानमिव राजहंसम्, रौप्यमय- पानपात्रमिव गगनवनितायाः सुधांशुमवलोक्य कुलोत्तुङ्ग अनङ्- गराज्याधिदेवतामिव मूर्तिमयीं तां समवादीत्।

## संभोगवर्णनम्

''प्रिये कोमलाङ्गि ! पश्य –

अष्टाकृतेर्जयति मूर्तिरयं सुधांशुः
काष्ठाः प्रसादमुपयान्ति करैर्हि यस्य ।
वृष्टिं सुधारसमयीं विदधत्प्रजानां
तुष्टिं करोति मदनप्रियजीवितं सः ।।६०।।

चान्द्रास्ते किरणा जयन्ति परितः सान्द्राश्चकोरक्षुधा-
मुद्रामोचनकारिणश्च तमसां विद्रावका निर्मलाः।
ये च द्रागभिघट्टिताः शशिमणीन् सन्द्रावयन्त्युद्भटो-
पेन्द्रापत्य पराक्रमैकनिधयो भद्राणि संतन्वते ।।६१।।

चक्राकारभृतस्त्वमुष्यशशिनोयत्काष्ठसंयोजना-
यैव च्छिद्रमकारि भूरियशसः शम्भोः पुरां भेदने ।

तद्द्वारा स्फुरतीन्द्रनीलसदृशं व्योमैव नान्यन्मुधा
भ्रान्त्यायं जगतीतले शश इति ख्यातः प्रवादश्चिरम् ।।६

यन्माद्यन्ति चकोरकाश्च कुमुदान्याह्लादमातन्वते
दृप्यच्छम्बरवैरिबाणनिकराः पुष्णन्ति यत्तीक्ष्णताम्
यत्स्वच्छाः प्रदिशो दिशश्च नभसा साकं विराजन्त्यमूः
त्वसर्वं जयति प्रसादमहिमा पीयूषभानोरयम् ।।६३।।'

इति ।।

कृततदुचितकार्यो राजचूडामणिः श्री-
परशिवपदपद्मं संस्मरन् चोलनाथः।
अनयदथ निशां तामेष वीराग्रगण्यो
मृदुलशयनमध्ये हममञ्चे महात्मा ।।६४।।

## प्रभातवर्णनम्

अथ च स्थूलतमवर्तुलमुक्ताफलकान्तिविनिर्जितेष्विव मनोभवसङ्गरपरिमृदितमृदुलशयनीयास्तृतमल्लिकाकुसुमेष्विव ग्लानिं भजत्सु नक्षत्रेषु, विलसभवनादुत्प्रेक्ष्य नायकनिर्गमनं चिन्तानिश्वसितकलुषितेषु तरुणीवदनेष्विव दृश्यमानेषु रत्नदीपप्रभाजालेषु, प्रबोधयितुमिव नरपतिं मदकलमालपन्तीषु मणिमयपञ्जरविलासशालिसुप्तोत्थितशुकशारिकासु, सुन्दरतररमणीजनमुखरामणीयकदर्शनतो मन्दं मन्दं लज्जयेव भुवनप्रसृतां संगृह्य रश्मिमालामानन्दयितुमिव दर्शनेन पश्चिमक्षीरोदधिं परित्यज्य गगनमध्यं वरुणदिगङ्गनामुखरोचनातिलकायमाने शशधरबिम्बे, उदयगिरिवरपद्मरागशिलासमुद्यत्प्रभापटल इव पूर्वदिशाधिनाथमत्तवारणमुखचर्चितसिन्दूरसमुदाय इव दिग्वनिताकुचमण्डलविस्तारितकुङ्कुमपत्रसमूह इव प्रसरति गगनतले सन्ध्यारागे,

करैः पटुतरैः तमः पटलपाटने रञ्जयन्
दिशां वदनपङ्कजं गगनमण्डलं द्योतयन् ।
पुरन्दरदिगङ्गनां तिलकयन् विभुर्भास्करः
प्रकाशितजगन्महानुदयमाययौ नन्दयन् ।।६५।।

दिनकरकिरणस्पर्शनजातात्पुण्यादिवारविन्दानि ।
लब्ध्वा विकासमतुलं सुमुखीवदनोपमानि जातानि ।।६६।।

मकरन्दपानलुब्धा भ्रमराः पक्षान् वितत्य हिण्डन्तः ।
गुञ्जन्तः प्रतिकमलं प्रबभुः सौखप्रसुप्तिका इव ते ।।६७।।

सारससरसितव्याजादुद्यन्तं भास्करं द्रुतमवेक्ष्य ।
संस्तुतिमिव विदधाना ददृशे नलिनी विकासिमुखकञ्जा ।।६८।।

रेजुः कुङ्कुमरेणुवद्विकरा नूत्नप्रवालान्तरे
सिन्दूरद्रववद्विकासिषु जपापुष्पेषु, माणिक्यवत्।
फुल्लाशोकवनेषु किंशुकसुमेष्वालक्तकवद्, दाडिमी-
पुष्पे विद्रुमवच्च, कोकनदवत्स्त्रीणां च हस्ताम्बुजे ।।६९।।

चक्राङ्गनास्तोषमवापुरुच्चैर्वियोगजन्यं व्यसनं विहाय ।
फुल्लारविन्दे लुलिताश्च वाता ववुर्मरन्दस्य कणान्वहन्तः ।।७०।।

ततः समुत्थाय शयनीयात् शिवस्मरणपूर्वकमालोक्य मङ्गल्यानि दर्पणादीनि, निर्वर्त्य व्यायामविधिम्, आसाद्य स्नानसदनं विरचितस्नानादिकृत्यः, प्रविश्य पूजागृहं स्वहस्तापचितैः कोमलैर्बिल्वपत्रैः यथाविभवसम्पादितैः षोडशभिरुपचारैश्च सम्पूज्य शिवम्, प्रदाय दानानि भूरीणि, आप्ततमैस्सह कृतभोजनस्स नरनाथः कुलोत्तुङ्गः प्रविश्य धर्माधिकारमण्डपम्, तत्तदाधिकारिकपुरुषैः

पृथङ्नियोजितैः चारैश्च सह देवदत्तेन सचिवरत्नेन निवेदितसकललेकवृत्तान्तः, विचार्य तथा निग्रहानुग्रहौ प्रयुञ्जानः, प्रजासु आ-गोपालमासचिवमपि गृहीताभिप्रायः, क्षणं तत्र स्थित्वा, ततो निर्गत्य विलाससदनमा(सा)द्य,मल्लमागधनर्तकविदुषकादिकलाकौशलमवलोकमानः, इतिहासपुराणकुशलैः काव्यकलानिपुणैः विद्वन्मणिमकुटायमानैः कटकाद्यलंकृतैरात्मसमानैः सवयोभिर्विरचयन् विनोदं सुखमन्वभूत् ॥

## पुत्रजन्मवर्णनम्

एवं सुखेन परिपालयतो धरित्रीं
यातेषु केषुचिदहस्सु शिवार्चकस्य ।
चोलेश्वरस्य वनिता सुषुवे कुमारं
लग्ने शुभेऽह्नि शुभसूचकलक्षणाढ्यम् ॥७१॥

आ सेतोराहिमाद्रेः नरपतितिलकैर्वन्दिताङ्घ्रस्य मूर्ध्ना
तस्य श्रीचोलभर्तुः सुतजननमहानन्दतुष्टान्तरस्य ।
मुच्यन्तां बन्धनस्था इति किल वचनं मोघमासीत्तदेकं
सर्वेषां न्यायमार्गेष्वधिकरसतया बन्धनस्याप्रसक्तेः ॥७२

संप्राप्तवत्सु निखिलेष्वधिकं सुवर्णं
चोलेश्वराद् द्विजगणेषु तदातितुष्टात्।
एको द्विजो न च सुवर्णमवाप गुञ्जन्
फुल्लारविन्दनिकरे गृहपद्मिनीषु ॥७३॥

अभ्यस्यमाना इव तत्र दिव्यास्तदीयगम्भीरनिनादमारात् ।
आनाहता दुन्दुभयो विनेदुः पुत्रोत्सवे चोलनृपस्य तस्य॥७४॥

अस्मान् जेष्यति दानतः शिशुरयं मत्वेति भीता इव
स्वर्गे नन्दनवासिनस्तरुवरा वृष्टिं वितेनुस्सुमैः ।
येषां पूरयता दिशः सुरभिणा गन्धेन ते मेनिरे
स्वर्गोऽयं न तु भूः सुरा वयममी मर्त्या न चेत्थं जनाः ।।७५।।

भूष्णोः सत्त्ववदग्रणेः सरजसा गन्तुं न शक्यं मया
सान्निध्ये त्विति मन्यमान इव सन्त्यज्यैव पृथ्वीराजः ।
पुष्पाणां मकरन्दशीकरवहः चेतः समाह्लादयन्
चोलेन्द्रस्य सुतोत्सवे कुतुकवान्मन्दं ववौ मारुतः ।।७६।।

एवमादीनि महापुरुष(क)तासूचकानि शुभनिमित्तानि संवीक्ष्य पुत्रजननसम्पत्त्या सञ्जातमानन्दं द्विगुणयन् स चोलनाथः निर्वर्तितजातकर्मादिककृत्यः, ततो व्यतीतेषु दशदिनेषु, संप्राप्ते चैकादशे दिवसे, प्रवर्तिष्यमाणनामकरणमहोत्सवमवलोकयितुमिव समुदिते भगवति भास्वति, विरचतशिवपूजनादिनित्यक्रियः, मूर्तिमद्भिरिव वेदैश्चतुर्भिर्ब्राह्मणैरलङ्कृतपार्श्वभागेन श्रौतकर्माणि निष्णातेन विदितनिखिलस्मार्तविधिना आदर्शतलदृश्यमानबिम्बवदवगतसकललोकमयदिन निर्मर्यादबुद्धिवैभवेन नरपतिदिदृक्षया भुवमवतीर्णेनेव वेदपुरुषेण यज्ञदत्ताभिधां वहता ब्राह्मणोत्तमेन पैरोधसा सममवरोधगृहं प्रविश्य, तदुक्तेन विधानेन तमात्मजन्मानं देवचोलनामानमकरोत्।

# नृसिंहचम्पू

## द्वितीय उच्छ्वासः

आसीद् दैत्यकुले हिरण्यकशिपुः प्रौढप्रतापोद्धुर-
स्तस्याभूद् भगवत्प्रियो गुणनिधिः प्रह्लादनामात्मजः।
दैत्येशस्तमपाठयत् स्वनिगमं नाङ्गीचकाराथ तम्
विष्णोर्नाम विनेतरन्न किमपि प्रायः प्रतिज्ञातवान्।।१।।

तच्छ्रुत्वा कुपितः पितातिपरुषैर्वाक्यै सुतं त्रासयन्
स्नेहार्द्रैरपि तत्प्रलोभनपरैर्भूयः समाश्वासयन्।
तं दृष्ट्वा दृढनिश्चयं पुररसौ निर्विण्णचेताः परं
भृत्यानात्मजयातनार्थममरारातिर्दिदेशाचिरम् ।।२।।

अहो ! सचिवाः ! साम्प्रतं विपक्षपक्षमाश्रितः पुत्राधमोऽयमुदारोत्पन्नो व्याधिरिव तरुसङ्घट्टसमुत्पन्नो दावाग्निरिवास्मन्नाशहेतुः कुलधूमकेतुरिवोदित आस्ते। तस्मादयमग्नौ दाह्यः, सलिले क्लेदनीयः, शस्त्रैर्घातिनीयः, शैलतटात् पातनीयस्तथा यथा दुःशीलतामसून् वा जह्यात्। ततो भर्तुर्यथादेशं यातनाविषयं नीतस्य शिशोर्दाहनादिषु नृहरिस्वरूपमभिध्यायतोरोमापि न वक्रमासीत्।

कीलालं स्थलतां स्थलं च जलतां वैश्वानरः शीततां
पीयूषत्वमगाद् विषं च विषमं बालस्य तस्यापदि ।
नित्यं संस्मरतां सतां हृदि कृपाकूपारमीशं हरिं
विश्वव्यापिनमूर्जितं च कुशलं कस्मादसम्भावितम् ।।३।।

अहोमूर्खा मर्त्याः शृणुत हृदयस्थे नरहरौ
तदुद्भूतैर्भूतैर्मम किमपकारः प्रभवति।
हरेश्छत्रीभूते शिरसि भुजगानामधिपतौ
भुजङ्गैरुत्तुङ्गैर्मम किमु भयं संभवति वा ।।४।।

मन्मातुरिन्दिरायाः किमु न ज्ञातं सहोदरं गरलम्
मातुलतामुपयातात् तस्मादस्मासु किं भयं भवति ।।५।।

ततोऽमात्यवर्गैर्दैत्यराजमागत्य स्व समुचितं समूचे :— ''स्वामिन् ! महदिदमाश्चर्यमस्माभिरनुभूतं यदर्भकोऽयं ज्वलनज्वालाभिरदाह्यः, कीलालैरक्लेद्यः, शस्त्रैरच्छेद्यः, गरलैरविकलाङ्गः। तस्मादधुना यातनाभिरलं; सामप्रकारेण यत्नोऽस्तु इति। ततः सुरारातिरपि प्रह्लादस्य सवयसः दैत्यपुत्रानाहूय तानित्यादिदेशः ''रे सुशीलाः शिशवः ! अस्मादर्भकस्य दुरात्मनः मनोगतमवधार्य तं च स्वशीलमुपदिशन्तु।

ततस्तदोमिति दैत्यपुत्राःप्रह्लादमुपदेष्टुमुपक्रमं चक्रुः। अहो सर्वे सवयसः ! श्रूयतामिदमपूर्वं यत्पूर्वजानुष्ठित मध्वानमपहाय सर्वज्ञस्य पितुरवज्ञामयशश्चाविगणय्य विविध दुरन्तयातनोद्भवं दुःखमनुभूय सारासार विचाराविधुरत्वेन यत्किंचित्कुर्वता प्रह्लादेन किमधिकमसाधि। तस्मादस्माभिः सर्वैः सहेतुकेर्वचनैरुपदेष्टव्यो यथा दुष्टाशयं परिहाय स्वमार्गमाश्रयेदित्येवं सम्प्रधार्य प्रह्लादमवोचुः ।

पितुर्वृत्तं धत्ते तदनु जनकानन्दजनकः
शुशीलोऽप्यादत्ते सपदि पितुराज्ञां स्वशिरसि।
सखे ! पुत्रः श्लाघ्यः समजनि गुणालंकरणतां
न सन्त्येवं पुत्राः किमु पशुतिरश्चामितरथा ।।

प्रह्लादः :—

तातास्तावदमी समीरणचलस्नेहाः सुतानां मुदे

यावन्नेहपिता पितामहपिता संप्राप्यते भाग्यतः ।
तावद् दीपशिखाप्रकाशवशगं विश्वं क्षणं मोदते
यवल्लोचनगोचरो न भवति प्रातर्निधिस्तेजसाम् ।।

अगस्त्योऽभूत् कुम्भात् कथयत किमम्भो वहति वा
न किं लेके श्लाघ्यः तदनु कलशोऽनेन मुनिना ।
अभूद् रम्भागर्भादतिसुरभिकर्पूरपटलं
तदादत्ते पर्णान्यथ च किमु रम्भां स्थगयति ।।

अपि च–

जीवास्तावत् स्वकर्मनिर्मितानेकविचित्रयोनिषु चिरं भ्रमन्तः प्रतिजन्म परस्परं पितापुत्रतां प्रपद्यन्ते एव। तत्र तत्र तज्जाति-वर्णाश्रम धर्माभिमानेन यावज्जीवं वर्तमानाः शनैर्देह भोगं समाप्य विधिवशादस्माद् विपद्यन्ते। तथा च कैः केषामुद्धृतिरिति निश्चयेऽपि तन्माया प्रस्ताः पुनर्मोहमेवानुसरन्ति।

अपरे तु –

यं सखे स्मरसि सोऽस्ति को हरिः किं प्रयोजनमनेन हन्त ते।
राज्यभोगमपहाय शाश्वतं यातना कथमथानुभूयते ।।

अपि च :–

दुर्बलं नरशरीरमीदृशं तत्पुनर्गुरुगदाधिवर्जितम् ।
वैभवं जगति विस्तृतं सखे मृग्यतेऽथ किमतः परं त्वया ।।

प्रह्लादः–

आत्मानं स्वशरीरमेव मनुते मुक्तिं सुषुप्तिं पराम्
आनन्दं विषयोपभोगभजनं विज्ञानहीनो जनः ।
देहं मूत्रपुरीषपूरितमसौ नो वेत्ति निद्रां पुनः
चित्ताभ्रान्तिमयं विरामसमये शोकप्रदान् गोचरान् ।।

अहो अहो महदज्ञानं जनानां यत् पुत्रकलत्रमित्रद्रविण-विद्यावयोभिर्वयमतिरूढाः इत्यहंकाराधिरूढाः केचिन्मूढाः स्वप्रौढिं

नाप्यन्तः शक्रमपि न गणयन्ति। केचिदाचार चारुचरितैर्वयमध्वरकर्ममर्मकुशलाः इति दम्भसंभारसंभृता पितामहमपि हेलयन्ति। केऽपि कृतान्त कलितकवलायितकलेवरा अपि वयं प्रौढप्रतापचक्रवर्तिन इति स्वभुजगर्वं भाषमाणां दानवाः स्वहितमजानन्तःरमारमणचरणपरिचरणपराङ्मुखाः संसरणमरणमालाकुलाः सीदन्ति। तत्र यूयं पुनर्बालिशाः सततमन्धपरम्परापरिणतिग्रस्ता एव।

ततो दैत्येशः प्रह्लादवाक्यैरप्रतिभान् दनुजानुजान् विज्ञाय स्वसुतं समक्षमाहूय किंचिदादिष्टवान्।

मदीयवशवर्तिनस्त्रिदशयक्षरक्षोगणाः
तथा भुजगभूभुजः सकलमानवा दानवाः ।
अभीप्सितफलप्रदोमदनुवर्तिनां वा नृणाम्
अहं हि जगदीश्वरः किमु न मां भजस्यात्मज ।।

प्रह्लादः—

षडूर्मिपरिदूषितः क्षणिकचित्तवृत्तिः पुमा-
नहंकृतपरोऽसुरः परमकोपनो दाम्भिकः ।
जनेषु ननु निष्कृपः कृपणभाषणो यः स्वयं
कथं नु जगदीश्वरं कथयितुं स नो लज्जसे ।।

चिच्चैतन्यं ब्रह्म चात्मा परात्मेत्येवं नामान्यात्मनोऽहं विजाने ।
तस्मादन्यः कोऽयमास्ते हरिस्ते साकारश्चेन्नश्वरोऽनीश्वराख्यः।।

अपि च— आत्मा तावदसङ्गोदासीनोऽनाकृतिः शुद्ध आकाशकल्पः, तदन्यो हरिश्चेत् त्वत्पक्षपाती तर्हि शरीरित्वात्परिच्छिन्नः सर्वैकदेशित्वादव्यापकश्च। तथैव स्मर्तव्य इति चेत्किमस्माभिरपराद्धं यदस्मान्न भजसि।

प्रह्लादः—

सान्द्रानन्दं यदन्तः स्फुरति यदुदये दृश्यधीरस्तमेति
स्वप्नो यद्वत्प्रबोधविलसति च यदज्ञानतो विश्वमेतत्।

रज्ज्वज्ञानादिवाहिर्यदपि सवितृवत् साक्षितां यातमेव
ज्योतिर्नारायणाख्यं तदनु भगवतो नित्यमन्तः स्मरामि ।।

अपि च

यः स्वसंकल्पमणिनिर्मितानेकप्रचण्डब्रह्माण्डानेककटाहकोटिषु चिदेकरसत्वेनावस्थितोऽपि परमात्माऽम्बुदावर्तलहरितरङ्गैर्णव इव, कटककेयूरकुण्डलादिभिः सुवर्णमिवपन्नगनग सुरासुरादिभिरुच्चावचादियोनिभिः पृथगिवाभासते, स एव प्रकृतिमवष्टभ्य लीलया भक्तजनानुग्रह गृहीतविग्रहो वैकुण्ठ कण्ठीरव. सर्वोत्कर्षेण वर्तते। यथ मण्डलीकृतमार्तण्ड एष एकदेशेऽवस्थितोऽपि विश्वं प्रकाशयति तथा यत्र योनावलोकितस्तेन तत्रैव दृश्यते तथा हरिरपि। अथ वस्तु महिमाऽप्यलौकिक एव। यथा मूर्तयोरेव स्पर्शान्यपाषाणयोर्महिमतारतम्यं प्रत्यक्षसिद्धमेव।

दैत्यः :–

सुतारामे ग्रामे गिरिशिरसि घोषे तरुवरे
पुरेऽरण्ये गण्ये वसति ननु यस्मिन्निलयने ।
श्मशाने वा चैत्ये दृषदि च तडागे वसति वा
हरिस्ते कुत्रास्ते वद सपदि तस्याधिवसतिम् ।।

प्रह्लादः–

पृथ्व्यां पाथसि पावके च पवने दिक्ष्वन्तरिक्षे पुनर्
मार्तण्डे शशिमण्डलेऽस्ति सुतले यश्चेतनेऽचेतने ।
अस्त्यन्तर्बहि रस्त्यनन्तविभवो भावेष्वभावेऽपिवा
सर्वत्रास्ति सदास्ति किं बहुगिरा त्वय्यस्ति मय्यस्ति च ।।

यदि देहिनोऽपि विष्णोः सर्वगतत्वंमृषाब्रूषे ।
तदसावति जडबुद्धे सदसः स्तंभे न दृश्यते कस्मात् ।।

अस्त्येव वस्तुजाते नास्त्यस्मिन् संशयोऽणुमात्रोऽपि ।
यो यत्र स्मरति हरिं स तत्र पश्चत्यवश्यममुम् ।।

ततः सुररिपुरपि स्फुरितगुरुतरकरालकर कलितकरालकरवालः कोपकृशानुकलुषितनयनः शयननिलीनभोगः पदाहतिक्षोभितः भुजङ्ग इव कल्पान्तकालकलितकलेवरोऽपरः कृतान्त इव श्रवण-कटुपटुतरबहुवचनरचनासंभूत संरम्भारम्भः स्तम्भं बिभेद।

## मित्रभेदम्-कथा २१

अस्ति कस्मिंश्चिदधिष्ठाने जीर्णधनो नाम वणिक्पुत्रः। स च विभवक्षयादेशान्तरगमनमना व्यचिन्तयत्–

यत्र देशेऽथवा स्थाने भोगान्भुक्त्वा स्ववीर्यतः ।
तस्मिन्विभवहीनो यो वसेत्स पुरुषाधमः ।।४१४।।

तथा च। यनाहंकारयुक्तेन चिरं विलसितं पुरा
दीनं वदति तत्रैव यः परेषां स निन्दितः ।।४१५।।

तस्य गृहे लोहभारघटिता पूर्वपुरुषोपार्जिता तुलासीत्। तां च कस्यचिच्छ्रेष्टिनो गृहे निक्षेपभूतां कृत्वा देशान्तरं प्रस्थितः। ततः सुचिरं कालं देशान्तरं भ्रान्त्वा पुनः स्वपुरमागत्य तं श्रेष्ठिनमुवाच-भोः श्रेष्टिन् दीयतां मे सा निक्षेपतुला। स आह–भोः नास्ति सा त्वदीया तुला। मूषिकैर्भक्षिता। जीर्णधन आह-भोः श्रेष्ठिन् नास्ति दोषस्ते यदि मूषिकैर्भक्षितेति। ईदृगेवायं संसारः। न किंचिदत्र शाश्वतमस्ति। परमहं नद्यां स्नानार्थं गमिष्यामि। तत्त्वमात्मीयं शिशुमेतं [धनदेवनामानं] मया सह स्नानोपकरणहस्तं प्रेषय इति। सोऽपि चौर्यभयात्तस्य शाङ्कितः स्वपुत्रमुवाच–वत्स पितृव्योऽयं तव स्नानार्थं नद्यां यास्यति। तद्गम्यतामनेन सार्धं स्नानोपकरणमादाय इति। अहो साध्विदमुच्यते –

न भक्त्या कस्यचित्कोऽपि प्रियं प्रकुरुते नरः ।
मुक्त्वा भयं प्रलोभं वा कार्यकारणमेव वा ।।४१६।।

तथा च। अत्यादरोभवेद्यत्र कार्यकारणवर्जितः।
तत्र शङ्का प्रकर्तव्या परिणामे सुखावहा ॥४१७॥

अथासौ वणिक्शिशुः स्नानोपकरणमादाय प्रहृष्टमनास्तेनाभ्यागतेन सह प्रस्थितः। तथानुष्ठिते वणिक्स्नात्वा तं शिशुं नदीगुहायं प्रक्षिप्य तद्द्वारं बृहच्छिलयाच्छाद्य सत्वरं गृहमागतः। पृष्टश्च तेन वणिजा –भो अभ्यागत कथ्यतां कुत्र मे शिशुर्यस्त्वया सह नदीं गत इति। स आह नदीतटात्स श्येनेन हृत इति। श्रेष्ठ्याह मिथ्यावादिन् किं क्वचिच्छ्येनो बालं हर्तुं शक्नोति। तत्समर्पय मे सुतम्। अन्यथा राजकुले निवेदयिष्यामि इति। स आह–भोः सत्यवादिन् यथा श्येनो बालं न नयति तथा मूषिका अपि लोहभारघटितां तुलां न भक्षयन्ति। तदर्पय मे तुलां यदि दारकेण प्रयोजनम्। एवं तौ विवदमानौ द्वावपि राजकुलं गतौ। तत्र श्रेष्ठीं तारस्वरेण प्रोवाच –भोः अब्रह्मण्यमब्रह्मण्यम्। मम शिशुरनेन चौरेणापहृतः। अथ धर्माधिकारिणस्तमूचुः–भोः समर्प्यतां श्रेष्ठिसुतः। स आह किं करोमि। पश्यतो में नदीतटाच्छ्येनेनापहृतः शिशुः। तच्छ्रुत्वा ते प्रोचुः–भोः न सत्यमभिहितं भवता। किं श्येनः शिशुं हर्तुं समर्थो भवति। स आह–भो भोः श्रूयतां मद्वचः।

तुलां लोहसहस्रस्य यत्र खादन्ति मूषिकाः।
राजस्तत्र हरेच्छ्येनो बालकं नात्र संशयः ॥४१८॥

ते प्रोचुः–कथमेतत्। ततः श्रेष्ठी सभ्यानामग्रे आदितः सर्वं वृत्तान्तं निवेदयामास। ततस्तैर्विहस्य द्वावपि तौ परस्परं संबोध्य तुलाशिशु-प्रदानेन संतोषितौ। अतोऽहं ब्रवीमि–तुलां लेहसहस्रस्येति। तन्मूर्ख संजीवकप्रसादमसहमानेन त्वयैतत्कृतम्। अहो साध्विदमुच्यते –

प्रायेणात्र कुलान्वितं कुकुलजाः श्रीवल्लभं दुर्भगा
दातारं कृपणा ऋजूननृजवो वित्ते स्थितं निर्धनाः।
वैरूप्योपहृताश्च कान्तवपुषं धर्माश्रयं पापिनो
नानाशास्त्रविचक्षणं च पुरुषं निन्दन्ति मूर्खाः सदा ॥४१९॥

तथा च। मुर्खाणां पण्डिता द्वेष्या निर्धनानां महाधनाः ।
व्रतिनः पापशीलानामसतीनां कुलस्त्रियः ।।४२०।।

तन्मूर्खं त्वया हितमप्यहितं कृतम्। उक्तं च –

पण्डितोऽपि वरं शत्रुर्न मूर्खो हितकारकः ।
वानरेण हतो राजा विप्राश्चौरेण रक्षिताः ।।४२१।।

दमनक आह- कथमेतत् सोऽब्रवीत्-

## कथा २२

कस्यचिद्राज्ञो नित्यं वानरोऽतिभक्तिपरोऽङ्गसेवकोऽन्तः पुरेऽप्यप्रतिषिद्धप्रसरोऽतिविश्वासस्थानमभूत्। एकदा राज्ञो निद्रां गतस्य वानरे व्यजनं नीत्वा वायुं विदधति राज्ञो वक्षःस्थलोपरि मक्षिकोपविष्टा। व्यजनेन मुहुर्मुहुर्निषिध्यमानापि पुनः पुनस्तत्रैवोपविशति। ततस्तेन स्वभावचपलेन मूर्खेण वानरेण क्रुद्धेन सता तीक्ष्णं खड्गमादाय तस्या उपरि प्रहारो विहितः। ततो मक्षिकोड्डीय गता परं तेन शितधारेणासिना राज्ञो वक्षो द्विधा जातं राजा मृतश्च। तस्माच्चिरायुरिच्छता नृपेण मूर्खोऽनुचरो न रक्षणीयः। अपरमेकस्मिन्नगरे कोऽपि विप्रो महाविद्वान्परं पूर्वजन्मयोगेन चौरो वर्तते। स तस्मिन्पुरेऽन्यदेशादागतांश्चतुरो विप्रान्बहूनि वस्तूनि विक्रीणतो दृष्ट्वा चिन्तितवान् अहो केनोपायेनैषां धनं लभे। इति विचिन्त्य तेषां पुरोऽनेकानि शास्त्रोक्तानि सुभाषितानि चातिप्रियाणि मधुराणि वचनानि जल्पता तेषां मनसि विश्वासमुत्पाद्य सेवा कर्तुमारब्धा। अथवा साध्विदमुच्यते–

असती भवति सलज्जा क्षारं नीरं च शीतलं भवति।
दम्भी भवति विवेकी प्रियवक्ता भवति धूर्तजनः ।।४२२।।

अथ तस्मिन्सेवां कुर्वति तैर्विप्रैः सर्ववस्तूनि विक्रीय बहुमूल्यानि रत्नानि क्रीतानि। ततस्तानि जङ्घामध्ये तत्समक्षं प्रक्षिप्य स्वदेशं प्रति गन्तुमुद्यमो विहितः। ततः स धूर्तविप्रस्तान्विप्रान्गन्तुमुद्यतान्प्रेक्ष्य

चिन्ताव्याकुलितमनाः संजातः। अहो धनमेतन्न किंचिन्मम चटितम्। अथैभिः सह यामि। पथि क्वापि विषं दत्त्वैतान्निहत्य सर्वरत्नानि गृह्णामि। इति विचिन्त्य तेषामग्रे सकरुणं विलप्येदमाह—भो मित्राणि यूयं मामेकाकिनं मुक्त्वा गन्तुमुद्यताः। तन्मे मनो भवद्भिः सह स्नेहपाशेन बद्धं भवद्विरहनान्नैवाकुलं संजातं यथा धृतिं क्वापि न धत्ते। यूयमनुग्रहं विधाय सहायभूतं मामपि सहैव नयत। तद्वचः श्रुत्वा ते करुणार्द्रचित्तास्तेन सममेव स्वदेशं प्रति प्रस्थिताः। अथाध्वनि तेषां पञ्चानामपि पल्लीपुरमध्ये व्रजतां ध्वांक्षाः कथयितुमारब्धाः—रे रे किराताः धावत धावत। सपादलक्षधनिनो यान्ति। एतान्निहत्य धनं नयत। ततः किरातैर्ध्वाङ्क्षवचनमाकर्ण्य सत्वरं गत्वा ते विप्रा लगुडप्रहारैर्जर्जरीकृत्य वस्त्राणि मोचयित्वा विलोकिताः। परं धनं किंचिन्न लब्धम्। तदा तैः किरातैरभिहितम्—भोः पान्थाः पुरा कदापि ध्वाङ्क्षवचनमनृतं नासीत्। ततो भवतां संनिधौ क्वापि धनं विद्यते। तदर्पयत। अन्यथा सर्वेषामपि वधं विधाय चर्म विदार्य प्रत्यङ्गं प्रेक्ष्य धनं नेष्यामः। तदा तेषामीदृशं वचनामाकर्ण्य चौरविप्रेण मनसि चिन्तितम्—यदैषां विप्राणां वधं विधायाङ्गं विलोक्य रत्नानि नेष्यन्ति तदापि मां वधिष्यन्ति। ततोऽहं पूर्वमेवात्मानमरत्नं समर्प्यैतान्मुञ्चामि। उक्तं च—

मृत्योर्बिभेषि किं बाल न स भीतं विमुञ्चति।
अद्य वाब्दशतान्ते वा मृत्युर्वै प्राणिनां ध्रुवः ॥४२३॥

तथा च। गवार्थे ब्राह्मणार्थे च प्राणत्यागं करोति यः।
सूर्यस्य मण्डलं भित्त्वा स याति परमां गतिम् ॥४२४॥

इति निश्चित्याभिहितम्—भोः किराताः यद्येवं ततो मां पूर्वं निहत्य विलोकयत। ततस्तैस्तथानुष्ठिते तं धनरहितमवलोक्यापरे चत्वारोऽपि मुक्ताः। अतोऽहं ब्रवीमि—पण्डितोऽपि वरं शत्रु इति। अथैवं संवदतोस्तयोः संजीवकः क्षणमेकं पिङ्गलकेन सह युद्धं कृत्वा तस्य स्व-



रनखरप्रहाराभिहतो गतासुर्वसुंधरापीठे निपपात। अथ तं गतासुमवलेक्य पिङ्गलकस्तद्गुणस्मरणार्द्रहृदयः प्रोवाच–भो अयुक्तं मया पापेन कृतं संजीवकं व्यापादया। यतो विश्वासाघातादन्यकास्ते पापतरं कर्म।

उक्तं च–

मित्रद्रोही कृतघ्नश्च यश्च विश्वासघातकः ।
ते नरा नरकं यान्ति यावच्चन्द्रदिवाकरौ ।।४२५।।

भूमिक्षये राजविनाश एव भृत्यस्य वा बुद्धिमतो विनाशे ।
नो युक्तमुक्तं अनयोः समत्वं नष्टापि भूमिः सुलभा न भृत्या ।।४२६।।

तथा मया सभामध्ये स सदैव प्रशंसितः। तत्किं कथयिष्यामि तेषामग्रतः।

उक्तं च। उक्तो भवति यः पूर्व गुणवानिति संसदि ।
न तस्य दोषो वक्तव्यः प्रतिज्ञाभङ्गभीरुण।।४२७।।

एवं विधं प्रलपन्तं दमनकः समेत्य सहर्षमिदमाह–देव कतरतमस्तवैष न्यायो यद्द्रोहकारिणं शष्पभुजं हत्वेत्थं शोचसि। तथैतदुपपन्नं भूभुजाम्।

उक्तं च। पिता वा यदि वा भ्राता पुत्रो भार्याद्यत्र सुहृत्।
प्राणद्रोहं यदा गच्छेद्धन्तव्यो नास्ति पातकम् ।।४२८।।

तथा च।

राजा घृणी ब्राह्मणः सर्वभक्षी स्त्री चावशा दुष्टमतिः सहायः।
प्रेष्यः प्रतीपोऽधिकृतः प्रमादी त्याज्या अमी यश्च कृतं न वेत्ति ।।४२९।।

अपि च। सत्यानृता च परुषा प्रियवादिनी च
हिंस्रा दयालुरपि चार्थपरा वदान्या।
भूरिव्यया प्रचुरवित्तसमागमा च
वेश्याङ्गनेव नृपनीतिरनेकरूपा ।।४३०।।

एवं संबोधितः पिङ्गलकः संजीवकशोकं त्यक्त्वा दमनकसाचिव्येन राज्यमकरोत्।

## मित्रप्राप्तिकम्—कथा १

अस्ति दाक्षिणात्ये जनपदे महिलारोप्यं नाम नगरम्। तस्य नातिदूरे मठायतनं भगवतः श्रीमहादेवस्य। तत्र च ताम्रचूडो नाम परिव्राजकः प्रतिवसति। स च नगरे भिक्षाटनं कृत्वा प्राणयात्रां समाचरति। भिक्षाशेषं च तत्रैव भिक्षापात्रे निधाय तद्भिक्षापात्रं नागदन्तेऽवलम्ब्य पश्चाद्रात्रौ स्वपिति। प्रत्यूषे च तदन्नं कर्मकराणां दत्त्वा सम्यक्तत्रैव देवतायतने संमार्जनोपलेपनमण्डनादिकं समाज्ञापयति। अन्यस्मिन्नहनि मम बान्धवैर्निवेदितम् —स्वामिन् मठायतने सिद्धमन्नं मूषकभयात्तत्रैव भिक्षापात्रे निहितं नागदन्तेऽवलम्बितं तिष्ठति सदैव। तद्वयं भक्षयितुं न शक्नुमः। स्वामिनः पुनरगम्यं किमपि नास्ति। तत्किं वृथाटनेनान्यत्र। अद्य तत्र गत्वा यदेच्छं भुञ्जामहे तव प्रसादात्। तदाकर्ण्याहं सकलयूथपरिवृतस्तत्क्षणादेव तत्र गतः। उत्पत्य च तस्मिन्भिक्षापात्रे समारूढः। तत्र भक्ष्यविशेषाणि सेवकानां दत्त्वा पश्चात्स्वयमेव भक्षयामि। सर्वेषां तृप्तौ जातायां भूयः स्वगृहं गच्छामि। एवं नित्यमेव तदन्नं भक्षयामि। परिव्राजकोऽपि यथाशक्ति रक्षति। परं यदैव निद्रान्तरितो भवति तदाहं तत्रारुह्यात्मकृत्यं करोमि। अथ कदाचित्तेन मम रक्षणार्थं महान्यत्नः कृतः। जर्जरवंशः समानीतः। तेन सुप्तोऽपि मम भयाद्भिक्षापात्रं ताडयति। अहमप्यभक्षितेऽप्यन्ने प्रहारभयादपसर्पामि। एवं तेन सह सकलां रात्रिं विग्रहपरस्य कालो व्रजति। अथान्यस्मिन्नहनि तस्य मठे बृहत्स्फिङ्नामा परिव्राजकस्तस्य सुहृत्तीर्थयात्राप्रसङ्गेन पान्थः पावुणिकः समायातः। तं दृष्ट्वा प्रत्युत्थानविधिना सम्भाव्य प्रतिपत्तिपूर्वकमभ्यागतक्रियया नियोजितः। ततश्च रात्रावेकत्र कशसंस्तरे द्वावपि प्रसुप्तौ धर्मकथां कथयितुमारब्धौ। अथ बृहत्स्फि-

क्कथागोष्ठीषु स ताम्रचूडो मूषकत्रासार्य व्याक्षिप्तमना जर्जरवंशेन भिक्षापात्रं ताडयंस्तस्य शून्यं प्रतिवचनं प्रयच्छति। तन्मयो न किंचिदुदाहरति। अथासावभ्यागतः परं कोपमुपागतस्तमुवाच—भोस्ताम्रचूड परिज्ञातस्त्वं सम्यङ् न सुहृत्। तेन मया सह साह्लादं न जल्पसि। तद्रात्रावपि त्वदीयं मठं त्यक्त्वान्यत्र मठे दास्यामि। उक्तं च—

एह्यागच्छ समाश्रयासनमिदं कस्माच्चिरादृश्यसे
का वार्ता अतिदुर्बलोऽसि कुशलं प्रीतोऽस्मि ते दर्शनात्।
एवं ये समुपागतान्प्रणयिनः प्रह्लादयन्त्यादरा-
तेषां युक्तमशङ्कितेन मनसा हर्म्याणि गन्तुं सदा ।६५।।

गृही यत्रागतं दृष्ट्वा दिशो वीक्षेत वाप्यधः।
तत्र ये सदने यान्ति ते शृवङ्गरहिता तृषाः ।।६६।।

नाभ्युत्थानक्रिया यत्र ननय मधुराक्षराः ।
गुणदोषपकथा नैव तत्र हर्म्ये न गम्यते ।।६७।।

तदेकमठप्राप्त्यापि त्वं गर्वितः। त्यक्तः सुहृत्स्नेहः। नैतद्वेत्सि यस्त्वया मठाश्रयव्याजेन नरकोपार्जनं कृतम्। उक्तं च-

नरकाय मतिस्ते चेत्पौरोहित्यं समाचर ।
वर्षं यावत्किमन्येन मठचिन्तां दिनत्रयम् ।।६८।।

तन्मूर्खं शोचितव्यस्त्वं गर्वं गतः। तदहं त्वदीयं मठं परित्यज्य यास्यामि। अथ तच्छ्रुत्वा भयत्रस्तमनास्ताम्रचूडस्तमुवाच—भो भगवन् मैवं वद। न त्वत्समोऽन्यो मम सुहृत्कश्चिदस्ति। परं तच्छ्रूयता गोष्ठीशैथिल्यकारणम्। एष दुरात्मा मूषकः प्रोन्नतस्थाने घृतमपि भिक्षापात्रमुष्टुत्यारोहति भिक्षाशेषं च तत्रस्थं भक्षयति। तदभावादेव मठे मार्जनक्रियापि न भवति। तन्मूषकत्रासार्थमेतेन वंशेन भिक्षापात्रं मुहुर्मुहुस्ताडयमि। नान्यत्कारणमिति। अपरमेतत्कुतूहलं पश्यास्य दुरात्मनो यन्मार्जरमर्कटादयोऽपि तिरस्कृता अस्योत्पतनेन

बृहत्स्फिगाह-अथ ज्ञायते तस्य बिलं कस्मिंस्तत्प्रदेशे । ताम्रचूड आह-भगवन् न वेद्मि सम्यक् । स आह-नूनं निधानस्योपरि तस्य बिलम् । निधानो-ष्मणा प्रकूर्दते । उक्तं च–

ऊष्मापि वित्तजो वृद्धिं तेजो नयति देहिनाम् ।
किं पुनस्तस्य संभोगस्त्यागकर्मसमन्वितः ।।६९।।

## काकोलूकीयम्

कस्मिंश्चिद् ग्रामे मित्रशर्मा नाम ब्राह्मणः कृताग्निहोत्र-परिग्रहः प्रतिवसति सम। तेन कदाचिन्माघमासे सौम्यानिले प्रवाति मेघाच्छादिते गगने, मन्दं मन्दं वर्षति पर्जन्ये पशु प्रार्थनाय किञ्चि-दुग्रामान्तरं गत्वा कश्चिद्यजमानो याचितः–"भो ! यजमान ! आगा-मिन्याममावास्यायामहं यक्ष्यामि यज्ञम्, तद्देहि मे पशुमे- कम्" अथ तेन तस्य शास्त्रोक्तः पीवतनुः पशुः प्रदत्तः। सोऽपि तं समर्थमि-तश्चेतश्च गच्छन्तं विज्ञाय स्कन्धे कृत्वा सत्वरं स्वपुराभिमुखः प्रतस्थे। अथ तस्य गच्छतो मार्गे त्रयो धूर्ताः क्षुत्क्षामकण्ठाः संमुखा बभूवुः। तैश्च तादृशं पीवरतनुं पशुं स्कन्धारूढमवलोक्य मिथोऽ-भिहितम्–अहो अस्य पशोर्भक्षणादद्यतनीयो हिमपातो व्यर्थतां नीयते। तदेनं वञ्चयित्वा पशुमादाय शीतात्राणं कुर्मः। अथ तेषा-मेकतमो वेषपरिवर्तनं विधाय संमुखो मृत्वापमार्गेण समाहिता-ग्निमूचे–भो भो बालाग्निहोत्रिन् किमेवं जनविरुद्धं हास्यकार्यमनु-ष्ठीयते यदेष सारमेयोऽपवित्रः स्कन्धाधिरूढो नीयते। उक्तं च यतः–

श्वानकुक्कुटचाण्डालाः समस्पर्शाः प्रकीर्तिताः ।
रासभोष्ट्रौ विशेषेण तस्मात्तत्रैव संस्पृशेत् ।।११६।।

ततश्च तेन कोपाभिभूतेनाभिहितम्–अहो किमन्धो भवान्। यत्पशुं सारमेयं प्रतिपादयसि। सोऽब्रवीत्–ब्रह्मन् कोपस्त्वया न कार्यो। यथेच्छं गम्यतामिति। अथ यावत्किंचिदध्वान्तरं गच्छति तावद्द्वितीयो धूर्तः संमुखमभ्युपेत्य तमुवाच–भो ब्रह्मन् कष्टं

कष्टम्। यद्यपि वल्लभोऽयं ते मृतवत्सस्तथापि स्कन्धमारोपयितुमयुक्तम्। उक्तं च यतः –

तिर्यञ्चं मानुषं वापि यो मृतं संस्पृशत्कुधीः ।
पञ्चगव्येन शुद्धिः स्यात्तस्य चान्द्रायणेन वा ।।११७।।

अथासौ सकोपमाह–भोः किमन्धो भवान् यत्पशुं मृतवत्सं वदसि। सोऽब्रवित्–भगवन् मा कोपं कुरु। अज्ञानान्मयाभिहितम्। तत्त्वमात्मरुचिं समाचर इति। अथ यावत्स्तोकं वनान्तरं गच्छति तावत्तृतीयोऽन्यवेषधारी धूर्तः संमुखः समुपेत्य तमुवाच–भोः अयुक्तमेतत् यत्त्वं रासभं स्कन्धाधिरूढं नयसि। तत्त्यज्यतामेषः। उक्तं च–

यःस्पृशेद्रासभंमर्त्योज्ञानादज्ञानतोऽपिवा।
सचैकं स्नानमुद्दिष्टं तस्य पापप्रशान्तये ।।११८।।

तत्त्यजैनं यावदन्यः कश्चिन्न पश्यति। अथासौ तं पशुं रासभं मन्यमानो भयाद्भूमौ प्रक्षिप्य स्वगृहमुद्दिश्य प्रपलायितः। ततस्ते त्रयोपि मिलित्वा तं पशुमादाय यथेच्छं भक्षितुमारब्धाः।

## लब्धप्रणाशम्–कथा १

अस्ति कस्मिंश्चित्कूपे गङ्गदत्तो नाम मण्डूकराजः प्रतिवसतिस्म।सकदाचिद्दायादैरुद्वेजितऽरघट्टघटीमारुह्यनिष्क्रान्तः।अथ तेन चिन्तितं यत्कथं तेषां दायादानां मया प्रत्यपकारः कर्त-व्यः। उक्तं च–

आपदि येनापकृतं येन च हसितं दशासु विषमासु।
अपकृत्य तयोरुभयोः पुनरपि जातं नरं मन्ये ।।१७।।

एवं चिन्तयन्बिले प्रविशन्तं कृष्णसर्पमपश्यत्। तं दृष्ट्वा भूयोऽप्यचिन्तयत्–यदेनं तत्र कूपे नीत्वा सकलदायादानामुच्छेदं करोमि। उक्तं च-

शत्रुभिर्योजयेच्छत्रुं बलिना बलवत्तरम्।
स्वकायार्य यतो न स्यात्काचित्पीडात्र तत्क्षये ।।१८।।

तथा च।

शत्रुमुन्मूलयेत्प्राज्ञस्तीक्ष्णं तीक्ष्णेन शत्रुणा ।।
व्यथाकरं सुखार्थाय कण्टकेनेव कण्टकम् ।।१९।।

एवं स परिभाव्य बिलद्वारं गत्वा तमाहूतवान्—एह्येहि प्रियदर्शन एहि। तच्छ्रुत्वा सर्पश्चिन्तयामास य एष मामाह्वयति स स्वजातीयो न भवति यतो नैषा सर्पवाणी। अन्येन केनापि सह मम मर्त्यलोके संधानं नास्ति। तदत्रैव दुर्गे स्थितस्तावद्वेद्मि कोऽयं भविष्यति। उक्तं च-

यस्य न ज्ञायते शीलं न कुलं न च संश्रयः ।
न तेन संगतिं कुर्यादित्युवाच बृहस्पतिः ।।२०।।

कदाचित्कोऽपि मन्त्रवाद्यौषधचतुरो वा मामाहूय बन्धने क्षिपति। अथवा कश्चित्पुरुषो वैरमाश्रित्य कस्यचिद्भक्षणार्थे मामाह्वयति। आह च—भोः को भवान्। स आह—अहं गङ्गदत्तो नाम मण्डूकाधिपतिस्त्वत्सकाशे मैत्र्यर्थमागतः। तच्छ्रुत्वा सर्प आह—भोः अश्रद्धेयमेतत् यत्तृणानां वह्निना सह संगमः। उक्तं च—

यो यस्य जायते वध्यः स स्वप्नेऽपि कथंचन ।
न तत्समीपमभ्येति तत्किमेवं प्रजल्पसि ।।२१।।

गङ्गदत्त आह—भोः सत्यमेतत्। स्वभाववैरी त्वमस्माकम्। परं परपरिभवात्प्राप्तोऽहं ते सकाशम्। उक्तं च—

सर्वस्वनाशे संजाते प्राणानामपि संशये।
अपि शत्रुं प्रणम्यापि रक्षेत्प्राणान् धनानि च ।।२२।।

सर्प आह—कथय—कस्मात्ते परिभवः। स आह—दायादेभ्यः। सोऽप्याह—क्व त आश्रयो वाप्यां कूपे तडागे ह्रदे वा। तत्कथय स्वाश्रयम्। तेनोक्तं—पाषाणचयनिबद्धं कूपे। सर्प आह-अहो अपदा वयम्। तन्नास्ति तत्र मे प्रवेशः। प्रविष्टस्य च स्थानं नास्ति यत्र स्थितस्तव दायादान्व्यापादयामि। तद्गम्यताम्। उक्तं च—

यच्छक्यं ग्रसितुं ग्रस्यं ग्रस्तं परिणमेच्च यत्।
हितं च परिणामे यत्तदद्यं भूतिमिच्छता ।।२३।।

गङ्गदत्त आह—भोः समागच्छ त्वम्। अहं मुखोपायेन तत्र तव प्रवेशं कारयिष्यामि। तथा तस्य मध्ये जलोपान्ते रम्यतरं कोटरमस्ति। तत्र स्थितस्त्वं लीलया दायादान्व्यापादयिष्यसि। तच्छ्रुत्वा सर्पो व्यचिन्तयत्—अहं तावत्परिणतवयाः कदाचित्कथंचिन्मूषकमेकं प्राप्नोमि। तत्सुखावहो जीवनोपायोऽयमनेन कुलाङ्गारेण मे दर्शितः। तद्गत्वा तान्मण्डूकान्भक्षयामि इति। अथवा साध्विदमुच्यते—

यो हि प्राणपरिक्षीणः सहायपरिवर्जितः ।
स हि सर्वसुखोपायां वृत्तिमारचयेद्बुधः ।।२४।।

एवं विचिन्त्य तमाह—भो गङ्गदत्त यद्येवं तदग्रे भव। येन तत्र गच्छावः। गङ्गदत्त आह—भोः प्रियदर्शन अहं त्वां सुखोपायेन तत्र नेष्यामि स्थानं च दर्शयिष्यामि। परं त्वयास्मत्परिजनो रक्षणीयः। केवलं यानहं दर्शयिष्यामि त्वया त एव भक्षणीया इति। सर्प आह—सांप्रतं त्वं मे मित्रं जातः। तन्न भेतव्यम्। तव वचनेन भक्षणीयास्ते दायादाः। एवमुक्त्वा बिलान्निष्क्रम्य तमालिङ्गय च तेनैव सह प्रस्थितः। अथ कूपमासाद्यारघट्टघटिकामार्गेण सर्पस्तेनात्मना स्वालयं नीतः। ततश्च गङ्गदत्तेन कृष्णसर्पं कोटरे धृत्वा दर्शितास्ते दायादाः। ते च तेन शनैर्भक्षिताः। अथ मण्डूकाभावे सर्पेणाभिहितम्—भद्र निःशेषितास्ते रिपवः। तत्प्रयच्छान्यन्मे किंचिद्भोजनं यतोऽहं त्वयात्रानीतः। गङ्गदत्त आह—भद्र कृतं त्वया मित्रकृत्यम्। तत्सांप्रतमनेनैव घटिकायन्त्रमार्गेण गम्यताम् इति। सर्पं आह—भो गङ्गदत्त न सम्यगभिहितं त्वया। कथमहं तत्र गच्छामि। मदीयबिलदुर्गमन्येन रुद्धं भविष्यति। तस्मादत्रस्थस्य मे मण्डूकमेकैकं स्ववर्गीयं प्रयच्छ। नो चेत्सर्वानपि भक्षयिष्यामि इति। तच्छ्रुत्वा गङ्गदत्तो व्याकुलमना व्यचिन्तयत्

– अहो किमेतन्मयाकृतं सर्पमानयता। तद्यदि निषेधयिष्यामि तत्सर्वानपि भक्षयिष्यति। अथवा युक्तमुच्यते–

योऽमित्रं कुरुते मित्रं वीर्याभ्यधिकमात्मनः ।
स करोति न संदेहः स्वयं हि विषभक्षणम् ।।२५।।

तत्प्रयच्छाम्यस्यैकं दिनं प्रति सुहृदम्। उक्तं च–

सर्वस्वहरणे युक्तं शत्रुं बुद्धियुता नराः।
तोषयन्त्यल्पदानेन वाडवं सागरो यथा ।।२६।।

तथा च-

यो दुर्बलो ह्यण्वपि याच्यमानो बलीयसा यच्छति नैव सान्ना।
प्रयच्छते नैव च दर्श्यमानं खारीं स चूर्णस्य पुनर्ददाति ।।२७।।

तथा च-

सर्वनाशे समुत्पन्ने ह्यर्धे त्यजति पण्डितः ।
अर्धेन कुरुते कार्यं सर्वनाशो हि दुस्तरः ।।२८।।

न स्वल्पस्य कृते भूरि नाशयेन्मतिमान्नरः ।
एतदेव हि पाण्डित्यं यत्स्वल्पाद्भूरिरक्षणम् ।।२९।।

एवं निश्चित्य नित्यमेकैकमादिशति। सोऽपि तं भक्षयित्वा तस्य परोक्षे अन्यानपि भक्षयति। अथवा साध्विदमुच्यते –

यथा हि मलिनैर्वस्त्रैर्यत्र तत्रोपविश्यते ।
एवं चलितवृत्तस्तु वृत्तशेषं न रक्षति ।।३०।।

अथान्यदिने तेनापरान्मण्डूकान्भक्षयित्वा गङ्गदत्तसुतो यमुनादत्तो भक्षितः। तं भक्षितं दृष्ट्वा गङ्गदत्तस्तारस्वरेण धिग्धिक्प्रलापपरः कथंचिदपि न विरराम। ततः स्वपत्न्याभिहितः –

किंक्रन्दसिदुराक्रन्दस्वपक्षक्षयकारक।
स्वपक्षस्य क्षये जाते को नस्त्राता भविष्यति ।।३१।।

तदद्यापि विचिन्त्यतामात्मनो निष्क्रमणमस्य वधोपायश्च। अथ गच्छता कालेन सकलमपि कवलितं मण्डूककुलम्। केवलमेको

गङ्गदत्तस्तिष्ठति। ततः प्रियदर्शनेन भणितम् भो गङ्गदत्त बुभुक्षितोऽहम्। निःशेषिताः सर्वे मण्डूकाः। तद्दीयतां मे किंचिद्भोजनं यतोऽहं त्वयात्रानीतः। स आह—भो मित्र न त्वयात्र विषये मयावस्थितेन कापि चिन्ता कार्या। तद्यदि मां प्रेषयसि ततोऽन्यकूपस्थानपि मण्डूकान्विश्वास्यात्रानयामि। स आह—मम तावत्त्वमभक्ष्यो भ्रातृस्थाने। तद्यद्येवं करोषि तत्सांप्रतं पितृस्थाने भवसि। तदेवं क्रियताम् इति। सोऽपि तदाकर्ण्य अरघट्टघटिकामाश्रित्य विविधदेवतोपकल्पितपूजोपयाचितस्तस्मात्कूपाद्विनिष्क्रान्तः।
प्रियदर्शनोऽपि तदाकाङ्क्षया तत्रस्थः प्रतीक्षमाणस्तिष्ठति। अथ चिरादनागते गङ्गदत्ते प्रियदर्शनोऽन्यकोटरनिवासिनीं गोधामुवाच—भद्रे क्रियतां स्तोकं साहाय्यम्। यतश्चिरपरिचितस्ते गङ्गदत्तः। तद्गत्वा तत्सकाशं कुत्रचिज्जलाशयेऽन्विष्य मम संदेशं कथय। यदागम्यतामेकाकिनापि भवता द्रुततरं यद्यन्ये मण्डूका नागच्छन्ति। अहं त्वया विना नात्र वस्तुं शक्नोमि। तथा यद्यहं तव विरुद्धमाचरामि तत्सुकृतमन्तरे मया विधृतम्। गोधापि तद्वचनाद्गङ्गदत्तं द्रुततरमन्विष्याह भद्र गङ्गदत्त स तव सुहृत्प्रियदर्शनस्तव मार्गं समीक्षमाणस्तिष्ठति। तच्छीघ्रमागम्यताम् इति। अपरं च तेन तव विरूपकरणे सुकृतमन्तरे धृतम्। तन्निःशङ्केन मनसागम्यताम्। तदाकर्ण्य गङ्गदत्त आह—

बुभुक्षितः किं न करोति पापं क्षीणा नरा निष्करुणा भवन्ति।
आख्याहि भद्रे प्रियदर्शनस्य न गङ्गदत्तः पुनरेति कूपम्।।३२

एवमुक्त्वा स तां विसर्जयामास।

## अपरीक्षितकारकम्—कथा ७

कस्मिंश्चिदधिष्ठाने मन्थरको नाम कौलिकः प्रतिवसति स्म। तस्य कदाचित्पटकर्माणि कुर्वतः सर्वपटकर्मकाष्ठानि भग्नानि। ततः स कुठारमादाय वने काष्ठार्थं गतः। स च समुद्रतटं यावद्भ्रमन्प्रयातः। ततश्च तत्र शिंशपापादपस्तेन दृष्टः। ततश्चिन्तितवान्। महा-

नयं वृक्षो दृश्यते। तदनेन कर्तितेन प्रभूतानि पटकर्मोपकरणानि भविष्यन्ति। इत्यवधार्य तस्योपरि कुठारमुत्क्षिप्तवान्। अथ तत्र वृक्षे कश्चिद्व्यन्तरः समाश्रित आसीत्। अथ तेनाभिहितम्। भोः ममाश्रयोयं पादपः सर्वथा रक्षणीयो यतोहमत्र महासौख्येन तिष्ठामि समुद्रकल्लोलस्पर्शनाच्छीतवायुनाप्यायितः। कौलिक आह। भोः किमहं करोमि दारुसामग्रीं विना मे कुटुम्बं बुभुक्षया पीड्यते। तस्मादन्यत्र शीघ्रं गम्यताम्। अहमेनं कर्तयिष्यामि। व्यन्तर आह। भोस्तुष्टस्तवाहम्। तत्प्रार्थ्यतामभीष्टं किंचित्। रक्षैनं पादपमिति। कौलिक आह। यद्येवं तदहं स्वगृहं गत्वा स्वमित्रं स्वभार्यां च पृष्ट्वागमिष्यामि। ततस्त्वया देयम्। अथ तथेति प्रतिज्ञाते व्यन्तरेण स कौलिकः प्रहृष्टः स्वगृहं प्रति निवृत्तः। यावदग्रे गच्छति तावद्ग्रामप्रवेशे निजसुहृदं नापितमपश्यत्। ततस्तस्य व्यन्तरवाक्यं निवेदयामास। यदहो मित्र मम कश्चिद्व्यन्तरः सिद्धः। तत्कथय किं प्रार्थये। अहं त्वां प्रष्टुमागतः। नापित आहभद्र यद्येवं तद्राज्यं प्रार्थयश्च येन त्वं राजा भवस्यहं त्वन्मन्त्री। द्वावपीह सुखमनुभूय परलेकसुखमनुभवावः। उक्तं च-

राजा न्यायपरो नित्यमिह कीर्तिमवाप्य च।
तत्प्रभावात्पुनः स्वर्गे स्पर्धते त्रिदशैः सह ॥५९॥

कौलिक आह अस्त्येतत्परं तथापि गृहिणीं पृच्छामि। स आह भद्र शास्त्रविरुद्धमेतद्यत्स्त्रिया सह मन्त्रो यतस्ताः स्वल्पमतयो भवन्ति। उक्तं च-

भोजनाच्छादने दद्यादृतुकाले च संगमम्।
भूषणाद्यं च नारीणां न ताभिर्मन्त्रयेत्सुधीः ॥६०॥

यत्र स्त्री यत्र कितवो बालो यत्र प्रशासिता।
राजन्निर्मूलतां याति तद्गृहं भार्गवोब्रवत् ॥६१॥

तावत्स्यात्सुप्रसन्नास्यस्तावद्गुरुजने रतः।
पुरुषो योषितां यावन्न शृणोति वचो रहः ॥६२॥

एताः स्वार्थपरा नार्यः केवलं स्वसुखे रताः ।
न तासां वल्लभः कोपि सुतोपि स्वमुखं विना ।।६३।।

कौलिक आह। तथापि प्रष्टव्या सा मया यतः पतिव्रता सा। अपरं तामपृष्ट्वाहं न किंचित्करोमि। एवं तमभिधाय सत्वरं गत्वा तामुवाच। प्रिये अद्यास्माकं कश्चिद्व्यन्तरः सिद्धः। स वाञ्छितं प्रयच्छति। तदहं त्वां प्रष्टुमागतः। तत्कथय किं प्रार्थये। एष तावन्मम मित्रं नापितो वदत्येवं यद्राज्यं प्रार्थयस्व। साह। आर्यपुत्र का मतिर्नापितानाम्। तन्न कार्यं तद्वचः। उक्तं च-

चारणैर्वन्दिभिर्नीचैर्नापितैर्बालकैरपि ।
न मन्त्रं मतिमान्कुर्यात्सार्धं भिक्षुभिरेव च ।।६४।।

अपरं महती क्लेशपरंपरैषा राज्यस्थितिः। संधिविग्रहयानासनसंश्रयद्वैधीभावादिभिः कदाचित्पुरुषस्य सुखं न प्रयच्छतीति। यतः

यदैव राज्ये क्रियतेभिलाषस्तदैव याति व्यसनेषु बुद्धिः ।
घटा नृपाणामभिषेककाले सहाम्भसैवापदमुद्गिरन्ति ।।६५।।

तथा च-

रामस्य व्रजनं बलेर्नियमनं पाण्डोः सुतानां वनं
वृष्णीनां निधनं नलस्य नृपते राज्यात्परिभ्रंशनम्।
सौदासं तदवस्थमर्जुनवधं संचिन्त्य लङ्केश्वरं
दृष्ट्वा राज्यकृते विडम्बनगतं तस्मान्न तद्वाञ्छयेत् ।।६६

यदर्थं भ्रातरः पुत्रा अपि वाञ्छन्ति ये निजाः।
वधं राज्यकृते राज्ञां तद्राज्यं दूरतस्त्यजेत् ।।६७।।

कौलिक आह सत्यमुक्तं भवत्या। तत्कथय किं प्रार्थये। साह त्वं तावदेकं पटं नित्यमेव निष्पादयसि। तेन सर्वा व्ययशुद्धिः संपद्यते। इदानीं त्वमात्मनोन्यद्बाहुयुगलं द्वितीयं शिरश्च प्रार्थयस्व येन पटद्वयं संपादयसि पुरतः पृष्ठतश्च। एकस्य मूल्येन गृहे यथापूर्वं व्ययः शुध्यति द्वितीयस्य मूल्येन विशेषकृत्यानि क्रियन्ते। एवं सौख्येन स्वजा-

तिमध्ये श्लाघ्यमानस्य कालो यास्यति। लोकद्वयस्योपार्जना भविष्यति। सोपि तदाकर्ण्य प्रहृष्टः प्राह साधु पतिव्रते साधु। युक्तमुक्तं भवत्या। तदेवं करिष्यामि। एष मे निश्चयः। ततोसौ गत्वा व्यन्तरं प्रार्थयामास। भो यदि मयेप्सितं प्रयच्छसि तद्देहि मे द्वितीयं बाहुयुगलं शिरश्च। एवमभिहिते तत्क्षणादेव द्विशिराश्चतुर्बाहुश्च संजातः। ततो हृष्टमना यावद्गृहमागच्छति तावल्लोकै राक्षसोयमिति मन्यमानैर्लगुडपाषाणप्रहारैस्ताडितो मृतश्च। अतोहं ब्रवीमि। यस्य नास्ति स्वयं प्रज्ञा इति। चक्रधर आह। भोः सत्यमेतत्। सर्वोपि जनोश्रद्धेयामासापिशाचिकां प्राप्य हास्यपदवीं याति।



# हितोपदेशे

## मित्रलाभः

अथ प्रासादपृष्ठे सुखोपविष्टानां राजपुत्राणां पुरस्तात् प्रस्तावक्रमेण स पंडितोऽब्रवीत्।

विद्यानाम नरस्य रूपमधिकं विद्याऽति गुप्तं धनं
विद्या बंधुरसौ विदेशगमने विद्याऽक्षयं संबलम्।
विद्या कीर्तिकरी सभावशकरी विद्या परं लोचनं
विद्याजीवन हेतुरत्र भुवनं विद्याविहीनः पशुः ।।१।।

गंगाहीनो हतो देशो विद्याहीनं हतं कुलम्।
अप्रसूता हता नारी हतो यज्ञस्त्वदक्षिणः ।।२।।

काव्यशास्त्रविनोदेन कालो गच्छति धीमताम् ।
व्यसनेन च मूर्खाणां निद्रया कलहेन वा ।।३।।

तद्भवतां विनोदाय काककूर्मादीनां, विचित्रां कथां कथयामि, राजपुत्रैरुक्तं कथ्यताम्।

विष्णुशर्मोवाच, शृणुत यूयम् संप्रति मित्रलाभः प्रस्तूयते, यस्यायमाद्यः श्लोकः—

असाधना वित्तहीना बुद्धिमंतः सुहृत्तमाः।
साधयंत्याशु कार्याणि काककूर्ममृगाखुवत् ।।४।।

राजपुत्रा ऊचुः कथमेतत् ? सोऽब्रवीत्। अस्ति गोदावरीतीरे विशाल शशाल्मरीतरुः। तत्र नानादिग्देशादागत्य रात्रौ पक्षिणो निवसन्ति। अथ कदाचिदवसन्नायां रात्रावस्ताचलचूडावलम्बिनी

भगवति कुमुदिनीनायके चन्द्रमसि, लघुपतनकनामा वायसः प्रबुद्धः कृतांतमिव द्वितीयमंतकं व्याधमपश्यत्। तमवलेक्याचिन्तयत्। "अद्य प्रातरेवानिष्टदर्शनं जातं न जाने किमनभिमतं दर्शयिष्यति।" इत्युक्त्वा तदनुसरणक्रमेण व्याकुलश्चलितः यतः –

शोकस्थानसहस्राणि भयस्थानशतानि च ।
दिवसे दिवसे मूढमाविशंति न पंडितम् ।।५।।

अन्यच्च । विषयिणामिदमवश्यं कर्तव्यम् ।
उत्थायोत्थाय बोद्धव्यं महाभयमुपस्थितम् ।
मरणव्याधिशोकानां किमद्य निपतिष्यति ।।६।।

अथ तेन व्याधेन तण्डुलकणान् विकीर्य, जालं विस्तीर्य स प्रच्छन्नोभूत्वा स्थितः। तस्मिन्नेव जाले चित्रग्रीवनामा कपोतराजस्सपरिवारो वियति विसर्पन्तान्तण्डुलकणानवलोकयामास। ततः कपोतराजा तण्डुलकणलुब्धान् कपोतान् प्रत्याह? कुतोऽत्र निर्जने वने तण्डुलकणानां संभवः ? तन्निरूप्यतां तावत्? भद्रमिदं न पश्यामि। सप्रायेणानेन तण्डुलकणलोभेनास्माभिरपि तथा भवितव्यम्।

कंकणस्य तु लोभेन मग्नः पंके सुदुस्तरे ।
वृद्धव्याघ्रेण संप्राप्तः पथिकस्य मृतो यथा ।।७।।

कपोता ऊचुः, कथमेतत् ? सोऽब्रवीत्।

अहमेकदा दक्षिणारण्ये चरन्नपश्यम्। एको वृद्धव्याघ्र. स्नात्तः कुशहस्तस्सरस्तीरे ब्रूते 'भो, भो, पान्थ। इदं सुवर्णकंकणं गृह्यताम्' ततो लोभाकृष्टेन केनचित् पांथेनालोचितम्, 'भाग्येनैतत् संभवति। किंत्वस्मिन्नात्मसन्देहे प्रवृत्तिर्न विधेया, यतः –

अनिष्टादिष्टलाभेपि न गतिर्जायते शुभा ।
यत्रास्ते विषसंसर्गो अमृतं तदपि मृत्यवे ।।८।।

किंतु सर्वत्रार्थार्जने प्रवृत्तिस्सन्देह एव। तथाचोक्तम् –

न संशयमनारुह्य नरो भद्राणि पश्यति ।
संशयं पुनरारुह्य यदि जीवति पश्यति ।।९।।

तन्निरूपयामि तावत्, प्रकाशं ब्रूते – कुत्र तव कंकणम् ? व्याघ्रो हस्तं प्रसार्य दर्शयति, पान्थोऽवदत्, कथ क्रूरात्मके त्वयि विश्वासः ? व्याघ्र उवाच–'शृणु, रे पान्थ ! प्रागेव यौवनदशायामतिदुर्वृत्तोस्मि, अनेकगोमानुषाणां वधान्मे पुत्रा मृता दाराश्च, वंशहीनश्चाहम्। ततः केनचिदहमादिष्टः 'दानधर्मादिकं चरतु भवानिति' तदुपदेशादिदानीमहं स्नानशीलो दाता वृद्धो गलितनखदन्तः कथं न विश्वासभूमिः ? यतः –

इज्याध्ययनदानानि तपस्सत्यं धृतिः क्षमा ।
अलोभ इति मार्गोयं धर्मश्चाष्टविधः समृतः ।।१०।।

तत्र पूर्वश्चतुर्वर्गो दंभार्थमपि सेव्यते ।
उत्तरस्तु चतुर्वर्गो महात्मन्येव तिष्ठति ।।११।।

मम चैतावान् लोभविरहो येन स्वहस्तस्थमपि सुवर्णकंकणं यस्मै कस्मैचिद्दातुमिच्छामि। तथापि व्याघ्रो मानुषंखादतीति लोकप्रवादो दुर्निवारः।

गतानुगतिको लोकः कुटिनीमुपदेशिनीम् ।
प्रमाणयति नो धर्मे यथा गोघ्नमपि द्विजम् ।।१२।।

मयापि धर्मशास्त्राण्यधीतानि।

मरुस्थले यथा वृष्टिः क्षुधार्ते भोजनं यथा ।
दरिद्रे दीयते दानं सफलं पांडुनंदन ।।१३।।

प्राणा यथात्मनोऽन्येषां भूतानामपि ते तथा ।
आत्मौपम्येन भूतेषु दयां कुर्वन्ति साधवः ।।१४।।

प्रत्याख्याने च दाने च सुखदुःखे प्रियाप्रिये ।
आत्मौपम्येन पुरुषः प्रमाणमधिगच्छति ।।१५।।

मातृवत्परदारेषु परद्रव्येषु लोष्ठवत् ।
आत्मवत्सर्वभूतेषु यः पश्यति स पंडितः ।।१६।।

त्वं चातिदुर्गतस्तेन तत्तुभ्यं दातुं सयत्नोऽहम्। तथा चोक्तम्—

दरिद्रान् भर कौन्तेय। मा प्रयच्छेश्वरे धनम् ।
व्याधितस्यौषधं पथ्यं नीरुजस्तु किमौषधैः ।।१७।।

अन्यच्च —

दातव्यमिति यद्दानं दीयतेऽनुपकारिणे।
देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ।।१८।।

तदत्र सरसि स्नात्वा सुवर्णकंकणं गृहाण, ततो यावदसौ तद्वचः प्रतीतो लोभात् सरसि स्नातुं प्रविशति, तावन्महापंके पतितं दृष्ट्वा व्याघ्रोऽवदत्। 'अहह ! महापंके पतितोऽसि ? अतः त्वामुत्थापयामि' इत्युक्त्वा शनैरुपगम्य, तेन व्याघ्रेण धृतः स पांथोऽचिन्तयत्।

न धर्मशास्त्रं पठतीति कारणं
नचापि वेदाध्ययनं दुरात्मनः ।
स्वभाव एवात्र तथातिरिच्यते
यथाप्रकृत्या मधुरं गवां पयः ।।१९।।

अवशेन्द्रियचित्तानां हस्तिस्नानमिव क्रिया।
दुर्भगाभरणप्रायो ज्ञानं भारः कियां विना ।।२०।।

तन्मया भद्रं न कृतं, यदत्र क्रूरात्मके विश्वासः कृतः, तथाचोक्तम् —

नदीनां शस्त्रपाणीनां नखिनां शृंगिणां तथा ।
विश्वासो नैव कर्तव्यः स्त्रीषु राजकुलेषु च ।।२१।।

सर्वस्य हि परीक्ष्यन्ते स्वभावा नेतरे गुणाः ।
अतीत्य हि गुणान् सर्वान् स्वभावो मूर्ध्नि वर्तते ।।२२।।



स हि गगनविहारी कल्मषध्वंसकारी
दशशतकरधारी ज्योतिषां मध्यचारी ।
विधुरपि विधियोगाद्ग्रस्यते राहुणासौ
लिखितमपि ललाटे प्रोज्झितुं कः समर्थः ।।२३।।

सुजीर्णमन्नं सुविचक्षणः सुतः
सुशासिता स्त्री नृपतिः सुसेवितः ।
सुचिन्त्य चोक्तं सुविचार्य यत् कृतं
सुदीर्घकालेऽपि नयाति विक्रियाम् ।।२४।।

एतद्वचनं श्रुत्वा कश्चित् कपोतः सदर्पमाह। आः ! किमेव मुच्यते ?

वृद्धस्य वचनं ग्राह्यमापत्काले ह्युपस्थिते ।
सर्वत्रैवाविचारेण भोजनेप्यप्रवर्तनम् ।।२५।।

शंकाभिः सर्वमाक्रान्तमन्नं पानं च भूतले ।
प्रवृत्तिः कुत्र कर्तव्या जीवितव्यं कथं नु वा ।।२६।।

तथाचोक्तम् —

ईर्ष्यी घृणी त्वसंतुष्टः क्रोधनो नित्यशंकितः ।
परभाग्योपजीवी च षडेते दुःखभागिनः ।।२७।।

एतच्छ्रुत्वा सर्वे कपोतास्तत्र उपविष्टाः।

सुमहान्त्यपि शास्त्राणि धारयन्तो बहुश्रुताः ।
छेत्तारस्संशयानां च क्लिश्यन्ते लोभमोहिताः ।।२८।।

लोभात्क्रोधः प्रभवति लोभात् कामः प्रजायते ।
लोभान्मोहश्च नाशश्च लोभः पापस्य कारणम् ।।२९।।

असंभवं हेममृगस्य जन्म
तथापि रामो लुलुभे मृगाय ।

प्रायस्समासन्नविपत्तिकाले
धियोपि पुंसां मालिना भवन्ति ।।३०।।

अनन्तरं सर्वे जालबद्धा बभूवुः ततो यस्य वचनात्तत्रावलंबिता स्तं सर्वे तिरस्कुर्वन्ति, यतः –

न गणस्याग्रतो गच्छेत् सिद्धे कार्ये समं फलम् ।
यदि कार्यविपत्तिस्यान्मुखगस्तत्र हन्यते ।।३१।।

आपदां कथितः पन्था इन्द्रियाणामसंयमः ।
तज्जयः संपदां मार्गो येनेष्टं तेन गम्यताम् ।।३२।।

तस्य तिरस्कारं श्रुत्वा चित्रग्रीव उवाच। नायमस्य दोषः यतः-

आपदामापतन्तीनां हितोऽप्यायाति हेतुताम् ।
मातृजंघा हि वत्सस्य स्तंभीभवति बंधने ।।३३।।

स बन्धुर्यो विपन्नानां आपदुद्धरणक्षमः ।
न तु भीतपरित्राणवस्तूपालंभपंडितः ।।३४।।

विपत्काले विस्मय एव कापुरुषलक्षणम्, तदत्र धैर्यमवलंब्य प्रतीकारश्चिंत्यताम्। यतः –

विपदि धैर्यमथाभ्युदये क्षमा
सदसि वाक्पटुता युधि विक्रमः ।
यशसि चाभिरुचिर्व्यसनं श्रुतौ
प्रकृतिसिद्धमिदं हि महात्मनाम् ।।३५।।

संपदि यस्य न हर्षो
विपदि विषादो रणे च भीरुत्वम् ।
तं भुवनत्रयतिलकं
जनयति जननी सुतं विरलम् ।।३६।।



षड्दोषाः पुरुषेणेह हातव्या भूतिमिच्छता ।
निद्रातन्द्राभयंक्रोधमालस्यं दीर्घसूत्रता ।।३७।।

इदानीमप्येवं क्रियतां, सर्वैरेकचित्तीभूय जालमादायोड्डीताम्।

अल्पानामपि वस्तूनां संहतिः कार्यसाधिका ।
गुणैः गुणत्वमापन्नैः बध्यन्ते मत्तदंतिनः ।।३८।।

संहतिः श्रेयसे पुंसां स्वकुलैरल्पकैरपि ।
तुषेणापि परित्यक्ता न प्ररोहन्ति तंडुलाः ।।३९।।

इति विचिन्त्य पक्षिणः सर्वे जालमादायोत्पतिताः

अनन्तरं स व्याधः सुदूराज्जालापहारकांस्तानवलोक्य पश्चाद्धावन्नचिन्तयत्।

संहतास्तु हरन्तीमे मम जालं विहंगमाः ।
यदा तु निपतिष्यन्ति वशमेष्यन्ति मे तदा ।।४०।।

ततः तेषु चक्षुर्विषयातिक्रांतेषु पक्षिषु स व्याधो निवृत्तः। अथ लुब्धकं निवृत्तं दृष्ट्वा कपोता ऊचुः। किमिदानीं कर्तुमुचितम्? चित्रग्रीव उवाच-

माता मित्रं पिता चेति स्वभावात्त्रितयं हितम् ।
कार्यकारणतःश्चान्ये भवन्ति हितबुद्धयः ।।४१।।

तदस्माकं मित्रं हिरण्यको नाम मूषिकराजो गंडकीतीरे चित्रवने निवसति। दन्तबलेन सोऽस्माकं पाशं छेत्स्यति। इत्यालोच्य सर्वे हिरण्यकविवरसमीपं गताः। हिरणयकश्च सर्वदा अपायशंकया शतद्वारं विवरं कृत्वा निवसति।

अनागतभयं दृष्ट्वा नीतिशास्त्रविशारदः ।
अवसन्मूषकस्तत्र वृद्धः शतमुखं बिलम् ।।४२।।

ततो हिरण्यकः कपोतावपातभयाच्चकितस्तूष्णीं स्थितः। चित्रग्रीव उवाच–'सखे, हिरण्यक ! कथमस्मान्न संभाषसे ? ततो हिरण्यकस्तु तद्वचनं प्रत्यभिज्ञाय ससम्भ्रमं बहिर्निसृत्याब्रवीत्,

'अये। पुण्यवानस्मि प्रियसुहृन्मे चित्रग्रीवः समायातः।

यस्य मित्रेण संभाषा यस्य मित्रेण संस्थितिः ।
यस्य मित्रेण संलापस्ततो नास्तीह पुण्यवान् ।।४३।।

पाशबद्धांश्चैतान् दृष्ट्वा सविस्मयः क्षणं स्थित्वोवाच सखे ! किमेतत् ? चित्रग्रीव उवाच–'सखे ? अस्माकं प्राक्तनजन्मकर्मणः फलमेतत्'।

यस्माच्च येन च यथा च यदा च यच्च
यावच्च यत्र च शुभाशुभमात्मकर्म ।
तस्माच्च तेन च तथा च तदा च तच्च
तावच्च तत्र च विधातृवशादुपैति ।।४४।।

रोगशोकपरीतापबन्धनव्यसनानि च ।
आत्मापराधवृक्षाणां फलान्येतानि देहिनाम् ।।४५।।

एतच्छ्रुत्वा हिरण्यकश्चित्रग्रीवस्य बन्धनं छेत्तुं सत्वरमुपसर्पति, चित्रग्रीव उवाच–मित्र ! मैवम्, किं त्वस्मदाश्रितानामेतेषां तावत्पाशां श्छिन्धिततो, मम पाशान्पश्चाच्छेत्स्यसि। 'हिरण्यकोप्याह– 'अहमल्पशक्तिः, दंता मे कोमलाः। तदेतेषां पाशां श्छेत्तुं कथं समर्थः? तद्यावन्मे दन्ता न तृट्यन्ति; तावत्तव पाशांश्छिनद्मि, अनंतरमप्येतेषां बन्धनं यावच्छक्यं छेत्स्यामि। चित्रग्रीव उवाच अस्त्वेवं, तथापि यथाशक्ति बन्धनमेतेषां खंडय। हिरण्यकेनोक्तं–आत्मपरित्यागेन यदाश्रितानां परिरक्षणं तन्न नीतिवेदिनां सम्मतम्। यतः –

आपदर्थं धनं रक्षे द्दारान् रक्षेद्धनैरपि ।
आत्मानं सततं रक्षेद् दारैरपि धनैरपि ।।४६।।

धर्मार्थकाममोक्षाणां प्राणास्संस्थितिहेतवः ।
तान्निघ्नता किं न हतं रक्षता किं न रक्षितम्? ।।४७।।

चित्रग्रीव उवाच–'सखे, नीतिस्तावदीदृश्येव' किं त्वहम-

स्मदाश्रितानां दुःखं सोढुं सर्वथा न समर्थः। तेनेदं ब्रवीमि। यतः –

धनानि जीवितं चैव परार्थं प्राज्ञा उत्सृजेत् ।
सन्निमित्ते वरं त्यागो विनाशे नियते सति ।।४८।।

अयमपरश्च साधारणो हेतुः ।

जातिद्रव्यबलानां च साम्यमेषां मया सह ।
मत्प्रभुत्वफलं ब्रूहि कदा किं तद् भविष्यति ।।४९।।

किं च –

मांसमूत्रपूरीषास्थिनिर्मिते च कलेबरे ।
विनश्वरे विहायाशां यशः पालय मित्र मे ।।५०।।

अन्यच्च

विना वर्तनमप्येते न त्यजन्ति ममान्तिकम् ।
तन्मे प्राणव्ययेनापि जीवयैतान्ममाश्रितान् ।।५१।।

अपरं च पश्य –

यदि नित्यमनित्येन निर्मलं मलवाहिना ।
यशःकायेन लभ्येत तत्र लब्धं भवेन्नु किम् ।।५२।।

शरीरस्य गुणानां च दूरमत्यंतमंतरम् ।
शरीरं क्षणविध्वंसि कल्पान्तस्थायिनो गुणाः ।।५३।।

इत्याकर्ण्य हिरण्यकः प्रहृष्टमनाः पुलिकितस्सन्नब्रवीत्। 'साधु मित्र ! साधु ! अनेनाश्रितवात्सल्येन त्रैलोक्यस्यापि प्रभुत्वं त्वयि युज्यते।' एवमुक्त्वा तेन सर्वेषां बन्धनानि छिन्नानि। ततो हिरण्यकस्सर्वान् सादरं संपूज्याह–'सखे चित्रग्रीव ! सर्वथाऽत्र जालबंधनविधौ दोषमाशंक्यात्मन्यवज्ञा न कर्तव्या। यतः –

योऽधिकाद् योजनशतात्पश्यतीहामिषं खगः ।
स एव प्राप्तकालस्तु पाशबंधं न पश्यति ।।५४।।

अपि च–

शशिदिवाकरयोर्ग्रहपीडनं

गजभुजंगविहंगमबन्धनम् ।
मतिमतां च विलोक्य दरिद्रतां
विधिरहो बलवानिति मे मतिः ।।५५।।

अन्यच्च –

व्योमैकांतविहारिणोऽपि विहगाः संप्राप्नुवन्त्यापदं
वध्यन्ते निपुणैरगाधसलिलान्मत्स्याः समुद्रादपि ।
दुर्नीतं किमिहास्ति किं सुचरितं कः स्थानलाभे गुणः
कालो हि व्यसनप्रसारितकलो गृह्णाति दूरादपि ।।५६।।

इति प्रबोध्यातिथ्यं कृत्वा आलिंग्य च संप्रेषितश्चित्रग्रीवोऽपि सपरिवारो यथेष्टदेशान्ययौ।

यानि कानि च मित्राणि कर्तव्यानि शतानि च।
पश्य मूषिकमित्रेण कपोता मुक्तबन्धनाः ।।५७।।

हिरण्यकोऽपि स्वविवरं प्रविष्टः ।

अथ लघुपतनकनामा काकः सर्ववृत्तान्तदर्शी साश्चर्यमिदमाह –"अहो हिरण्यक, श्लाघ्योऽसि। अतोऽहमपि त्वया सह मैत्रीमिच्छामि, अतो मां" मैत्रेणानुग्रहीतुमर्हसि एतच्छ्रुत्वा हिरण्यकोऽपि विवाराभ्यन्तरादाह। "कस्त्वम्" स ब्रूते लघुपतनकनामा वायसोऽहम्, हिरण्यको विहस्याह–"का त्वया सह मैत्री"? यतः

यद्येन युज्यते लोके बुधस्तत्तेन योजयेत् ।
अहमन्नं भवान् भोक्ता, कथं प्रीतिर्भविष्यति ।।५८।।

अपरं च –

भक्ष्यभक्षकयोः प्रीतिर्विपत्तेरेव कारणम् ।
सृगालात्पाश बद्धोऽसौ मृगः काकेन रक्षितः ।।५९।।

वायसोऽब्रवीत्–कथमेतत् ।

हिरण्यकः कथयति–

अस्ति मगधदेशे चम्पकवतीनामारण्यानी। तस्यां चिरान्महता

स्नेहेन मृगकाकौ निवसतः। स च मृगः स्वेच्छया भ्राम्यन् हृष्टपुष्टांगः केनचित्सृगालेनावलोकितः। तं दृष्ट्वा सृगालोऽचिन्तयत्–"आः ! कथमेतन्मासं सुललितं भक्षयामि ? भवतु, विश्वासं तावदुत्पादयामि" इत्यालोच्योपसृत्याब्रवीत्–'मित्र ! कुशलं ते ?" मृगेणोक्तं –"कस्त्वम् ?" स ब्रूते–"क्षुद्रबुद्धिनामा जम्बुकोऽहम्। अत्रारण्ये बन्धुहीनो मृतवन्निवसामि। इदानीं त्वां मित्रमासाद्य पुनस्सबन्धुर्जीवलोकं प्रविष्टोऽस्मि। अधुना तवानुचरेण मया सर्वथा भवितव्य" मिति। मृगेणोक्तम्–"एवमस्तु"। ततः पश्चादस्तंगते सवितरि भगवति मरीचिमालिनि, तौ मृगस्य वासभूमिं गतौ। तत्र चम्पकवृक्षशाखायां सुबुद्धिनामा काको मृगस्य चिरमित्रं निवसति। तौ दृष्ट्वा ककोऽवदत्–"सखे ! कोऽयं द्वितीयः ?" मृगो स्म ब्रूते 'जम्बुकोऽयमस्मत्सख्यमिच्छन्नागतः' काको ब्रूते–मित्र ! अकस्मादागतेन सह विश्वासो न युक्तः। तन्न भद्रमाचरितम्। तथा चोक्तम् –

अज्ञातकुलशीलस्या वासो देयो न कस्यचित्
मर्जालस्य हि दोषेण हतो गृध्रो जरद्गवः ।।६०।।

तावाहतुः "कथमेतत्" ? काकः कथयति।

## अवान्तरकथा - १

अस्ति भागीरथीतीरे गृध्रकूटनाम्नि पर्वते महान्पर्कटीवृक्षः। तस्य कोटरे दैवदुर्विपाकाद्गलितनखनयनो जरद्गवनामा गृध्रः प्रतिवसति। अथ कृपया तज्जीवनाय तद्वृक्षवासिनः प्रक्षिणस्स्वाहारात्किंचित् ददति तेनासौ जीवति। अथ कदाचिद्दीर्घकर्णनामा मार्जालः पक्षिशबकान् भक्षितुं तत्रागतः। ततस्तमायान्तं दृष्ट्वा पक्षिशाबकैर्भयातुरैः कोलाहलः कृतः। तच्छ्रुत्वा जरद्गवेनोक्तम्–'कोऽयमायाति? दीर्घकर्णो गृध्रमवलेक्य सभयमाह हा ! हतोऽस्मि ! यतः —

तावद् भयस्य भेतव्यं यावद् भयमनागतम् ।
आगतं च भयं वीक्ष्य नरः कुर्याद् यथोचितम् ।।६१।।

ततोऽधुना सन्निधाने पलायितुमक्षमः। तद्यथा भवितव्यं तद्भवतु तावत्। विश्वासमुत्पाद्यास्य समीपमुपगच्छामि। इत्यालेच्योपसृत्याब्रवीत्–'आर्य ! त्वामभिवन्दे। गृध्रोऽवदत्–'कस्त्वम्?' सोऽवदत्–'मार्जारोऽहम् ?' गृध्रो ब्रूते–'दूर मपसर नोचेत्द्धन्तव्योऽसि मया' मार्जारोऽवदत्–'श्रूयतां तावदस्मद्वचनं, त्वया यद्यहं वध्यः तदा हंतव्यः यतः–

जातिमात्रेण किं कश्चिद्धन्यते पूज्यते क्वचित् ।
व्यवहारं परिज्ञाय वध्यः पूज्योऽथवा भवेत् ।।६२।।

गृध्रो ब्रूते–ब्रूहि, किमर्थमागतोऽसि ? सोऽवदत् – अहमत्र गङ्गातीरे नित्यस्नायी ब्रह्मचारी चांद्रायणव्रतमाचरंस्तिष्ठामि। युष्मान् धर्मज्ञानरता विश्वासभूमय इति पक्षिणः सर्वे सर्वदा ममाग्रे प्रस्तुवन्ति। अतो भवद्भ्यो विद्मावयोवृद्धेभ्यो धर्मं श्रोतुमिहागतः। भवन्तुश्चैतादृशा धर्मज्ञा यन्मामतिथिं हंतुमुद्यताः गृहस्थधर्मश्चैषः ?

अरावप्युचितं कार्यमातिथ्यं गृहमागते ।
चेत्तुः पार्श्वगतां छायां नोपसंहरते द्रुमः ।।६३।।

यदि वा धनं नास्ति तदा प्रीतिवचसाऽप्यतिथिः पूज्यः।
यतः

तृणानि भूमिरुदकं वाक्चतुर्थी च सूनृता ।
एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन ।।६४।।

अन्यच्च –

बालो वा यदि वा वृद्धो युवा वा गृहमागतः ।
तस्य पूजा विधातव्या सर्वस्याभ्यागतो गुरुः ।। ६५।।

अन्यच्च –

निर्गुणेष्वपि सत्त्वेषु दयां कुर्वन्ति साधवः।
नहि संहरते ज्योत्स्नां चन्द्रश्चण्डालवेश्मनि ।।६६।।

अपरं च –

गुरुरग्निर्द्विजातीनां वर्णानां ब्राह्मणो गुरुः ।
पतिरेको गुरुः स्त्रीणां सर्वत्राभ्यागतो गुरुः ।।६७।।

अन्यच्च –

तिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्तते ।
स तस्मै दुष्कृतं दत्त्वा पुण्यमादाय गच्छति ।।६८।।

अन्यच्च –

उत्तमस्यापि वर्णस्य नीचोऽपि गृहमागतः ।
पूजनीयो यथा योग्यं सर्वदेवमयोऽतिथिः ।।६९।।

गृध्रो वदते-'मार्जारा हि मांसरुचयः' पक्षिशाबकाश्चात्र निवसन्ति 'तेनाहमेवं ब्रवीमि' तच्छ्रुत्वा मार्जारो भुमिं स्पृष्ट्वा कर्णौ स्पृशति कृष्ण कृष्णेति ब्रूते च –'मया धर्मशास्त्रं श्रुत्वा वीतरागेणेदं दुष्करं व्रतं चान्द्रायणामध्यवसितम्। यतः परस्परं विवदमानानामपि धर्मशास्त्राणामहिंसा परमो धर्म इत्यत्रैकमत्यं हि दृश्यते। यतः –

सर्वहिंसानिवृत्ता ये नरास्सर्वसहाश्च ये ।
सर्वस्याश्रयभूताश्च ते नराः स्वर्गगामिनः ।।७०।।

अन्यच्च –

एक एव सुहृद्धर्मो निधनेऽप्यनुयाति यः ।
शरीरेण समं नाशं सर्वमन्यत्तु गच्छति ।।७१।।

किञ्च –

योऽत्ति यस्य यदा मांसमुभयोः पश्यतान्तरम् ।
एकस्य क्षणिका प्रीतिरन्यः प्राणैर्विमुच्यते ।।७२।।

अपि च –

मर्तव्यमिति यद्दुःखं पुरुषस्योपजायते ।
शक्यं तेनानुमानेन परोऽपि परिरक्षितुम् ।।७३।।

शृणु पुनः

स्वच्छन्दवनजातेन शाकेनापि प्रपूर्यते ।
अस्य दग्धोदरस्यार्थे कः कुर्यात्पातकं महत् ।।७४।।

एवं विश्वास्य स मार्जारस्तरुकोटरे स्थितः, ततो दिनेषु गच्छत्सु पक्षिशाबकानाक्रम्य कोटरमानीय स प्रत्यहं खादति। येषामपत्यानि खादितानि, तैः शोकार्तैः विलपद्भिरितस्ततो जिज्ञासा समारब्धा, तत्परिज्ञाय मार्जारः कोटरान्निस्सृत्य बहिः पलायितः, पश्चात्पक्षिभिरितस्ततो निरूपयद्भिस्तत्र तरुकोटरे शाबकास्थीनि प्राप्तानि, अनन्तरं ता ऊचुः—'अनेनैव जरद्गवेनास्माकं शाबकाः,खादिताः' इति सर्वैः पक्षिभिः निश्चित्य गृध्रो व्यापादितः, अतोऽहं ब्रवीम्यज्ञातकुलशीलस्येत्यादि।

## हिरण्यकस्य पूर्ववृत्तान्तः

हिरण्यकोऽवदत्—कथयामि; श्रूयताम्। अस्ति चंपकवत्यां नाम नगर्यां परिव्राजकावसथः। तत्र चूडाकर्णो नाम परिव्राजकः प्रतिवसति। स च भोजनशिष्टभिक्षान्नसहितं भिक्षापात्रं नागदत्तकेऽवस्थाप्य स्वपिति। अहं च तदन्नमुत्प्लुत्य प्रत्यहं भक्षयामि। अनन्तरं तस्य प्रियसुहृद्वीणाकर्णो नाम परिव्राजकः समायातः। तेन सह नानाकथाप्रसंगावस्थितो मम त्रासार्थं जर्जरवंशखण्डेन चूडाकर्णो भूमिमताडयत्। वीणाकर्ण उवाच—'सखे ! किमिति मम कथाविरक्तोऽन्यासक्तो भवान् ? यतः –

मुखं प्रसन्नं विमला च दृष्टिः
कथानुरागो मधुरा च वाणीः ।
स्नेहोऽधिकः संभ्रमदर्शनं च
सदाऽनुरक्तस्य जनस्य लक्षणम् ।।११५।।

अतुष्टिदानं कृतपूर्वनाशनम्
अमाननं दृश्चरितानुकीर्तनम्

कथाप्रसङ्गेन च नाम विस्मृति -
विरक्तभावस्य जनस्य लक्षणम् ।। ११६।।

चूडाकर्णेनोक्तं । 'भद्र ! नाहं विरक्तः, किन्तु पश्यायं मूषिको ममापकारी सदा पात्रस्थितं भिक्षान्नं भक्षयति, वीणाकर्णो नागदन्तकमवलोक्याह—कथं मूषिकः स्वल्पबलोऽप्येतावद्दूरमुत्पतति?

तेनेह मूषिकबलोपष्टंम्भेन केनापि कारणेन भवितव्यम्। क्षणं विचिन्त्य परिव्राजकेनोक्तम्—'कारणं बाहुलयार्जनमेव भविष्यति। यतः –

धनवान् बलवान् लोके सर्वः सर्वत्र सर्वदा ।
प्रभुत्वं धनमूलं हि राज्ञामप्युपजायते ।।१३३।।

ततः खनित्रमादाय तेन परिव्राजकेन मम विवरं खनित्वा चिरकालोपोर्जितं धनं गृहीतं ततः प्रत्यहं निजशक्तिहीनः सत्वोत्साहरहितः स्वाहारमप्युत्पादयितुमक्षमः सत्रासं मन्दं मन्दमुपसर्पन् चूडार्णेनावलोकितोऽहं—ततस्तेनोक्तम्।

अर्थेन बलवान् सर्वः अर्थाद्भवति पण्डितः ।
पश्यैनं मूषिकं पापं स्वजातिसमतां गतम् ।।१३४।।

अर्थेन परिहीनस्य पुरुषस्याल्पमेधसः ।
क्रियाः सर्वाः विनश्यन्ति ग्रीष्मे कुसरितो यथा ।।१३५।।

अपरं च –

यस्यार्थास्तस्य मित्राणि
यस्यार्थास्तस्य बांधवाः ।
यस्यार्थाः स पुमान् लोके –
यस्यार्थः स तु पंडितः ।।१३६।।

अन्यच्च –

अपुत्रस्य गृहं शून्यं सन्मित्ररहितस्य च।
मूर्खस्य च दिशः शून्याः सर्वशून्या दरिद्रता ।।१३७।।

अपि च –

दारिद्रयान्मरणं श्रेयः दारिद्र्यं न वरं स्मृतम् ।
अल्पक्लेशेन मरणं दारिद्र्यमतिदुस्सहम् ।।

अन्यच्च –

तानींद्रियाण्यविकलानि तदेव नाम
सा बुद्धिरप्रतिहता वचनं तदेव ।
अर्थोष्मणा विरहितः पुरुषस्य एव
अन्यः क्षणेन भवतीति विचित्रमेतत् ।।१३९।।

एतत् सर्वमाकर्ण्य मयाऽलेचितम् – ममात्रावस्थानमयुक्तम् इदानीं यच्चान्यस्मै एतद्वृत्तान्तकथनं तदप्यनुचितम्। यतः–

अर्थनाशं मनस्तापं गृहे दुश्चरितानि च ।
वञ्चनं चावमानं च मतिमान्नप्रकाशयेत् ।।१४०।।

अपि च –

आयुर्वित्तं गृहच्छिद्रं मंत्रमैथुनभेषजम् ।
तपो दानावमानं च नव गोप्यानि यत्नतः ।।१४१।।

तथा चोक्तम् –

अत्यन्तविमुखे दैवे व्यर्थे यत्ने च पौरुषे ।
मनस्विनो दरिद्रस्य वनादन्यत् कुतः सुखम् ।।१४२।।

अन्यच्च

मनस्वी म्रियते कामं कार्पण्यं तु न गच्छति ।
अपि निर्वाणमायाति नानलो याति शीतताम् ।।१४३।।

किं च –

कुसुमस्तबकस्येव द्वे वृत्ती तु मनस्विनः ।
सर्वेषां मूर्ध्नि वा तिष्ठेद्विशीर्येदथवा वने ।।१४४।।

यच्चात्रैव याञ्चनया जीवनं तदतीव गर्हितम्। यतः –

वरं विभवहीनेन प्राणैस्सन्तर्पितोऽनलः ।
नोपचारपरिभ्रष्टः कृपणः प्रार्थितो जनः ।।१४५।।

अन्यच्च –

दारिद्र्याद्ध्रियमेति ह्रीपरिगत-
स्सत्वात् परिभ्रश्यते।
निस्सत्वः परिभूयते परिभवा-
न्निर्वेदमापद्यते।।१४६।।

निर्विण्णश्शुचमेति शोकनिहतो
बुद्ध्या परित्यज्यते।
निर्बुद्धिःक्षयमेत्यहो विधनता
सर्वापदामास्पदम्।।१४७।।

किं च –

वरं मौनं कार्यं न च वचनमुक्तं यदनृतं
वरं क्लैब्यं पुंसां न च परकलत्राभिगमनं ।
वरं प्राणत्यागो न च पिशुनवाक्येष्वभिरुचिः
वरं भिक्षाशित्वं न च परधनास्वादनसुखम् ।।१४८।।

वरं शून्या शाला न च खलु वरो दुष्टवृषभः
वरं वेश्यापत्नी न पुनरविनीता कुलवधूः ।
वरं वासोऽरण्ये न पुनरविवेकाधिपपुरे
वरं प्राणत्यागो न पुनरथमानामुपगमः ।।१४९।।

अपि च –

सेवेव मानमखिलं
ज्योत्स्नेव तमोजरेव लावण्यं ।
हरिहरकथेव दुरितं
गुणशतमप्यर्थिता हरति ।।१५०।।

इति विमृश्य तत् किमहं परपिंडेनात्मानं भोजयामि ? कष्टं भोस्तदपि द्वितीयं भृत्युद्वारम् यतः –

पल्लवग्राहिपांडित्यंक्रयक्रीतंचमैथुनं ।
भोजनं च पराधीनं तिस्रः पुंसां विडंबनाः ।।१५१।।

अन्यच्च –

रोगी चिरप्रवासी परान्नभोजी परावसथशायी ।
यज्जीवति तन्मरणं यन्मरणं तस्य विश्रामः ।।१५२।।

इत्यालोच्यापि लोभात् पुनरप्यर्थं ग्रहीतुं गृहमकरवम्। तथा चोक्तम् –

लोभेन बुद्धिश्चलति लोभो जनयते तृषाम् ।
तृषार्तो दुःखमाप्नोति परत्रेह च मानवः ।।१५३।।

ततो वीणाकर्णेनाहं जर्जवंशखण्डेन ताडितोऽचिन्तयम्—लुब्धो ह्यसंतुष्टो नियतमात्मद्रोही भवति।

धनलुब्धो ह्यसंतुष्टोऽनियतात्माऽजितेन्द्रियः ।
सर्वा एवापदस्तस्य यस्य तुष्टं न मानसम्।।१५४।।
सर्वाः संपत्तयस्तस्य संतुष्टं यस्य मानसम् ।
उपानद्गूढपादस्य ननु चर्मावृतेव भूः।।१५५।।

अन्यच्च –

संतोषामृततृप्तानां यत् सुखं शान्तचेतसाम् ।
कुतस्तद्धनलुब्धानामितश्चेतश्च धावताम् ।।१५६।।

तेनाधीतं श्रुतं तेन तेन सर्वमनुष्ठितम् ।
येनाशाः पृष्ठतः कृत्वा नैराश्यमवलंबितम् ।।१५७।।

अपि च –

असेवितेश्वरद्वारमदृष्टविरहव्यथम् ।
अनुक्तक्लीबवचनं धन्यं कस्यापि जीवनम्।।१५८।।

यतः –

न योजनशतं दूरं वाह्यामानस्य तृष्णया ।
संतुष्टस्य करप्राप्ते व्यर्थे भवति नादरः ।।१५९।।

तदत्रावस्थोचितकार्यपरिच्छेदः श्रेयान् – उक्तं च –

को धर्मो भूतदया किं सौख्यमरोगिता जगति ।
जन्तोः कः स्नेहः सद्भावः किं पाण्डित्यं परिच्छेदः ।।१६०।।

तथा च –

परिच्छेदो हि पांडित्यं यदाऽपन्ना विपत्तयः ।
अपरिछेदककर्तृणां विपदः स्युः पदे पदे ।।१६१।।

तथा हि–

त्यजेदेकं कुलस्यार्धे ग्रामस्यार्धे कुलं त्यजेत्
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ।।१६२।।

किं च –

महतां स्थानमाश्रित्य फलं कर्मानुसारतः ।
हरस्य कंठलग्नोऽपि वातं खादति वासुकिः ।।१६३।।

अपरं च –

पानीयं वा निरायासं
स्वाद्वन्नं वा यथोत्तरम् ।
विचार्य खलु पश्यामि
तत् सुखं यत्र निर्वृतिः ।।१६४।।

इत्यालोच्याहं निर्जनवनमागतः यतः –

वरं वनं व्याघ्रगजेन्द्रसेवितं
द्रुमालयं पक्वफलाम्बुभक्षणं।
तृणानि शय्या परिधानवल्कलं
न बंधुमध्ये धनहीनजीवनम् ।।१६५।।

ततो मत्पुण्योदयादनेन मित्रेणाहं स्नेहानुवृत्याऽनुगृहीतः । अधुना पुण्यफलोदयात् भवदाश्रयः स्वर्ग एव मया प्राप्तः। यतः –

संसारविषवृक्षस्य द्वे फले अमृतोपमे ।
काव्यामृतरसास्वादः संगमस्सज्जनैस्सह ।।१६६।।

अपरं च –

सत्संगः केशवे भक्तिर्गंगांभसि निमज्जनम् ।
असारे खलु संसारे साराणि त्रीणि भावयेत् ।।१६७।।

मंथर उवाच–

अर्थाः पारदसन्निभाः गिरिनदीवेगोपमं यौवनं
मानुष्यं जलबिंदुलोलचपलं फेनोपमं जीवनम्
धर्मं यो न करोति निश्चलमतिः स्वर्गार्गलोद्घाटनं
पश्चात्तापहतो जरापरिणतः शोकाग्निना दह्यते ।।१६८।।

भवता त्रातिसंचयः कृतः, तस्यायं दोषः शृणु-

उपार्जितानां वित्तानां त्याग एव हि रक्षणम्।
तटाकोदरसंस्थानां परीवाह इवांभसाम् ।।१६९।।

अन्यच्च –

यदधोऽधः क्षितो वित्तं निचखान मितंपचः ।
तदधो निलयं गन्तुं चक्रे पन्थानमग्रतः ।।१७०।।

यतः –

निजसौख्यं निरुंधानो यो धनार्जनमिच्छति ।
परार्थ भारवाहीव क्लेशस्यैव हि भाजनम् ।। १७१।।

तथा चोक्तम् –

दानोपभोगहीनेन धनेन धनिनो यदि ।
पृथ्वीखातनिखातेन धनेन धनिनो वयम् ।।१७२।।

अन्यच्च –

असंभोगेन सामान्यं कृपणस्य धनं परैः ।
अस्येदमिति संबंधो हानौ दुःखेन गम्यते ।।१७३।।

अपि च –

न देवाय न विप्राय न बंधुभ्यो न चात्मने ।
कृपणस्य धनं याति वह्नितस्करपार्थिवैः ।।१७४।।

# जातकमाला

## बिसजातकम्

प्रविवेकसुखरमज्ञानां विडम्ब्नेव विहिंसेव च कामाः प्रतिकूला भवन्ति ।। तद्यथानुश्रूयते। बोधिसत्त्वः किल कस्मिंश्चिन्महति गुणप्रकाशयशसि वाच्यदोषविरहिते ब्राह्मणकुले जन्मपरिग्रहं चकार। तस्य यत्र कनीयांसः षडपरे भ्रातरस्तदनुरूपगुणाः स्नेह-बहुमानगुणान्नित्यानुगुणा बभूवुः सप्तमी च भगिनी। स कृतश्रमः साङ्गेषु सोपवेदेषु वेदेषु समधिगतविद्यायशाः संमतो जगति दैवत-वन्मातापितरौ परया भक्त्या परिचरन्नाचार्य इव पितेव तान्भ्रातॄ-न्विद्यासु विनयन्नयविनयकुशलो गृहमावसति स्म । स कालक्रमा-न्मातापित्रोः कालक्रियया संविग्नहृदयः कृत्वा तयोः प्रेतकृत्यानि व्यतीतेषु शोकमयेष्विव केषुचिदेव दिवसेषु तान्भ्रातॄन्संनिपात्यो-वाच।

एष लोकस्य नियतः शोकातिविरसः क्रमः ।
सह स्थित्वापि सुचिरं मृत्युना यद्वियोज्यते ।।१।।

तत्प्रव्रजितुमिच्छामि श्रेयः श्लाघ्येन वर्त्मना ।
पुरा मृत्युरिपुर्हन्ति गृहसंरक्तमेव माम् ।।२।।

यतः सर्वानेव भवतः संबोधयामि। अस्त्यत्र ब्राह्मणकुले धर्मेण यथाधिगता विभवमात्रा शक्यमनया वर्तितुम्। तत्सर्वैरेव भवद्भिः परस्परं स्नेहगौरवाभिमुखैः शीलसमुदाचारेष्वशिथिला-दारैर्वेदाध्ययनपरैर्मित्रातिथिस्वजनप्रणयवत्सलैर्धर्मपरायणैर्भूत्वा सम्यग्गृहमध्यावस्तव्यम्

विनयश्लाघिभिर्नित्यं स्वाध्यायाध्ययनोद्यतैः।
प्रदानाभिरतैः सम्यक्परिपाल्यो गृहाश्रमः ।।३।।

एवं हि वः स्याद्यशसः समृद्धिधर्मस्य चार्थस्य सुखास्पदस्य।
मुखावगाहश्च परोऽपि लेकस्तदप्रमत्ता गृहमावसेत् ।।४।।

अथास्य भ्रातरः प्रव्रज्यासंकीर्तनाद्वियोगाशङ्काव्यथितमनसः शोकाश्रुदुर्दिनमुखाः प्रणम्यैनमूचुः। नार्हत्यत्रभवान्पितृवियोगशोकशल्यव्रणमसंरूढमेव नो घट्टयितुमपरेण दुःखाभिनिपातक्षारेण।

अद्यापि तावत्पितृशोकशल्यक्षतानि रोहन्ति न नो मनांसि।
तत्साध्विमां संहर धीर बुद्धिं मा नः क्षते क्षारमिवोपहार्षीः।।५।।

अथाक्षमं वेत्सि गृहानुरागं श्रेयः पथं वा वनवाससौख्यम् ।
अस्माननाथानपहाय गेहे कस्माद्वनं वाञ्छसि गन्तुमेकः ।।६।।

तद्यात्रभवतो गतिः सास्माकम्। वयमपि प्रव्रजाम इति ।। बोधिसत्त्व उवाच।

अनभ्यासाद्विवेकस्य कामरागानुवर्तिनः।
प्रपातमिव मन्यन्ते प्रव्रज्यां प्रायशो जनाः ।।७।।

इति मया निगृह्य नाभिहिताः स्थ प्रव्रज्याश्रयं प्रति जानतापि गृहवनवासविशेषम्। तदेतच्चेदभिरुचितं भवतामेव प्रव्रजाम इति।। ते सप्तापि भ्रातरो भगिन्यष्टमाः स्फीतं गृहविभवसारमश्रुमुखं च मित्रस्वजनबन्धुवर्गे विहाय तापसप्रव्रज्यया प्रव्रजिताः। तदनुरक्तहृदयश्चैनान्सहाय एको दासी दासश्चानुप्रव्रजिताः। ते ऽन्यतरस्मिन्महत्यरण्यायतने ज्वलितमिव विकसितकमलवनशोभया विहसदिव च फुल्लकुमुदवनैरनिभृतमधुकरगणममलनीलसलिलं महत्सरः संनिश्रित्य प्रविविक्तमनोज्ञासु छायाद्रुमसमुपगूढा स्वसंनिकृष्टविनिविष्टासु पृथक्पृथक्पर्णशालासु व्रतनियमपरा ध्यानानुयुक्तमनसो विजह्रुः।पञ्चमे पञ्चमे दिवसे बोधिसत्त्वसमीपं धर्मश्रवणार्थमुपजग्मुः। स चैषां ध्यानोपदेशप्रवृत्तां कामादीनवदर्शनीं संवेजनीयां

प्रविवेकसंतोषवर्णबहुलां कुहनलपनकौसीद्यादिदोषविगर्हणीमुपशमप्रसादपद्धतिं तां तां धर्म्यां कथां चकार। सा चैनान्दासी बहुमानानुरागवशा तथैव परिचचार। सा तस्मात्सरसो बिसान्युद्धृत्य महत्सु पद्मिनीपर्णेणु शुचौ तीरप्रदेशे समान्विन्यस्य च भागान्काष्टसंघट्टनशब्देन कालं निवेद्यापक्रामति स्म। ततस्तेषामृषीणां कृतजपहोमविधीनां यथावृद्धमेकैकोऽभिगम्य ततो बिसभागमेकैकं यथाक्रममादाय स्वस्यांस्वस्यांपर्णशालायं विधिवत्परिभुज्य ध्यानाभियुक्तमतिर्विजहार। त एवंप्रवृत्ता नैव परस्परं ददृशुरन्यत्र धर्मश्रवणकालात्।। तेषामेवंविधेन निरवद्येन शीलवृत्तसमुदाचारेण प्रविवेकाभिरत्या ध्यानप्रवणमानसतया च सर्वत्र यशः समुपश्रुत्य शक्रो देवानामिन्द्रस्तत्परीक्षानिमित्तं तत्राभिजगाम। तच्चैषां ध्यानाभिमुखत्वं कुकार्येष्वप्रङ्गमनुत्कण्ठां प्रशमाभिरामं चावस्थानमवेक्ष्य स्थिरतरगुणसंभावनस्तत्परीक्षानिमित्तमवहितमना बभूव।

अनुत्सुको वनान्तेषु वसञ्छमपरायणः ।
आरोपयति साधूनां गुणसंभावनां हृदि ।।८।।

अथ द्विपकलभदशनपाण्डुकोमलानि समुद्धृत्य प्रक्षाल्य च बिसानि मरकतहरितप्रभेषु पद्मिनीपत्रेषु कमलदलकेशरोपहारालंकृतान्विरचय्य समान्भागान्काष्ठसंघट्टनशब्देन निवेद्य कालं तेषामृषीणामपमृतायां तस्यां दास्यां बोधिसत्त्वपरीक्षार्थं शक्रो देवानामिन्द्रः प्रथममेव बिसभागमन्तर्धापयामास।

प्रवर्तने हि दुःखस्य तिरस्कारे सुखस्य च ।
धैर्यप्रयामः साधूनां विस्पुरन्निव गृह्यते ।।९।।

अथ बोधिसत्त्वोऽभिगतः प्रथमे बिसभागस्थाने बिसभागविरहितं पद्मिनीपत्रं परिव्याकुलीकृतोपहारमभिसमीक्ष्य गृहीतः केनापि मे बिसप्रत्यंश इत्यवधृतमतिरपेतचेतःसंक्षोभसंरम्भस्तत एव प्रतिनिवृत्य प्रविश्य पर्णशालायां यथोचितं ध्यानविधिमारेभे। वैमनस्यपरिहारार्थं चेतरेषामृषीणां तमर्थं न निवेदयामास। इतरे त्वस्य

भ्रातरो नूनमनेन गृहीतः प्रत्यंश इति मन्यमाना यथोचितानेव स्वान्स्वाननुक्रमेण बिसभागानादाय यथास्वं पर्णशालासु परिभुज्य ध्यायन्ति स्म। एवं द्वितीये तृतीये चतुर्थे पञ्चमे च दिवसे शक्रस्तस्य त विसप्रत्यंशमुपनिदधे। बोधिसत्त्वोऽपि च महासत्त्वस्तथैव निःसंक्षोभप्रशान्तचित्तो बभूव।

मनःसंक्षोभ एवेष्टो मृत्युर्नायुःक्षयः सताम्।
जीवितार्थेऽपि नायान्ति मनःक्षोभमतो बुधाः ॥१०॥

अथापराह्नसमये धर्मश्रवणार्थमृषयस्ते यथोचितं बोधिसत्त्वस्य पर्णशालां समभिगता ददृश्वांसश्चैनं कृशतरशरीरं परिक्षामकपोलनयनं परिम्लानवदनशोभमसंपूर्णस्वरगाम्भीर्यं परिक्षीणमप्यपरिक्षीणधर्यप्रशमगुणसमभिनवेन्दुप्रियदर्शनमुपेत्योपचारपुरःसरंससंभ्रमाः किमिदमिति कार्श्यनिमित्तमेनमपृच्छन्। तेभ्यो बोधिसत्त्वस्तमर्थं यथानुभूतं निवेदयामास। अथ ते तापसाः परस्परमीदृशमनाचारमसंभावयन्तस्तत्पीडया च समुपजातसंवेगाः कष्टं कष्टमित्युक्त्वा व्रीडावनतवदनाः समतिष्ठन्त शक्रप्रभावाच्च समावृतज्ञानगतिविषयाः कुत इदमिति न निश्चयमुपजग्मुः। अथ बोधिसत्त्वस्यानुजो भ्राता स्वमावेगमात्मविशुद्धिं च प्रदर्शयञ्छपथातिशयमिमं चकार।

समृद्धिचिह्नाभरणं स गेहं प्राप्नोतु भार्यां च मनोऽभिरामाम्।
समयतामेतु च पुत्रपौत्रैर्बिसानि ते ब्राह्मण यो ह्यहार्षीत्
॥११॥

अपर उवाच –

मालाः स्रजश्चन्दनमंशुकानि बिभ्रद्विभूषाश्च सुताभिमृष्टाः।
कामेषु तीव्रां स करोत्वपेक्षां बिसान्यहार्षीद्द्विजमुख्य यस्ते ॥१२॥

अपर उवाच –

कृष्याश्रयावाप्तधनः कुटम्बी प्रमोदमानस्तनयप्रलापैः।
वयोऽप्यपश्यन्नमतां स गेहे बिसानि यस्ते सकृदप्यहार्षीत्
॥१३॥



अपर उवाच—

नराधिपैर्भृत्यविनीतचेष्टैरभ्यर्च्यमानो नतलोलचूडैः ।
कृत्स्नां महीं पातु स राजवृत्त्या लोभादहार्षीत्तव यो बिसानि ।।१४।।

अपर उवाच –

पुरोहितः सोऽस्तु नराधिपस्य मन्त्रादिना स्वस्त्ययनेन युक्तः ।
सत्कारमाप्नोतु तथा च राज्ञस्तवापि यो नाम बिसान्यहार्षीत् ।।१५।।

अपर उवाच –

अध्यापकं सम्यगधीतवेदं तपस्विसंभावनया महत्या ।
अर्चन्तु तं जानपदाः समेत्य बिसेषु लुब्धे न गुणेषु यस्ते ।।१६।।

सहाय उवाच –

चतुःशतं ग्रामवरं समृद्धं लब्ध्वा नरेन्द्रादुपयातु भोक्तुम् ।
अवीतरागो मरणं स चैतु लोभं बिसेष्वप्यजयन्न यस्ते ।।१७।।

दास उवाच—

स ग्रामणीरस्तु सहायमध्ये स्त्रीनृत्तगीतैरुपलाप्यमानः ।
मा राजतश्च व्यसनानि लब्ध बिसार्थमात्मार्थमशीशमद्यः ।।१८।।

भगिन्युवाच।

विद्योतमानां वपुषा श्रिया च पत्नीत्वमानीय नराधिपस्ताम् ।
योषित्सहस्राग्रसरीं करोतु यस्त्वद्विधस्यापि बिसान्यहार्षीत् ।।१९।।

दास्युवाच ।

एकाकिनी सा समतीत्य साधून्स्वादूपभोगे प्रणयं करोतु ।
सत्कारलब्धा मुदमुद्वहन्ती बिसान्यपश्यत्तव या न धर्मम् ।।२०।।

अथ तत्र धर्मश्रवणार्थे समागतास्तद्वनाध्युषिता यक्षद्विरदवानरास्तां कथामुपश्रुत्य परां व्रीडां संवेगं चोपजग्मुः ।। अथ यक्ष

आत्मविशुद्धिप्रदर्शनार्थमिति शपथमेषां पुरतश्चकार।

आवासिकः सोऽस्तु महाविहारे कचङ्गलायं नवकर्मिकश्च ।
आलोकसन्धिं दिवसैः करोतु यस्त्वय्यपि प्रस्खलितो बिसार्थम्
।।२१।।

हस्त्युवाच ।

षड्भिर्दृढैः पाशशतैः स बन्धं प्राप्नोतु रम्याच्च वनाज्जनान्तम्।
तीक्ष्णाङ्कुशाकर्षणजा रुजश्च यस्ते मुनिश्रेष्ठ बिसान्यहार्षीत्
।।२२।।

वानर उवाच ।

स पुष्पमाली त्रपुघृष्टकण्ठो यष्ट्या हतः सर्पमुखं परैतु ।
वैकक्ष्यबद्धश्च वसेद्गृहेषु लौल्यादहार्षीत्तव यो बिसानि ।।२३।।

अथ बोधिसत्त्वस्तान्सर्वानेवानुनयविनीताक्षरं शान्तिगाम्भीर्यसूचकमित्युवाच।

यो नष्टमित्याह न चास्य नष्टमिष्टान्स कामानधिगम्य कामम् ।
उपैतु गेहाश्रित एव मृत्युं भवत्सु यः शङ्कत ईदृशं वा।।२४।।

अथ शक्रो देवेन्द्रस्तेन तेषां कामोपभोगप्रातिकूल्यसूचकेन शपथातिशयेन समुत्पादितविस्मयबहुमानः स्वेनैव वपुषाभिज्वलता तानृषीनभिगम्य सामर्षवदुवाच। मा तावद्भोः।

यत्प्राप्तिपर्युत्सुकमानसानां सुखार्थिनां नैति मनांसि निद्रा।
यान्प्राप्तुमिच्छन्ति तपः श्रमैश्च तान्केन कामानिति कुत्सयध्वे
।।२५।।

बोधिसत्त्व उवाच । अनन्तादीनवा मार्ष कामाः। संक्षेपतस्तु श्रूयतां यदभिसमीक्ष्य कामान्न प्रशंसन्ति मुनयः।

कामेषु बन्धमुपयाति वधं च लोकः
शोकं क्लमं भयमनेकविधं च दुःखम् ।
कामार्थमेव च महीपतयः पतन्ति
धर्मोपमर्दरभसा नरकं परत्र ।।२६।।

यत्सौहृदानि सहसा विरसीभवन्ति
यन्नीतिशाठ्यमलिनेन पथा प्रयान्ति ।
कीर्त्या वियोगमसुखैः परतश्च योगं
यत्प्राप्नुवन्ति ननु कारणमत्र कामाः ।।२७।।

इति हीनविमध्यमोत्तमानामिह चामुत्र च यद्वधाय कामाः ।
कुपितान्भुजगानिवात्मकामा मुनयस्तानिति शक्र नाश्रयन्ते ।।२८

अथ शक्रो देवानामिन्द्रस्तस्य तद्वचनं युक्तमित्यभिनन्द्य तेन चैतेषामृषीणां माहात्म्येनाभिप्रसादितमनास्तेभ्यः स्वमपराधमाविश्चकार।

गुणसंभावनाव्यक्तिर्यत्परीक्ष्योपलभ्येत् ।
मया विनिहितान्यस्मात्परीक्षार्थे बिसानि वः ।।२९।।

तत्सनाथं जगद्दिष्ट्या मुनिभिस्तथ्यकीर्तिभिः ।
विशुद्धिः स्थिरचारित्रे तदेतानि बिसानि ते ।।३०।।

इत्युक्त्वा तानि बिसानि बोधिसत्त्वस्य समुपजहार। अथ बोधिसत्त्वस्तदस्यासमुदाचारधाष्ट्यें तेजस्विनिभृतेन वचसा प्रत्यादिदेश।

न बान्धवा नैत वयं सहाया न ते नटा नापि विडम्बकाः समः ।
कस्मिन्नवष्टभ्य नु देवराज क्रीडापथेनैवमृषीनुपैषि ।।३१।।

इत्युक्ते शक्रो देवेन्द्रः ससंभ्रमापास्तकुण्डलकिरीटविद्युदुद्भासुरवदनः सबहुमानमभिप्रणम्यैनं क्षमयामास।

उक्तप्रयोजनमिदं चापलं मम निर्मम ।
पितेवाचार्य इव च क्षन्तुमर्हति तद्भवान् ।।३२।।

निमीलितज्ञानविलोचनानां स्वभाव एष स्खलितुं समेऽपि।
क्षमां च तत्रात्मवतां प्रपत्तुमतोऽप्यदश्चेतसि मा स्म कार्षीः ।।३३।।

इति क्षमयित्वा शक्रस्तत्रैवान्तर्दधे ।।

तदेवं प्रविवेकसुखरसज्ञानां विडम्बनेव विहिंसेव च कामाः प्रतिकूला भवन्ति ।। [तच्चेदं जातकं भगवान्व्याकार्षीत्।]

अहं शारद्वतीपुत्रो मौद्गल्यायनकाश्यपौ ।
पूर्णनिरुद्धावानन्द इत्यासुर्भ्रातरस्तदा ।।३४।।
भगिन्युत्पलावर्णासीद्दासी कुब्जोत्तराभवत्।
चित्रो गृहपतिर्दासो यक्षः सातागिरिस्तटा ।।३५।।
पाटिलेशोऽभवन्नागो मधुदातैव वानरः ।
कालोदायी च शक्रोऽभूद्धार्यतामिति ।

# वेतालपञ्चविंशतिः

## प्रथमा कथा

अस्ति त्रिदिवतरङ्गिणी वाराणसी। तत्र प्रतापमुकुटो नाम राजा बभूव। तस्य महादेवी सोमप्रभा नाम। तस्यामनने राज्ञा वज्रमुकुटो नाम तनयः समुत्पादितः। तस्य वज्रमुकुटस्य प्राणसमः सखा सागरेश्वरस्य सान्धिविग्रहिकस्य तनयो बुद्धिशरीरो बभूव। तेन मित्रवरेण सह नानाशास्त्राभ्यासं कुर्वाणो विविधसुखमनुभवन् कालं नयमानस्तस्थौ।

अथैकदा तं बुद्धिशरीरं मित्रमादाय हयवरमारुह्य मृगान्वेषणाय कौतुकवशाद्वनं प्रविवेश। ततो मृगान्वेषणश्रान्तः क्षुत्पिपासार्दितो वज्रमुकुटो बुद्धिशरीरमब्रवीत्। सखे सरोवरमालोकय। तत्र स्नात्वा मृणालादिकं खादित्वा क्षुधोपमशनं कृत्वा सुस्थौ भवावः। घोटकावपि पानीयं पीत्वा समर्थौ भवेताम्। ततस्तत्र गत्वा स्नानमाचर्य जलपानं कृत्वा सरस्तीरे मित्रेण सह कथालापं कुर्वन्मृणालादिकं खादन् कुमारः क्षणं विशश्राम।

अत्रान्तरे तत्सरोवरं स्नातुमेका कन्या त्रैलोक्यमोहिनी सखीशतपरिवृता समागतवती। तामालोक्य वज्रमुकुटो मदनपीडितोऽभवत्। सापि वज्रमुकुटस्य सौन्दर्यमालोक्य कामशरहता सती स्वाभिप्रायमुपायेन दर्शितवती। निजशेखरोत्पलादेकमुत्पलमाकृष्य कर्णार्पितं कृत्वा दन्तहतं विधाय हृदये पद्ममेकमारोप्य जलक्रीडां समाप्य स्वस्थानं ययौ।

तस्यां गतायां वज्रमुकुटं मूर्छितमवलोक्य बुद्धिशरीरो वदति। सखे

किमेतत्। कुमारः कथयति। येयमत्र स्नानार्थमागता सा मम प्राणान् गृहीत्वा गतवतीति विषण्णः स्थितः। ततो बुद्धिशरीरेणोक्तम्। कातरो मा भव। सापि कामपीडिता स्वाभिप्रायं दर्शयित्वा गतास्ते। कुमारेणोक्तम्। केन हेतुना भवता लक्षितमिदम्। बुद्धिशरीरः कथयति। मित्र, निजशेखरादुत्पलमेकं कर्णे तयाकृष्य यदर्पितं तेनाभिप्रायेण शेखरदेशस्य राजा कर्णोत्पलनामेति विज्ञापितम्। तदुत्पलं चेद् दन्तहतं विहितं तेन दन्ताघातसान्धिविग्रहिकस्य तनया। अपरं पद्ममेकं हृदये समारोप्य गता। तेनाभिप्रायेण पद्मावतीनामधेया। इति प्रबोधितः कुमारो वदति। सखे क्षिप्रं तत्र गम्यताम्।

ततो युवराजमादाय बुद्धिशरीरो गत्वा—तत्र वृद्धादासी स्थिता—तस्याः प्रीतिमुत्पाद्य तत्रैवावासस्थानमकरोत्। तयोक्तं तदा। कौ भवन्तौ किमर्थं वात्रागतौ। तया पृष्टौ तावभिहितौ। अयि वृद्धे, राजप्रत्रावावाम्। पर्यटनशीलावत्रायातौ। अयि वृद्धे, तवावस्था कथमे तादृशी तत् कथ्यताम्। ततः सा रुदती ब्रूते। दन्ताघातस्य सान्धिविग्रहिकस्य दुहितुः पद्मावत्या धात्रीस्वसाऽहम्। तया भगिन्या सह कलहमकार्षम्। ततः पद्मावत्या कोपेन महच्चं किञ्चिन्न दीयते। विशेषतश्च पुत्रो मे द्यूतकारः सर्वस्वं विनष्टं कृत्वा पलायितः। एतेन मम भक्तवस्त्रं न सिध्यति। युवयोर्धर्मशीलयोरखिलमेव कथितं मया। तच्छ्रुत्वा परिधानवस्त्रं दत्त्वा ताभ्यामुक्तम्। अयि वृद्धे, आवयोः कपर्दकेन द्रव्यादिकमानीय देहि। तव पोषणमावाभ्यां कर्तव्यम्। ततस्तया प्राप्तवस्त्रया द्रव्यादिकमानीय दत्तम्। एवंविधिना नित्यमेव वृद्धा तयोः सेवामाचरति।

अथ तस्यां प्रीतायामेकदा बुद्धिशरीरेणोक्तम्। अयि वृद्धे मम ताम्बूलपुष्पं गृहीत्वा पद्मावत्याः स्थानं गच्छ। ममैतद् द्रव्यादिकमालोक्य त्वां प्रति कोपं त्यक्ष्यति। द्रव्यादिकं दत्त्वा वदिष्यसि। त्वया सरोवरतीरे यौ कुमारै समालोकितौ तावागतौ सतः। ततो वृद्धा

गत्वा तस्यै तद् द्रव्यादिकमदात्। रहस्यं च जगाद। ततःपद्मावती कोपान्विता सती कर्पूरेण तस्या वदनं निजदशभिरङ्गुलीभिरङ्कितवती। ततो वृद्धा गृहमागत्यासुखिनी भूत्वा बुद्धिशरीरे वृत्तान्तं निवेदयामास। तच्छ्रुत्वा वज्रमुकुटो मूर्छित इव भूमौ निपपात। बुद्धिशरीरो वृद्धां तोषयित्वा मित्रमपि प्रबोधयति। सखे कातरो मा भव। कार्यसिद्धिरास्ते। सा वृद्धावदनं कर्पूरेण दशभिरङ्गुलीभिर्यदङ्कितवती तेन ज्ञापयति। शुक्लादशमीयम्। शुक्लपक्षमपेक्षयेति।

अथ कृष्णपक्षे समायाते ताम्बूलपुष्पं दत्वा तस्याः स्थानं वृद्धां प्रेषयामास। वृद्धा तस्यै ताम्बूलादिकं दत्वा रहस्यं जगाद। ततः क्रुद्धा सा तस्या वदनेऽङ्गुलित्रयेण कुङ्कुमं दत्तवती। ततो रुदती सा गृहमागत्य तस्याश्चेष्टां तयोः कथितवती। सा च बुद्धिशरीरेण तोषेण वचनामृतेनाप्यायिता। कुमारो वदति। सखे कार्यसिध्दिर्न भूता। बुद्धिशरीरेणोक्तम्। मित्र, वृद्धावदने यत्तया मसृणकुङ्कुमसहितमङ्गुलित्रयं दत्तं तेनात्मनोऽद्यर्तुकालतां ज्ञापितवती।

अथ दिनत्रये गते सति तेन तेन प्रकारेण तस्याः स्थानं सा प्रस्थापिता। पद्मावती च वृद्धामवलोक्य सखीरादिदेश, दौवारिकं च पुरद्वारमवरोद्धुम्। एषा वृद्धा दासी शतैकेन हन्यताम्। वाटिकायामियमशोकवृक्षप्रदेशे प्राचीरस्योत्तरवर्त्मना निःसार्यतां भवतीभिरिति। सा वृद्धा ताभिस्तेनैव मतेन निःसारिता। सा च गृहमागत्य युवराजयो रहस्यं निगदितवती। तच्छ्रुत्वा बुद्धिशरीरो ब्रूते। पद्मावत्या भवतो गमनार्थं व्याजेन पन्था दर्शितः। तदद्य तया सह तव क्रीडा भविष्यति। ततो बुद्धिशरीरेण प्रस्थपितो वज्रमुकुटो वृद्धानिःसारणाभिव्यक्तीभूतेन पथा समुपागत्य पद्मावत्या सममशेषसुखमनुभवंस्तस्थौ। तस्या गुणग्रामं बुद्धिशरीरे नित्यमागत्य कथयति।

अथैकदा पद्मावत्योक्तम्। प्राणेश्वर, दिवसे क्व गतस्तिष्ठति भवान्। तच्छ्रुत्वा कुमारेणोक्तम्। मम प्राणसमः सखा बुद्धिशरीरो यत्रास्ते। तच्छ्रुत्वा पापकारिण्या मनसेति चिन्तितम्।

यदि विचक्षणोऽस्ति मम प्राणेश्वरमादाय स्वदेशं यास्यति। तदाहमेतस्य विरहे कथं जीवयिष्यामि। ततस्तं निहत्य कालं नयामि। ततो महतादरेण विषसहितद्रव्यं बुद्धिशरीराय प्रस्थापितवती। बुद्धिशरीरो मतिमान् द्रव्यमवलोक्यावगततत्त्वो मित्राय ज्ञापयामास। मित्र, अत्र स्थातुमिदानीं न युनक्ति। कुमारेणोक्तम्। कथमेतद्वद। मित्र, विषसहितभक्ष्यद्रव्यमवलोकय। ततो विचार्य तद्भक्षणमात्रेण जन्तुमेकं मृतमवलोक्य वज्रमुकुटो ब्रूते। मित्र, पापिष्ठामेतां निहत्य स्वदेशो गन्तव्य;। बुद्धिशरीरो ब्रूते। मित्र, नेयं वध्या यतो भवत्सु स्त्रविधहेतुः। तस्माद् बुद्ध्येयं स्वदेशे नेतव्या। कुमारेणोक्तम्। कथमेतत् संभवति। अनेनोक्तम्। उपायं करिष्यामि।

इत्येव काले कर्णोत्पलस्य राज्ञः शिशुः सुन्दरो डाकिन्या खादितः। उपायावसरं प्राप्य बुद्धिशरीरो वज्रमुकुटमब्रवीत्। सखे त्वमद्य गत्वा पद्मावत्या सममशेषक्रीडां कृत्वा तस्यां निद्रां गतायां सर्वाभरणमादाय लौहशलाकया तद्दक्षिणोरौ रेखात्रयं कृत्वा मत्समीपमार्गमिष्यसीति। अहं श्मशानं गत्वा योगिनो वेषधारी भवामि। इत्युक्त्वा बुद्धिशरीरो धुस्तूरादिकेन मोदकं कृत्वा तेनैव प्रकारेण वज्रमुकुटं प्रस्थापितवान्। वज्रमुकुटोऽपि तत्सर्वं समाचरितवान्। वज्रमुकुटस्तत्र गत्वाशेषरतिक्रीडां कुर्वन् धुस्तूरादिकरचितमोदकं तां भक्षयितवान्। सापि तत् खादित्वा निर्भयं निद्रां गतवती। अत्रावसरे वज्रमुकुटो लौहशलाकया तस्या दक्षिणोरौ रेखात्रयं दत्वा नानालङ्कारमादाय बुद्धिशरीरसमीपं समागतः।

ततः सा पद्मावती प्रबोधं संप्राप्य वज्रमुकुटहीनां शय्यामवलोक्य बहुविधं विलपन्ती सर्वालङ्कारहीना कथमपि प्रातरुत्थाय पितरमब्रवीत्। तात मम सर्वालङ्कारश्चौरेणाद्यापहृतः। सान्धिविग्रहिकोऽपि राजानं ज्ञापयामास। ततो राजा चौरान्वेषणाय दुःसाधुमादिदेश।

तस्मिन्नेव समये बुद्धिशरीरो वज्रमुकुटमब्रवीत्। सखे स्वर्ण-

वणिग्गृहं गत्वालङ्कारं विक्रीणातु भवान्। ततश्चौरं कृत्वा कोऽपि त्वामाकर्षति। तदा वदिष्यसि। नाहं चौरः। किन्तु योगिनोऽलङ्कारविक्रयमाचरामि। यदि मद्वचने सम्प्रत्ययो नास्ति तदा श्मशानवासिनं योगिनमुपगम्य प्रतिसन्धानं कुरु। स यद्येतन्नाङ्गीकरोति तदा समुचितं फलं दास्यसि। इति निगद्य तमादाय मत्समीपमागमिष्यसि। भवति मत्समीपमागते मया तस्योत्तरं दातव्यम्।

ततस्तदुपदेशेन स्वर्णवणिग्गृहं गतवान्तमलङ्कारं विक्रीणानं चौरान्वेषणं कुर्वाणो वज्रमुकुटं घृतवान्। अयं त्वं चौरोऽसि कृत्वा दुःसाधू राजानं ज्ञापयामास। देव, पद्मावत्याः सर्वाभरणसमेतश्चौरोऽयं प्राप्तः। राजा च तस्य शिरच्छेत्तुमादिदेश। अथ वज्र-मुकुटो वदति। देव, नाहं चौरः। किन्तु योगिनोऽलङ्कारविक्रयं करोमि। स योगी श्मशाने विद्यते। किन्तु विनापराधेन मयि हते सति भवतो महानधर्मो भविष्यति राज्यनाशश्च। किन्तु मद्वचनं सत्यं नवेति श्मशानं गत्वा योगिनं पृच्छ। स यद्येतन्नाङ्गीकरोति तदा चौरफलं दास्यसि।

ततो राजाज्ञया समानीय स योगी पृष्टो ब्रूते। देव, ममैव धनमेतत्। एतद् विक्रेतुमयं मया प्रयत्नेन प्रस्थापितः। तच्छ्रुत्वा राजा वदति। किमहो पद्मावत्याभरणमिदं भवता कुत्र प्राप्तम्। योगी वदति। देव, मय्यत्रावस्थिते कृष्णचतुर्दशीरात्रौ सर्वालङ्कारभूषिता मृतनृपबालककृताशना कन्या रूपयौवनसम्पन्ना डाकिनीवेषधारिण्यलङ्कारं श्मशाने स्थापयित्वा मस्तके सन्धानं वहति। तां नृप पुत्रखादिनीमवलोक्य लोहशलाकया दक्षिणोरौ रेखात्रयं चिह्नं दत्वा सकलरत्नाभरणं मयानीतम्। तद्यस्याभरणमिदं तस्या दक्षिणोरौ रेखात्रयमवलोकयतु देव।

ततो योगिनो वचनेन समधिगततत्त्वो राजा पुत्रमरणाभिरोषे पद्मावतीं डाकिनीं निश्चित्य हन्तुमुद्यतोऽभवत्। ततो योगी राजानं वदति। देव, भवान् महामहो स्त्रीवधं न करिष्यति। विशेषतश्च

समाधिदृष्ट्या मया ज्ञातम्। अस्याः पापिष्ठायाः शोणिताश्रुपातं यत्र भवति तत्राचिरेणैवाकल्याणं भवति। ततो भवता प्रतीत्यारण्यं निर्वास्यतामिति। ततः स राजा योगिनो वचनमकार्षीत्। ततः पद्मावतीमादाय युवराजादयः स्वदेशं गतवन्तः। ततः पद्मावत्याः शोकेन सान्धिविग्रहिको दन्ताघातः सपत्नीकः परलोकमगात्।

वद राजन्। तस्य सभार्यस्य वधः कुत्र भविष्यति। राजा वदति। शृणु रे वेताल। असम्यग्विचारणया तस्य सपत्नीकस्य वधो राजनि कर्णोत्पले भवति। नृपताविति वादिनि स वेतालः शिंशपावृक्षे पुनर्ललाग।

## द्वादशी कथा

अथ राज्ञा पुनरानीयमानो वेतालः कथामपरां कथयति।

देव, कुसुमपुरनामधेयं नगरमेकमासीत्। तत्र देवस्वामी नाम ब्राह्मणः प्रतिवसति। तस्य पुत्रो हरिस्वामी नामाभूत्। सुता च विलासवती भूता। सा कन्या देवस्वामिना पार्श्ववर्तिने सोमशर्मनाम्ने विप्राय विवाहेन दत्ता। स ब्राह्मणस्तया सह विविधसुखमनुभवंस्तिष्ठति। अथैकदा विलासवत्या सह सोमशर्मा सौधपृष्ठे रतिक्रीडामाचर्य निर्भरनिद्रां जगाम। इत्येवकाले मदनवेशधरो नाम विद्याधर एकस्तस्मिन्नागतः सौन्दर्यनिर्जितविद्याधरीमपहृत्य विद्यापुरं जगाम।

सोमशार्म च तां नावलोक्य नानाप्रयत्नेन नासाद्य देशान्तरमकरोत्। इतस्ततो भ्राम्यन् बुभुक्षितः सन् पद्मनाभस्य गृहमगमत्। पद्मनाभो यत्नेन ब्राह्मणीमब्रवीत्। वल्लभे अयं ब्राह्मणो महात्मा यत्नेन पूजयितव्यः। इत्युक्त्वा स राजस्थानमगमत्। मन्त्रिनिदेशान्मन्त्रिपत्न्या गृहमागच्छेत्यभ्यर्थिनी ब्राह्मणो ब्रूते। मातरत्र मयैकाकिना न भोक्तव्यम्। यदन्नं मह्यं दातव्यं

तद्दीयताम्। तदहं पुष्करिणीसमीपमागत्य भक्षयामि। तया निवारितोऽपि भक्ष्यद्रव्यमादाय पुष्करिणीं गत्वा तद् वृक्षमूले संस्थाप्य जलमानेतुमगात्। इत्येवकाले श्येनेनानीय खाद्यमानस्य सर्पस्य गरलं तद्द्रव्ये निपतितम्। जलमानीय ब्राह्मणस्तद् भक्ष्यद्रव्यं विषमिश्रितमज्ञानतो जग्ध्वा परलोकमगात्। ततः पद्मनाभः पत्न्यै चुकोप। सा ब्रूते। प्रभो, न ज्ञात्वा मयि कोषं मा करोतु भवान्। बहुतरयत्नेन मया निवारितो गृहे भोजनमकृत्वा द्रव्यमादाय लज्जया गतः। मम को दोषः। ततः पद्मनाभः परितापमकरोत्।

वद राजन्। सोमशर्मणो वधः किं श्येने किं वा मन्त्रिणि मन्त्रिपत्न्यां वा मदनवेषधरविद्याधरे वा भवति। राजा वदति। शृणु रे वेताल। श्येनस्य सर्प एव भक्ष्य एतेन तत्र न वधः। मन्त्रिपत्न्यादरेण नानायत्नेन भोक्तुमभ्यर्थितोऽन्यत्र भोक्तुं निवारितः। तेन तस्यामपि न वधः। किन्तु मदनवेषधरविद्याधरपद्मनाभमन्त्रिणोरेवास्य वधो भवति, एकस्मिन् विलासवतीहरणादपरस्मिन् मन्दादरत्वात्। इतिवादिनि भूपाले वेतालः पुनः शिंशपावृक्षे ललाग।

## त्रयोदशी कथा

अथ पुनरानीयमानो वेतालः कथामपरां कथयति।

देव, उत्तरस्यां दिशि नयपालो नाम राजा बभूव। तस्य पद्मावत्यां पत्न्यां रूपयौवनसम्पन्ना शशिप्रभा नाम कन्यासीत्। एकदा चैत्रबलिमहोत्सवे सखीवृन्दपरिवृता क्रीडावापीं गता। तथा च भट्टपुत्रो मनःस्वामी नाम तामालोक्य कामपीडितोऽभवत्। ततः पौरजनस्य पुत्रः समागत इति सखीभ्यः श्रुत्वा क्रीडावापीं विहाय सा नदीमगमत्। भट्टपुत्रोऽपि तत्र गत्वा जले निमज्ज्य स्थितः। अत्रान्तरे सखीभिः सह जलक्रीडामारब्धवत्यास्तस्याः केशविगलितकुसुमं स्रोतसा चलितमासाद्य निजदेहे तापोपशमनार्थमारोप्यैकदृष्ट्या तामालोक्यानिर्वचनीयसुखमनुभवंस्तिष्ठति। सापि मनःस्वामिनोऽतिसौन्दर्यमालोक्य सानुरागिणी बभूव।

तत्र हस्तिनीशतं जलमज्जनार्थमगमत्। तदभ्यन्तरे हस्तिनीमेकामालोक्य मत्तकुञ्जर एक आगत्य मिलितः। तद्भयात् शशिप्रभायाः सर्वे रक्षकजनाः पुरुषाः सख्यश्च सर्वास्तामपहाय पलायिताः। तदानीमेकाकिनीं स्थितां तामागत्य मनःस्वामी निर्भरं परिरभ्य दूरं नीतवान्। करिणीषु गतासु मत्तकुञ्जरे च गते रक्षकपुरुषाः सख्यश्च शशिप्रभास्थानमाजग्मुः। तदा सखीभिर्मनःस्वामिनं ध्यायन्ती कथमपि स्वगृहं प्राप्तवती मनःस्वामी च तां ध्यायन् सर्वभोगानपहाय विषसाद। तं तथाविधमालेक्य शशिदेवमूलदेवाभ्यामुक्तम्। अयं मनःस्वामी विरहव्याकुल इव लक्ष्यते। शशिदेवेन पृष्टो मनःस्वामी सकलवृत्तान्तमवदत्। तच्छ्रुत्वा मूलदेवेनोक्तम्। मनःस्वामिन्, त्वमस्माभिः सहागच्छ। तवाभिलषितसिद्धिमावां करिष्यावः। ततो मनःस्वामी तयोः किङ्करकल्पो भूत्वा ताभ्यां सह स्थितः।

एकदा मूलदेवो मनःस्वामिनमब्रवीत्। भट्टपुत्र, तुभ्यमहमेकां विद्यां ददामि यया स्त्रीरूपं पुरुषरूपं च धार्यते। ततस्तामासाद्य मनःस्वामी सहसा कुमारीवेषधरोऽभत्। अथ कुमारीवेषधरमादाय वृद्धब्राह्मणरूपं विधृत्य मूलदेवो धूर्तवरो नयपालनृपतेरन्तिकं जगाम। गत्वा ब्रूते। महाराज, वृद्धब्राह्मणोऽहम्। इयं कुमारी मदीयपुत्रवधूर्भविष्यति। अनया प्रतिज्ञातमिति—उज्जयिन्यां गत्वा यः पुरुषो भगवन्तं महाकालमर्चयित्वायाति तस्यैवाहं पत्नी भवामीति। एतेन हेतुना मम पुत्र उज्जयिन्यां भगवन्तं महाकालमर्चयितुं गत्वास्ते। स यावदायाति तावदियं कुमारी भवतो दुहितुः शशिप्रभाया मन्दिरे तिष्ठतु । तेनैवास्या रक्षा भविष्यति। अहमस्या रक्षणाक्षमो वृद्धः। ततो राज्ञा स्वीकृतम्—तावदियं शशिप्रभया सह सुखेन तिष्ठतु। तदा शशिप्रभाया गृहे तां समर्प्य स वृद्धब्राह्मणः स्वगृहमगमत्।

तदारभ्य कुमारीवेषधरो मनःस्वामी शशिप्रभया सह नानाविश्रब्धालापं कुर्वंस्तिष्ठति। एकदा शशिप्रभामब्रवीत्। सखि, तवाहं

प्राणसमा सखी भूता। इदानीं त्वामहं चिन्ताकुलामिव पश्यामि। तदवश्यं त्वया मयि दुःखकारणमभिधातव्यमेव। तया पृष्टेयं वदति, सखि, मनःस्वामिविरहाकुलिताहम्। तच्छ्रुत्वा तामभ्यधात्। तं भट्टपुत्रमहमानीय तव दर्शयिष्यामि। तच्छ्रुत्वा शशिप्रभा ब्रूते। सखि, त्वं मम प्राणाधिका। तत् कथं परिहासवचनेन मयि दुःखमुत्पादयसि। तच्छ्रुत्वा कुमारीवेषधरो ब्रूते। आः कथमेतद् वदसि त्वम्। चक्षुषी निमील्य क्षणं तिष्ठ। ततस्तं भट्टपुत्रं पश्यसि। यत्नातिशयेन सा चक्षुषी निमील्य स्थिता। सहसैवायं कुमारीवेषधरो विद्याप्रभावेण भट्टकुमारोऽभवदवदच्च। शशिप्रभे त्वदधीनजीवनमनाथमिवागतं पश्य। तदा सा मनःस्वामिनमालोक्य हर्षिता विस्मिता च तस्थौ। तत-स्तेन मनःस्वामिना सहाशेषसुखमनुभवन्ती तिष्ठति।

अथ शशिप्रभाया मातुर्भ्रातुर्नृपमन्त्रिमदनसेनस्य पुत्रो विजयसेनः कनकपुरनृपकन्यां मृगाङ्कवतीं विवाहयित्वा स्वगृहमागतः। तस्मिन् काले मदनसेनमन्त्रिणा राजनि विज्ञाप्य शशिप्रभानीता। तदानीं कुमारीवेषधरं धृत्वा शशिप्रभया सह मनःस्वामी गतः। तत्र मनःस्वामिनं कुमारीवेषधरमवलोक्य विजयसेनः कामपीडितोऽभवत्। पितरमप्यवादीत्। तात, यद्यहं शशिप्रभायाः प्रियसखीं विवाहयामि तदा जीवामि नान्यथा। ततः पुत्रमरणमनुचिन्त्य मदनसेनो भगिनीपतिं नयपालराजानमवादीत्। राजा ब्रूते। मन्त्रिन् कथमेतद्दुष्करं कर्म शक्यं स्यात्। वृद्धब्राह्मणस्य पुत्रो महाकालमर्चयित्वास्याः पाणिग्रहणं करिष्यति। तदानीमहं किमुत्तरं दास्यामि। अतोऽशक्यमेतत्। मन्त्री ब्रूते। कुमारश्चिरेणात्रागमिष्यति। मम पुत्रः सम्प्रति म्रियते। तन्मया किं वक्तव्यम्। विशेषतश्च पुत्रमरणे ममापि मरणं भविष्यति। राजा वदति। वृद्धब्राह्मणस्योत्तरं तदा भवता दातव्यम्। मन्त्री वदति। भवतु। मयैव तस्य शान्तिरुत्पादयितव्या। तदानीं राजा तां कुमारीं मदनसेनाय मन्त्रिणे समर्पितवान्। विजयसेनश्च तस्याः पाणिग्रहणचिकीर्षुरभवत्। कुमारी वदति। मन्त्रिपुत्र, तवमुज्जयिन्यां गत्वा महाकालमभ्यर्च्य मम पाणिग्रहणमाचर।

यद्येवं न करोषि तर्हि तवोपरि प्राणांस्त्यक्ष्यामि। मम प्रतिज्ञैवम्। तच्छ्रुत्वा विजयसेनः सहसा महाकालमर्चयितुमुज्जयिनीमगमत्। अथ मृगाङ्कवत्यासहायं कुमारीवेषधरो मनःस्वामी विद्याप्रभावेण पुरुषो भूत्वा नानासुखमनुभवंस्तिष्ठति।

अथ कियति काले गते मनःस्वामिना मनसेति चिन्तितम्। मृगाङ्कवतीमादाय मूलदेवस्य स्थानं गच्छामि। स धूर्तवरो न्यायावसरं प्राप्य जेतुं शक्नोति। अथ मृगाङ्कवतीमादाय गत्वा मूलदेवाय सर्ववृत्तान्तमवादीत्। तच्छ्रुत्वा मूलदेवो हसन् मृगाङ्कवत्या समं मनःस्वामिनं तत्र संस्थाप्य विद्याप्रभावेण वृद्धब्राह्मणो भूत्वा शशिदेवं पुत्रवेषधारिणमग्रतः कृत्वा नयपालनृपतेरन्तिकं जगाम। देव, कुमारी दीयताम्। ममैष पुत्रो महाकालमर्चयित्वा तस्याः पाणिग्रहणं चिकीर्षुरागतः। तं ब्राह्मणकुमारमवलोक्य चिन्तितो मन्त्रिणमानीय वदति। मन्त्रिन्, पूर्वमेतन्मया भणितम्। अधुना यथोचितोत्तरं दत्वा तोष्यताम्। मन्त्री वदति। तात, वृद्धब्राह्मण, सा ते कुमारी मृतकल्पा, कस्मै विवाहेन दत्ता। इदानीमपरकन्या तव पुत्राय दातव्या। इति यत्नशतेनापि निवारितो न स्यात्। वृद्धब्राह्मणस्तस्य नृपतेरुपरि पुत्रेण सह मर्तुमुद्यतोऽभवत्। ततो राजा तस्य चरणे पतित्वा वदति। तात, रक्ष माम्। या कन्या तव पुत्रेणेष्यते सैव मया तस्मै दातव्या। ततो धूर्तवरो मूलदेवो रूपधरं शशिदेवमब्रवीत्। पुत्र विनीतस्य नृपतेर्वचनं शृणु। तदा शशिदेवेनोक्तम्। तात, यद्येतच्छ्रोतव्यं तदा राजा निजकन्यां शशिप्रभां मह्यं ददातु। तच्छ्रुत्वा राजा ब्रह्मवधभयाच्छशिप्रभां कन्यां द्विजपुत्राय ददौ।

ततस्तामादाय मूलदेवशशिदेवौ स्ववासमाजग्मतुः। तदानीं मनःस्वामी वदति तात, मूलदेव, मम प्राणाधिका शशिप्रभा भवतानीता। ममाभिलषितसिद्धिर्भूता। शशिदेवेनोक्तम्। किमहो स राजा मह्यं शशिप्रभां दत्तवान्। अस्याः पाणिग्रहणं मया कर्तव्यम्। तत् कथमयोग्यमेतादृशं वदसि। मनःस्वामी वदति। इयं शशिप्रभा

मम भार्या, पुरा यतः मया परिणीता। तद् भवान् कथमेतादृशं वदति। शशिदेवो वदति। भट्टपुत्र, चौरिकयास्यां गान्धर्वविवाहः कृतः। तेन किं स्यात्। मह्यं राजा स्वेच्छया दत्तवान्। तौ शशिदेवमनःस्वामिनावन्योन्यं कलहं कुर्वाणौ स्तः।

वद राजन्। शशिप्रभा कस्य भार्या भवति। राजा वदति। शृणु रे वेताल। मनःस्वामिना यत् कृतं तल्लोकद्वयविरुद्धमेव। पित्रा सा शशिदेवाय दत्ता। अतः शशिदेवस्य भार्या भवति। इति वदति भूपाले वेतालः शिंशपावृक्षे पुनर्ललाग।

## द्वाविंशतितमा कथा

अथ राज्ञा पुनरानीयमानो वेतालः प्रश्नमकार्षीत्।

देव, कुण्डिनपुरनाम नगरमासीत्। तत्र परमधार्मिको राजा श्वेतकेतुर्बभूव। तस्य प्राणसमः सखा शङ्करदत्तो वणिगासीत्। तेन सार्थवाहेन तत्पुरनिवासिनो मणिदत्तस्य दुहितानङ्गसेना परिणीता। अनया सह शङ्करदत्तो नानासुखमनुभवंस्तिष्ठति। एकदायं श्वेतकेतुनृपतौ कुटुम्बं समर्प्यानङ्गसेनायास्त्रैलोक्यमोहनीयाकृतेः परिरक्षणाय सहस्रशः पदातिकान् दत्वा निर्बन्धमाचर्य वाणिज्यार्थं देशान्तरमगमत्। द्वादशवर्षेषु नागतः। तदा तद्विरहेऽनङ्गसेना कृष्णपक्षस्य चन्द्रलेखेव भवन्ती विद्यते। अथ मदनचतुर्दशी समागत्य मिलिता। तस्यां कन्दर्पमाराधयितुं बहुशः स्त्रियः पुरुषा यान्ति। ततो मणिदत्तस्य पत्नी दुहितरमब्रवीत्। पुत्रि, त्वमेव शङ्करदत्तस्यागमनाय कामदेवार्चनमाचर। तच्छ्रुत्वा पदातिकान् समादाय दासीशतपरिवृता गत्वा मदनार्चनं कृत्वा पितृगृहं समागच्छन्ती विद्यते।

ततः शशिदेवो धूर्तवरस्तामालोक्य कामपीडितोऽभवत्। कथमपि पद्मावतीनगरीं गत्वा मूलदेवाय वृत्तान्तमवादीत्। तच्छ्रुत्वा मूलदेवो ब्रूते। सखे, शशिदेव, कातरो मा भव। सा येन

भवता प्राप्यते तन्मया कर्तव्यम्। शशिदेवेनोक्तम्। देव, पदातिकास्तां रक्षन्ति। अतोऽपि पितरौ रक्षणमपि न त्यजतः। राजा श्वेतकेतुरस्या रक्षणाय सयत्नः। तत्कथमेतच्छक्यं भवति। मूलदेवो वदति। तव का चिन्ता। मित्र, अत्र नगरे कामिकल्पलता नाम कुट्टिनी विद्यते। सारुन्धतीमपि चालयितुं समर्था। तस्मादावां गत्वा तस्यां निवेदयिष्यावः। इत्यालोच्य गत्वोक्तवन्तौ। तयोक्तम्। शशिदेवमूलदेवौ, अनङ्गसेनामहमपि जानामि। किन्तु दुष्कर एव कर्मप्रवेशः। भवतु। तथापि गत्वा भवतोः प्रीतिर्वाचनीया। किन्तु युवां गत्वानुपलक्षितौ स्थास्यथः। अहं शिवसेवां कुर्वती स्थास्यामि। निजप्रभुत्वं प्रकाश्य पश्चादुपायं करिष्यामि।

ततः परिचारिकाद्वयमासाद्य तत्र गत्वा शिवसेवामाचरन्ती विद्यते। ततस्तस्या महती सिद्धिर्भूता। सर्वैरुच्यते। सर्वज्ञेयं तापसीति। श्रुत्वानङ्गनसेना मातरमब्रवीत्। मातर्जामातुर्वार्तां सर्वज्ञास्थाने गोचरीकुरु। सा ब्रूते। पुत्रि, भद्रं स्मारितम्। ततः सा गत्वा सामग्रीं दत्वा प्रणम्येदमभ्यधात्। मातः सर्वज्ञे, मम जामाता द्वादशभिवर्षैर्नायातः। कथमस्य तत्त्वम्। मयि कथ्यताम्। बहुतरधनं दातव्यम्। तापसी वदति। मयावश्यं वक्तव्यम्। अद्यैव गृहं गच्छ। विचिन्त्य मया तस्य तत्त्वं किञ्चिद्वक्तव्यम्। किन्त्वनङ्गसेनामप्यत्रानेष्यसि।

अथापरदिने दुहितरमादाय सपत्नीको मणिदत्तः समागतः। सामग्रीं दत्वा प्रणम्योवाच। मातः सर्वज्ञे, अनङ्गसेनामादाय भवत्याः स्थाने सप्तनीकोऽहमागतः। शङ्करदत्तस्य कारणं वदतु भवती। निर्बन्धातिशयेन सा ब्रूते। मणिदत्त, तव जामाता तत्र कन्यामेकां त्रैलोक्यमोहनीयाकृतिं परिणीतवान्। तच्छ्रुत्वा पितरौ सर्वज्ञाचरणे पतितावुक्तवन्तौ च। मातः, शङ्रदत्तस्तां कन्यां विहायात्र केन प्रकारेण समागमिष्यति तद्वदतु भवती। सा ब्रूते। माणिदत्त, मन्त्र एको विद्यते। किन्तु सुदुर्लभो दातुमशक्यः। तच्छु-

त्वा तौ वदतः। तापसि, यदि भवत्या स मन्त्रो न दीयते तदानङ्गसेनेयं तद्विरहे मरिष्यति। तदास्याः शोकेनावामपि मरिष्यावः। तद्वधभागिनी भवती भविष्यति। इत्युक्त्वा तस्याश्चरणे पुनः पतितौ।

ततः सा ब्रूते। तस्मिन् मन्त्रेऽशक्यमेकमस्ति। यदि तव पुत्री तत्करोति तदैव मन्त्रसिद्धिर्भवति। तदा ताभ्यामुक्तम्। भवती यामाज्ञां चरति सापि तां करिष्यति। ततो मणिदत्तपत्नीं रहसि नीत्वा निगदितवती। शृणु निभृतमण्डपं कृत्वा तत्रानङ्गसेनानीयमानं पुरुषं पश्यन्ती मन्त्रं जपिष्यति। सुरतसम्भोगं तत्र नेष्यति तेन पुरुषेण प्रतिदिनम्। स पुरुषोऽपि शङ्करदत्तसदृशो यदा भवेत्तदैव तस्यागमनं भविष्यति। तच्छ्रुत्वा सा ब्रूते। गत्वा स्वामिनं पृच्छामि। तया पृष्टो मणिदत्तो ब्रूते। वल्लभे, येनोपायेन जामाता समायाति तमेव करोतु भवती। तदा तयोक्तम्। तव द्वार्यनेकपदातिकाः सन्ति। मन्त्रजाप्यसमये तत्र गन्तुं न शक्यते। मणिदत्तो ब्रूते। तव गमने विरोधं कोऽपि न करिष्यति। मयाद्य सर्वे ज्ञापयितव्याः। भवत्या यातायातं सुखेन भविष्यति। ततो मणिदत्तो गत्वा मण्डपमेकमकरोत्। इयं तापसी घोटकदोलया गत्वा तेनैव विधिनानङ्गसेनां मन्त्रं जापयति। तया सह कामिकल्पता कथालापं कुर्वती नित्यमेव तिष्ठति।

अथैकदा तापसी तामनङ्गसेनामभ्यधात्। पुत्रि, त्वमीदृशीं दशां कुतो गतासि। त्वामतीवकृशतनुं दृष्ट्वा तव दुःखेनाहं महती दुःखिता। तद्वदतु भवती। अनङ्गसेना ब्रूते। मातर्यावन्मम पतिर्वाणिज्यार्थं गतस्तदारभ्य पुरुषच्छायामपि न पश्यामि। इदानीं मन्त्रजाप्यसमये पुरुषं दृष्ट्वा पतिक्रीडां स्मरामि। तच्छ्रुत्वा तापसी ब्रूते। यद्येवं तमेव वरय। सा ब्रूते। यद्येवं तदा भवती तमिदं वदतु। तापसी वदति। स मया तुभ्यं दत्तः। सुखात् सुखमाचरति भवती। सा ब्रूते। एतदन्यं न ब्रवीतु भवती। ततो हर्षिता भूत्वा कामिकल्पलता शशिदेवाय रहस्यं निगदितवती। तच्छ्रुत्वा शशिदेवः

प्राप्तजीवन इवाभूत्। अथ तयानङ्गसेनया सह विविधक्रीडां कुर्वाणस्तिष्ठति। अनङ्गसेनापि पण्डितं शशिदेवं प्राप्य शङ्करदत्तं विसस्मार। तापसी मन्त्रजाप्यच्छलेन शशिदेवक्रीडार्थं नित्यमेव यातायातं करोति।

अथैकदा मूलदेवः शशिदेवमब्रवीत्। सखे, अत्र स्थित्वा प्रयोजनाभावः। तस्मादनङ्गसेनामादाय स्वदेशे गम्यताम्। शशिदेवो वदति। कथमेतच्छक्यम्। मूलदेवो वदति। तव वचनेन सातीवरागवती। यद्वदिष्यसि सा तत् करिष्यति। ततो दोलया साऽत्रागमिष्यति। तदा मयोपायः कर्तव्यः। ततः शशिदेवो गत्वानङ्गसेनां मूलदेवोपदिष्टं कथयामास। सा तदप्यङ्गीकृतवती। मूलदेवःसहसा भटशतैकमादाय राजद्वारं समागत्य शशिदेवसदृशो भूत्वा दोलारूढां तां निरीक्ष्य तस्या वस्त्रे धृत्वा वदति स्म। त्वं मम भार्या प्राणाधिका। कथं प्रपलाय्य यासि। तदा रक्षका जना अनङ्गसेनायाश्चेष्टां मणिदत्ताय कथयामासुः। तच्छ्रुत्वा मणिदत्तो गत्वा राजानं ज्ञापयामास। राजा च मित्रपत्नीविडम्बनामधिगम्यानङ्गसेनामात्मसमीपमानीय वदति। रे रे निर्लज्ज, मम मित्रपत्न्यनङ्गसेना त्वया पत्नीं वदित्वा कथं धृता। अस्याः पिता मणिदत्तः ख्यात एवास्ते। तत्कथमेतद् वदसि। याहि याहि। त्वामहं व्यापादयामि। किं करोमि। यज्ञोपवीतमास्ते। श्वेतकेतुरहं तेन वक्ष्यामि। ततस्तेनोक्तम्। चिरप्रवासिना मयालोक्य धृतेयम्। ततोऽहं मम पत्नीमानीयावश्यं नृपतिं दर्शयिष्यामि। तदैव ममैषाकीर्तिः प्रक्षालयिष्यति इति वाक्येन सर्वान् सन्तोष्य गतः।

गत्वा कामिकल्पलतामाह। मातर्यदि त्वं मन्यसे तदानङ्गसेनामादाय गच्छामः। तयोक्तम्। कथमेतच्छक्यम्। मूलदेवो वदति। मातः सातीवरागवती शशिदेववाक्याद्यास्यति। किन्तु तस्या अकीर्तिर्लोके स्थास्यति। एका मृता स्त्री मयानेतव्या। गैरिकचूर्ण-हरितालादिभिस्तां परिमार्ज्यादाय दोलयानीत्वा शशिदेवेन सह तत्र

भवती यास्यति। गत्वानङ्गसेनायाः सर्वाभरणं तस्यां दत्त्वानङ्गसेनायाः शय्यायां शाययित्वा भवत्यात्र गन्तव्यम्। ततः शशिदेवस्तद्गृहेऽग्निं दत्वानङ्गसेनामादाय पलायिष्यते। तदानङ्गसेनायाः सर्वाभरणेन युतां तामालोक्य सर्वेऽनङ्गसेनाज्ञानं तस्यामेव करिष्यन्ति। ततः कैश्चिदपि न वक्तव्यम्, अनङ्गसेना परपुरुषमादाय पलायितवती। अथ मूलदेवोपायेन तथाविधं कर्माचर्य तामादाय स्वदेशमगमच्छशिदेवो मूलदेवेन सह।

अथापरदिने तन्मातापितरौ बहु विलपन्तौ तिष्ठतः। राज्ञा स्वयमागत्य तस्यास्थीनि मित्रस्नेहान्नानातीर्थे प्रस्थापितानि। तापसी हा हा कृत्वा विलपन्ती वदति। अस्मिन् देशे न स्थातव्यम्। अनङ्गसेना प्रियशिष्या मृतेत्यहमन्यत्र यामि। इति निगद्य पद्मावत्यां नगर्यां ययौ। अथ कियता कालेन मूलदेवोऽनङ्गसेनामादाय शशिदेवसहितस्तां राजानं दर्शितवानुवाच। मत्पत्नीमनङ्गसेनाकारां पश्यतु देवः। अस्याः सादृश्यमोहेन पुरानगङ्गसेना धृता। ततस्तामालोक्य राजा विस्मितो वदति। अहो साक्षादनङ्गसेनेयम्। ततो राजा प्रसादं दत्वा प्रस्थापितवान्। अनङ्गसेनाया मातापितरौ तां दुहितरमेवालोक्यानङ्गसेनायाः सर्वाभरणं तस्यै ददतुश्चक्रन्दतुश्च।

वेतालो वदति। वदतु देव। कामिकल्पलताया महती बुद्धिः किं वा मूलदेवस्य। राजा वदति। शृणु रे वेताल। मूलदेवो महान् धूर्तः सर्वत्रोत्पन्नबुद्धित्वात्। इति राजानं वञ्चयित्वा वेतालः शिंशपावृक्षे पुनर्ललाग।

# भोजप्रबन्धः

## कुविन्दस्य कथा

ततः कदाचिद्द्वारपालकः प्रणम्य भोजं प्राह–'राजन्, द्रविडदेशात्कोऽपि लक्ष्मीधरनामा कविर्द्वारमध्यास्ते' इति। राजा 'प्रवेशय' इत्याह। प्रविष्टमेव सूर्यमिव विभ्राजमानं चिरादप्यविदितवृत्तान्तं प्रेक्ष्य राजा विचारयामास। आह च–

'आकारमात्रविज्ञानसंपादितमनोरथाः ।
धन्यास्ते ये न शृण्वन्ति दीनाः क्वाप्यर्थिनां गिरः'।।९१।।

स चागत्य तत्र राजानं 'स्वस्ति' इत्युक्त्वा तदाज्ञयोपविष्टः प्राह–'देव, इयं ते पण्डितमण्डिता सभा। त्वं च साक्षाद्विष्णुरसि। ततः किं नाम पाण्डित्यं मम। तथापि किंचिद्वच्मि–

भोजप्रतापं तु विधाय धात्रा
शेषैर्निरस्तैः परमाणुभिः किम् ।
हरेः करेऽभूत्पविरम्बरे च
भानुः पयोधेरुदरे कृशानुः' ।।९२।।

इति । ततस्तेन परिषच्चमत्कृता। राजा च तस्य प्रत्यक्षरं लक्षं ददौ। पुनः कविराह–'देव, मया सकुटुम्बेनात्र निवासाशया समागतम्।

क्षमी दाता गुणग्राही स्वामी पुण्येन लभ्यते ।
अनुकूलः शुचिर्दक्षः कविर्विद्वान्सुदुर्लभः' ।।९३।।

इति । ततो राजा मुख्यामात्यं प्राह–'अस्मै गृहं दीयताम्' इति। ततो निखिलमपि नगरं विलोक्य कमपि मूर्खममात्यो नापश्यत्, यं निरस्य विदुषे गृहं दीयते। तत्र सर्वत्र भ्रमन्कस्यचित्कुविन्दस्य गृहं वीक्ष्य कुविन्दं प्राह–'कुविन्द, गृहान्निःसर। तव गृहं विद्वानेष्यति'

इति। ततः कुविन्दो राजभवनमासाद्य राजानं प्रणम्य प्राह–'देव, भवदमात्यो मां मूर्खं कृत्वा गृहान्निःसारयति, त्वं तु पश्य मूर्खः पण्डितो वेति।

काव्यं करोमि नहि चारुतरं करोमि
यत्नात्करोमि यदि चारुतरं करोमि।
भूपालमौलिमणिमण्डितपादपीठ
हे साहसाङ्क कवयामि वयामि यामि' ।।९४।।

ततो राजा त्वंकारवादेन वदन्तं कुविन्दं प्राह–'ललिता ते पदपङ्क्तिः, कवितामाधुर्यं च शोभनम्, परन्तु कवित्वं विचार्य वक्तव्यम्' इति। ततः कुपितः कुविन्दः प्राह–'देव, अत्रोत्तरं भाति। किन्तु न वदामि। राजधर्मः पृथग्विद्वद्धर्मात्' इति। राजा प्राह–'अस्ति चेदुत्तरं ब्रूहि' इति। कुविन्दः प्राह–'देव', कालिदासादृतेऽन्यं कविं न मन्ये। कोऽस्ति ते सभायां कालिदासादृते कवितातत्त्वविद्विद्वान्।

यत्सारस्वतवैभवं गुरुकृपापीयूषपाकोद्भवं
तल्लभ्यं कविनैव नैव हठतः पाठप्रतिष्ठाजुषाम्।
कासारे दिवसं वसन्नपि पयः पूरं परं पङ्किलं
कुर्वाणः कमलाकरस्य लभते किं सौरभं सैरिभः ।।९५।।

अयं मे वाग्गुम्फो विशदपदवैदग्ध्यमधुरः
स्फुरद्बन्धो वन्ध्यः परहृदि कृतार्थः कविहृदि।
कटाक्षो वामाक्ष्या दरदलितनेत्रान्तगलितः
कुमारे निःसारः स तु किमपि यूनः सुखयति' ।।९६।।

इति। विद्वज्जनवन्दिता सीता प्राह–

'विपुलहृदयाभियोग्ये खिद्यति काव्य जडो न मौर्ख्ये स्वे।
निन्दति कञ्चुकमेव प्रायः शुष्कस्तनी नारी' ।।९७।।

ततः कुविन्दः प्राह –

'बाल्ये सुतानां सुरतेऽङ्गनानां
स्तुतौ कवीनां समरे भटानाम् ।
त्वंकारयुक्त हि गिरः प्रशस्ताः
करते प्रभो मोहभरः स्मर त्वम्' ।।९८।।

ततो राजा 'साधु भोः कुविन्द' इत्युक्त्वा तस्याक्षरलक्षं ददौ। 'मा भैषीः' इति पुनः कुविन्दं प्राह।

## दरिद्रब्राह्मणकुटुम्बस्य कथा

ततः प्रविशति पत्नीसहितः कोऽपि विलोचनो विद्वान् 'स्वस्ति' इत्युक्त्वा प्राह–

'निजानपि गजान्भोजं ददानं प्रेक्ष्य पार्वती ।
गजेन्द्रवदनं पुत्रं रक्षत्यद्य पुनः पुनः' ।।१६७।।

ततो राजा सप्त गजांस्तस्मै ददौ।

ततो राजा विद्वत्कुटुम्बं तदैव पुरतः स्थितं वीक्ष्य ब्राह्मणं प्राह–

'क्रियासिद्धिः सत्त्वेभवतिमहतां नोपकरणे।'

वृद्धद्विजःप्राह–

'घटो जन्मस्थानं मृगपरिजनो भूर्जवसनो
वने वासः कन्दादिकमशनमेवंविधगुणः ।
अगस्त्यः पाथोधिं यदकृत कराम्भोजकुहरे
क्रियासिद्धिःसत्त्वेभवति महतां नोपकरणे' ।।१६८।।

ततो राजा बहुमूल्यानपि षोडशमणींस्तस्मै ददौ। ततस्तत्पत्नीं प्राह राजा–'अम्ब, त्वमपि पठ।' देवी–

'रथस्यैकं चक्रं भुजगयमिताः सप्त तुरगा
निरालम्बो मार्गश्चरणविकलः सारथिरपि।
रविर्यात्येवान्तं प्रतिदिनमपारस्य नभसः
क्रियासिद्धिःसत्त्वेभवति महतां नोपकरणे' ।।१६९।।

राजा तुष्टः सप्तदश गजान्सप्त रथांश्च तस्यै ददौ। ततो विप्रपुत्रं

प्राह राजा—'विप्रसुत, त्वमपि पठ।' विप्रसुतः —

विजेतव्या लङ्का चरणतरणीयो जलनिधि-
र्विपक्षः पौलस्त्यो रणभुवि सहायाश्च कपयः ।
पदातिर्मर्त्योऽसौ सकलमवधीद्राक्षसकुलं
क्रियासिद्धिःसत्त्वे भवतिमहतां नोपकरणे'।।१७०।।

तुष्टो राजा विप्रसुतायाष्टादश गजेन्द्रान्प्रादात्। ततः सुकुमार-मनोज्ञनिखिलाङ्गावयवालंकृतां शृङ्गाररसोपजातमूर्तिमिव चम्प-कलतामिव लावण्यगात्रयष्टिं विप्रस्नुषां वीक्ष्य 'नूनं भारत्याः काऽपि लीलाकृतिरियम्' इति चेतसि नमस्कृत्य राजा प्राह—'मातः, त्वमप्याशिषं वद।' स्नुषा—'देव, शृणु।

धनुः पौष्पं मौर्वी मधुकरमयी चञ्चलदृशां
दृशां कोणो बाणः सुहृदपि जडात्मा हिमकरः ।
स्वयं चैकोऽनङ्गः सकलभुवनं व्याकुलयति
क्रियासिद्धिःसत्त्वेभवति महतां नोपकरणे'।।१७१।।

चमत्कृतो राजा लीलादेवीभूषणानि सर्वाण्यादाय तस्यै ददौ। अन-र्घ्यांश्च सुवर्णमौक्तिकवैडूर्यप्रवालांश्च प्रददौ।

## सीमन्तकवेः कथा

ततः कदाचित्सीमन्तनामा कविः प्राह-

'पन्थाः संहर दीर्घतां त्यज निजं तेजः कठोरं रवे
श्रीमन्विन्ध्यगिरे प्रसीद सदयं सद्यः समीपे भव ।
इत्थं दूरपलायनश्रमवतीं दृष्ट्वा निजप्रेयसीं
श्रीमन्भोज तव द्विषः प्रतिदिनं जल्पन्ति मूर्च्छन्ति च' ।।१७२।।

तस्मिन्नेव क्षणे कश्चित्सुवर्णकारः प्रान्तेषु पद्मरागमणि-मण्डितं सुवर्णभाजनमादाय राज्ञः पुरो मुमोच। ततो राजा सीमन्त-कविं प्राह—'सुकवे, इदं भाजनं कामपि श्रियं दर्शयति।' ततः कवि-राह—

'धारेश त्वत्प्रतापेन पराभूतस्त्विषांपतिः ।
सुवर्णपात्रव्याजेन देव त्वामेव सेवते' ।।१७३।।

ततस्तुष्टो राजा तदेव पात्रं मुक्ताफलैरापूर्य प्रादात्।

कदाचिद्राजा मृगयारसेन पुरः पलायमानं वराहं दृष्ट्वा स्वयमेकाकितया दूरं वनान्तमासादितवान्। तत्र कंचन द्विजवरमवलोक्य प्राह–'द्विज, कुत्र गन्तासि।'

द्विजः – धारानगरम्।

भोजः – किमर्थम्।

द्विजः – भोजं द्रष्टुं द्रविणेच्छया। स पण्डिताय दत्ते। अहमपि मूर्खं न याचे।

भोजः – विप्र, तर्हि त्वं विद्वान्कविर्वा।

द्विजः – महाभाग, कविरहम्।

भोजः – तर्हि किमपि पठ।

द्विजः – भोजं विना मत्पदसरणिं न कोऽपि जानाति।

राजा – ममाप्यमरवाणीपरिज्ञानमस्ति। राजा च मयि स्निह्यति त्वद्गुणं च श्रावयिष्यामि। किमपि कलाकौशलं दर्शय।

विप्रः – किं वर्णयामि।

राजा–कलमानेतान्वर्णय।

विप्रः –

'कलमाः पाकविनम्रा मूलतलाघ्रातसुरभिकह्लाराः ।
पवनाकम्पितशिरसः प्रायः कुर्वन्ति परिमलश्लाघाम्' ।।१७४।।

राजा तस्मै सर्वाभरणान्युत्तार्य ददौ ।

## कुम्भकारस्य कथा

ततः कदाचित्कुम्भकारवधू राजगृहमेत्य द्वारपालं प्राह–'द्वारपाल, राजा द्रष्टव्यः।' स आह–'किं ते राज्ञा कार्यम्'। सा चाह –'न तेऽभिधास्यामि। नृपाग्र एव कथयामि।' स सभायामागत्य प्राह –'देव, कुम्भकारप्रिया काचिद्राज्ञो दर्शनाकाङ्क्षिणी न वक्ति मत्पुरः कार्यम्। भवत्पुरतः कथयिष्यति।' राज्ञा–'प्रवेशय।' सा चागत्य

नमस्कृत्य वक्ति–

'देव मृत्खननादृष्टं निधानं वल्लभेन मे।

स पश्यन्नेव तत्रास्ते त्वां ज्ञापयितुमभ्यगाम्'।।१७५।।

राजा च चमत्कृतो निधानकलशमानयामास। तद्द्वारमुद्घाट्य यावत्पश्यति राजा तावत्तदन्तर्वर्तिद्रव्यमणिप्रभामण्डलमालोक्य कुम्भकारं पृच्छति–'किमेतत्कुम्भकार।' स चाह–

'राजश्चन्द्रं समालोक्य त्वां तु भूतलमागतम् ।

रत्नश्रेणिमिषान्मन्ये नक्षत्राण्यभ्युपागमन्' ।।१७६।।

राजा कुम्भकारमुखाच्छ्लोकं लोकोत्तरमाकर्ण्य चमत्कृतस्तस्मै सर्वं ददौ।

## भोजस्य रात्रौ नगरपर्यटनम्

ततः कदाचिद्राजा रात्रावेकाकी सर्वतो नगरचेष्टितं पश्यन्पौरगिरमाकर्णयंश्चचार। तदा क्वचिद्वैश्यगृहे वैश्यः स्वप्रियां प्राह–'प्रिये, राजा स्वल्पदानरतोऽप्युज्जयिनीगराधिपतेर्विक्रमार्कस्य दान-प्रतिष्ठां काङ्क्षते। सा किं भोजेन प्राप्यते। कैश्चित्स्तोत्रपरायणैर्मयूरादिकविभिर्महिमानं प्रापितो भोजः। परन्तु भोजो भोज एव। प्रिये, शृणु।

आबद्धकृत्रिमसटाजटिलांसभित्ति-

रारोपितो यदि पदं मृगवैरिणः श्वा।

मत्तेभकुम्भतटपाटनलम्पटस्य

नादं करिष्यति कथं हरिणाधिपस्य' ।।१७७।।

राजा श्रुत्वा विचारितवान्–'असौ सत्यमेव वदति।' ततः पुनः पुनर्वदन्तं शृणोति–

'आपन्न एव पात्रं देहीत्युच्चारणं न वैदुष्यम्।

उपपन्नमेव देयं त्यागस्ते विक्रमार्क किमु वर्ण्यः ।।१७८।।

विक्रमार्क त्वया दत्तं श्रीमन्ग्रामशताष्टकम् ।
अर्थिने द्विजपुत्राय भोजे त्वन्महिमा कुतः ।।१७९।।

प्राप्नोति कुम्भकारोऽपि महिमानं प्रजापतेः।
यदि भोजेऽप्यवाप्नोति प्रतिष्ठां तव विक्रमः' ।।१८०।।

राजा—'लोके सर्वोऽपि जनः स्वगृहे निःशङ्कं सत्यं वदति। मया वान्येन वा सर्वथा विक्रमार्कप्रतिष्ठा न शक्या प्राप्तुम्'।

## कश्चन कविः

ततः कदाचित्कश्चित्कवी राजद्वारं समागत्याह—'राजा द्रष्टव्यः' इति। ततः प्रवेशितो राजानं 'स्वस्ति' इत्युक्त्वा तदाज्ञयोपविष्टः पठति।

'कविषु वादिषु भोगिषु देहिषु
द्रविणवत्सु सतामुपकारिषु ।
धनिषु धन्विषु धर्मधनेष्वपि
क्षितितले नहि भोजसमो नृपः' ।।१८१।।

राजा तस्मै लक्षं प्रादात्। सर्वाभरणान्युत्तार्य तं च तुरगं ददौ।

## सुलोचनायाः कथा

ततः कदाचिद्राजा क्रीडोद्यानं प्रस्थितो मध्येमार्गं कामपि मलिनांशुवसनां तीक्ष्णकरतपनकरविदग्धमुखारविन्दां सुलोचनां लोचनाभ्यामालोक्य पप्रच्छ—

'का त्वं पुत्रि' इति।

सा च तं श्रीभोजभूपालं मुखश्रिया विदित्वा तुष्टा प्राह—

'नरेन्द्र, लुब्धकवधूः'

हर्षसंभृतो राजा तस्याः पटुप्रबन्धानुबन्धेनाह—

'हस्ते किमेतत्'

सा चाह —'पलम्'

राजाह –

'क्षमां किं'

सा चाह –

'सहजं ब्रवीमि नृपते यद्यादराच्छ्रूयते ।
गायन्ति त्वदरिप्रियाश्रुतटिनीतीरेषु सिद्धाङ्गना
गीतान्धा न तृणं चरन्ति हरिणास्तेनामिषं दुर्बलम्'।।१८२।।

राजा तस्यै प्रत्यक्षरं लक्षं प्रादात्।

## पञ्चानां गजानां दानम्

ततो गृहमागत्य गवाक्ष उपविष्टः। तत्र चासीनं भोजं दृष्ट्वा राजवर्त्मनि स्थित्वा कश्चिदाह–'देव, सकलमहीपाल, आकर्णय।

इतश्चेतश्चाद्भिर्विघटिततटः सेतुरुदरे
धरित्री दुर्लङ्घ्या बहुलहिमपङ्को गिरिरयम्।
इदानीं निर्वृते करितुरगनीराजनविधौ
न जाने यातारस्तव च रिपवः केन च पथा' ।।१८३।।

तुष्टो भोजो वर्त्मनि स्थितायैव तस्मै वंश्यान्पञ्च गजान्ददौ।

## दरिद्रस्य विप्रस्य कथा

कदाचिद्राजा मृगयारसपराधीनो हयमारुह्य प्रतस्थे।

ततो नदीं समुत्तीर्णं शिरस्यारोपितेन्धनम्।
वेषेण ब्राह्मणं ज्ञात्वा राजा पप्रच्छ सत्वरम् ।।१८४।।
'कियन्मानं जलं विप्र'

स आह–

'जानुदघ्नं नराधिप।'

चमत्कृतो राजाह–

ईदृशी किमवस्था ते'

स आह–

'नहि सर्वे भवादृशाः' ।।१८५।।

राजा प्राह कुतूहलात्–'विद्वन् याचस्व कोशाधिकारिणम्। लक्षं दास्यति मद्वचसा।' ततो विद्वान्काष्ठं भूमौ निक्षिप्य कोशाधिकारिणं गत्वा प्राह–'महाराजेन प्रेषितोऽहम्। लक्षं मे दीयताम्।' ततः स हसन्नाह–'विप्र, भवन्मूर्तिर्लक्षं नार्हति।' ततो विषादी स राजानमेत्याह–'स पुनर्हसति देव, नार्पयति।' राजा कुतूहलादाह–'लक्षद्वयं प्रार्थय। दास्यति।' पुनरागत्य विप्रः 'लक्षद्वयं देयमिति राज्ञोक्तम्' इत्याह। स पुनर्हसति। विप्रः पुनरपि भोजं प्राप्याह–'स पापिष्ठो मां हसति नार्पयति।' ततः कौतूहली लीलानिधिर्महीं शासन्श्रीभोजराजः प्राह–'विप्र, लक्षत्रयं याचस्व। अवश्यं स दास्यति।' स पुनरेत्य प्राह–'राजा मे लक्षत्रयं दापयति।' स पुनर्हसति। ततः क्रुद्धोविप्रः पुनरेत्याह–'देव,स नार्पयत्येव।

राजन्कनकधाराभिस्त्वयि सर्वत्र वर्षति।
अभाग्यच्छत्रसंच्छन्ने मयि नायान्ति बिन्दवः ।।१८६।।

त्वयि वर्षति पर्जन्ये सर्वे पल्लविता द्रुमाः।
अस्माकमर्कवृक्षाणां पूर्वपत्रेषु संशयः ।।१८७।।

एकमस्य परमेकमुद्यमं
निस्त्रपत्वमपरस्य वस्तुनः ।
नित्यमुष्णमहसा निरस्यते
नित्यमन्धतमसं प्रधावति' ।।१८८।।

ततो राजा प्राह–

'क्रोधं मा कुरु मद्वाक्याद्गत्वा कोशाधिकारिणम् ।
लक्षत्रयं गजेन्द्राश्च दश ग्राह्यास्त्वया द्विज' ।।१८९।।

ततस्त्वङ्गरक्षकं प्रेषयति। ततः कोशाधिकारी धर्मपत्रे लिखति–

'लक्षं लक्षं पुनर्लक्षं मत्ताश्च दश दन्तिनः ।
दत्ता भोजेन तुष्टेन जानुदघ्नप्रभाषणात्' ।।१९०।।

# शुकसप्ततिः

## प्रथमा कथा

प्रणम्य शारदां देवीं दिव्यविज्ञानशालिनीम् ।
वच्मि चेतोविनोदार्थमुद्धारं कीरसम्मतेः ।।

अस्ति चन्द्रपुरं नाम नगरम्। तत्र विक्रमसेनो नाम राजा बभूव। तस्मिन्नगरे हरिदत्तो नाम श्रेष्ठी तस्य भार्या शृङ्गारसुन्दरी नाम्नी। तत्पुत्रो मदनविनोदनामा बभूव। तस्य पत्नी प्रभावती। सा सोमदत्तश्रेष्ठिनः कन्या। मदनविनोदस्तु अतीव विषयासक्तः कुपुत्र पितुः शिक्षां न शृणोति। तस्य द्यूतमृगयावेश्यामद्यादिषु अतीव आसक्तिः। कुमार्गचारिणं तं कुपुत्रं दृष्ट्वा तत्पिता हरिदत्तः सपत्नीकः अतीव दुःखितः सञ्जातः। तं हरिदत्तं कुपुत्रदुःखेन पीडितं दृष्ट्वा तस्य सखा त्रिविक्रमनामा द्विजः स्वगृहतो नीतिनिपुणं शुकं सारिकां च गृहीत्वा तद्गृहे गत्वा प्राह—'सखे हरिदत्त ! एनं शुकं सपत्नीकं पुत्रवत्त्वं परिपालय। एतत्संरक्षणेन तव दुःखं दूरीभविष्यति।

हरिदत्तस्तु तं शुकं गृहीत्वा पुत्राय समर्पयामास। मदनविनोदेन शयनमन्दिरे स्वर्णपञ्जरस्थः स्थापितः परि- पोषितश्च।

अथैकदा रहसि शुको मदनं प्राह—हे सखे !

पित्रोस्ते दुःखिनोर्दुःखात्पतत्यश्रुचयो भुवि ।
तेन पापेन ते वत्स पतनं देवशर्मवत् ।।२।।

**स प्राह—'कथमेतत् ?'**

शुकः आह—अस्ति पञ्चपुरंनाम नगरम्। तत्र सत्यशर्मा

ब्राह्मणः। तद्भार्या धर्मशीलानाम्नी पुत्रस्तु देवशर्मा। स च अधीतविद्यः पितृप्रच्छन्नवृत्त्या देशान्तरं गत्वा भागीरथीतीरे तपः कृतवान्।

एकदा स तपस्वी गङ्गातीरे जपार्थमुपविष्टः। तस्मिन्काले कयाचित् बलाकया उड्डीयमानया तदङ्गोपरि पुरीषोत्सर्गः कृतः। स च तपस्वी क्रोधाकुलितनेत्रः यावदूर्ध्वं पश्यति तावत्तत्क्रोधाग्निना भस्मीभूतां बलाकां भूमौ पतितां दृष्ट्वा [बलाकां दग्ध्वा] नारायणद्विजगृहे भिक्षार्थं ययौ। स्वभर्तृशुश्रूषापरया तत्पत्न्या कोपाभिविष्टो निर्भर्त्सितः सत्पक्षिहायमुक्तश्च।

'नाहं बलाकेव त्वत्कोपस्थानम्।'

स च प्रच्छन्नपातकज्ञानाद्भीतो विस्मितश्च, प्रेषितश्च तया धर्मव्याधपार्श्वे वाराणसीं नगरीं ययौ। तत्र रक्ताक्तहस्तं यमप्रतिभं मांसविक्रयं विदधानं तं दृष्ट्वा दृशामन्तःस्थितः। व्याधेन स्वागतप्रश्नपूर्वकं स्वगृहं नीत्वा निजपितरौ सभक्तिकं भोजयित्वा पश्चात्तस्य भोजनं दत्तम्। तदन्तरं स च व्याधं ज्ञानकारणं पप्रच्छ—'कथं सती ज्ञानवती, कथं च त्वं ज्ञानवान्।'

तेन व्याधेनोक्तम्—

निजान्वयप्रणीतं यः सम्यग्धर्मं निषेवते ।
उत्तमाधममध्येषु विकारेषु पराङ्मुखः ।।३।।

स गृही स मुनिः साधुः स च योगी स धार्मिकः ।
पितृशुश्रूषको नित्यं जन्तुः साधारणश्च यः ।।४।।

अहं सापि च एवं ज्ञानिनौ त्वं च निजपितरौ परित्यज्य भ्रमन्मादृशां न सम्भाषणार्हः। परमतिथिं मत्वा जल्पितः।

एवमुक्तः स ब्राह्मणो विनयपरं व्याधं पप्रच्छ। तेनोक्तम्—

न पूजयन्ति ये पूज्यान्मान्यान्न मानयन्ति ये।
जीवन्ति निन्द्यमानास्ते मृताः स्वर्गं न यान्ति च ।।५।।

व्याधेन बोधितस्तेन स ययौ गृहमात्मनः ।
अभवत्कीर्तिमाँल्लोके परतः कीर्तिभाजनम् ।।६।।

तस्माद्वणिग्धर्मं स्वकुलोद्भवं स्मर पित्रोश्च विनयपरो भव।

एवमुक्तः स मदनः पितरौ नमस्कृत्य तदनुज्ञातो भार्याञ्चापृच्छ्य प्रवहणमधिरूढवान् गतो देशान्तरम्। पश्चात्तत्पत्नी कतिचिद्दिनानि शोकयुक्ता निर्वाह्य स्वैरिणीभिः सखीभिः प्रतिबोधिता पुरुषान्तराभिलाषुकाभवत्। यतस्ताभिरेवमुक्तम्—

तावत्पिता तथा बन्धुर्यावज्जीवति मानवः ।
मृतो मृत इति ज्ञात्वा क्षणात्स्नेहो निवर्तते ।।७।।

अतस्त्वं स्वपतिमप्राप्यमाना निजशरीरस्य कतिचिद्दिनस्थायियौवनस्य पुरुषान्तररमणाद्गृहाण फलम्।

ततस्तासां वचनेन पुरुषान्तरस्य गुणचन्द्रसंज्ञस्य रमणाय शृङ्गारं विधाय यावत्प्रचलिता तावत्सारिकया मा गच्छेत्यादिवचनैर्निर्भर्त्सिता। ततो यावत्सा तां सारिकां गलमोटनपूर्वं विनाशयति तावदुड्डीय ययौ। ततः क्षणं स्थित्वा स्वेष्टदेवतां हृदि स्मृत्वा ताम्बूलं प्रगृह्य यावच्चलिता तावत् शुकः प्राह—'सिद्धिरस्तु। क्व गन्तव्यम्', इत्यादिवाक्यैः पृष्टा।

सा च शुकवचनं शकुनमिति कृत्वा प्रहस्य तमाह—'हे शुकराज! नरान्तरास्वादं विज्ञातुं प्रचलितास्मि।'

शुक उवाच—'युक्तमिदं कर्त्तव्यमेव परं दुष्करं निन्दितं च कुलस्त्रीणाम्। किञ्च, तदा गम्यतां यदि विपरीते समायाते सति तव बुद्धिरस्ति। यदि नास्ति तदा पराभवपदं भविष्यति। यतः—

कौतुकान्वेषिणो नित्यं दुर्जना व्यसनागमे ।
मासोपवासिनी यद्वद्वणिक्पुत्रकचग्रहे ।।८।।

पप्रच्छ सा तदा सार्धं पुंश्चलीभिः कृतादरा ।
ससम्भ्रमा जगादेदं किमिदं भाषितं शुकः ।।९।।

यदि ते कौतुकं सुभ्रु परार्थं गच्छ सुन्दरि ।
स्थिरीभूय त्वया पश्चात् श्राव्येयं महती कथा ।।१०।।

एवं शुकोक्तं श्रुत्वा यदा सा कौतुकाकुलचेतसा निजगृह आसीनास्ति तदा शुकः कथां प्राह–

अस्ति चन्द्रावती पुरी। तस्यां भीमनामा नृपाः। तत्र सुधनो नाम मोहनश्रेष्ठिसुतः तन्नगरवासिनो हरिदत्तस्य कलत्रं लक्ष्मीं रन्तुमीहते। तद्वत्सा न मन्यते। ततो मासोपवासिनीं पूर्णाभिधानां गत्वा पूर्णधनावर्जितां कृत्वा हरिदत्ते नगराद्बहिर्गते तद्गृहे दूतीत्वेन प्रेषयामास। सापि चाटूक्तिभिर्लक्ष्मीं प्रसादयामास। प्रसन्नया न तयेत्युक्तम्–"यत्त्वं याचसे तत्करोमि।' पूर्णयोक्तम्–"तर्हि मन्मतं नरं भज।"

तयोक्तम्–'कुलस्त्रीणां नैतद्युज्यते परं यत्तवाग्रे प्रतिपन्नं तत्करोमि।'

उक्तञ्च–

छिज्जउ सीसं अह होउ बन्धणं चअउ सव्वहा लच्छी।
पडिवण्णपालणे सुपुरिसाणं जं होउ तं होउ ।।११।।

तथा च

दिढलोहसिंखलाणं अस्साण विविहपासबन्धाणं ।
ताणं चिअ अहिअरअरो वाआबन्धो सुपुरिसस्स ।।१२।।
अद्यापि नोज्झति हरः किल कालकूटं,
कूर्मो बिभर्ति धरणीं खलु चात्मपृष्ठे।
अम्भोनिधिर्वहति दुःसहवाडवाग्नि-
मङ्गीकृतं सुकृतिनः परिपालयन्ति ।।१३।।

तच्छ्रुत्वा हृष्टा पूर्णा । 'एवमेवैतत्।'

ततस्तां लक्ष्मीं प्रतिविधाय गुणमोहनार्थे प्रदोषे स्वगृहे निनाय। ततः स मोहनः कथितवेलोपरि नागतः किञ्चित्कार्यादिवैयग्र्येण। ततो लक्ष्म्या सकामयोक्तम्–'यत्कमपि नरं समानय।'

सुमतिर्नाम तस्य प्रिया पद्मिनी नाम। तस्य च वणिजः पुण्यक्षयाद्धनं क्षीणम्। स च जनैः परित्यक्तः। यतो जनो धनमित्रः।

उक्तञ्च –

यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः ।
यस्यार्थाः स पुमाँल्लोके यस्यार्थाः स च पण्डितः ।।५६।।

तथा च भारते –

जीवन्तोऽपि मृताः पञ्च श्रूयन्ते किल भारत।
दरिद्रो व्याधितो मूर्खः प्रवासी नित्यसेवकः ।।५७।।

तथा च –

इह लेके हि धनिनां परोऽपि स्वजनायते ।
स्वजनोऽपि दरिद्राणां तत्क्षणाद्दुर्जनायते ।।५८।।

सोऽपि च तृणकाष्ठादिकमानीय पुरीमध्ये विक्रीणाति। अन्यदा अनेन तृणकाष्ठादिकं किमपि वने न प्राप्तम्। दृढकाष्टमयोऽपि विघ्नविनायकः प्राप्तः। ततश्चिन्तितम्–किमसौ मम विधास्यति?

उक्तञ्च –

बुभुक्षितः किं न करोति पापं क्षीणा नरा निःकरुणा भवन्ति ।
प्राणार्थमेते हि समाचरन्ति मतं सतां यन्न मतं तदेषाम् ।।५९।।

यावत्स तस्य विनायकस्य पाटनायोत्तिष्ठति तावत्तुष्टः सन् जगाद–अहं तव प्रतिदिनं पञ्च पञ्च मण्डकान्दास्ये खण्डघृतयुतान्। ममालये प्रातर्यायाः। परं कस्यापि इदं रहस्यं न कथनीयम्। कथते तु मद्वचो वितथं भविष्यति।

सोऽपि च 'तथे' ति प्रतिपाद्य नित्यं मण्डकपञ्चकं भार्याया अर्पयति। तद्दैवं मण्डकपञ्चकं घृतखण्डयुक्तमादाय तद्भार्या निजकुटुम्बं तृप्तीकरोति। नित्यं च तान्मण्डकान् मन्त्रिणां गृहे वाहयामास। निजसंख्या मन्दोदर्यास्तृप्त्यर्थं नित्यं प्राहिणोत्। अन्यदा सा सखी तां पप्रच्छ। पद्मिन्यपि मण्डकागममिदं न जानाति। ततस्तस्याः पुरः सा सखी कपटाद्ब्रूते–सखि ! यदि त्वं

मम पुरतो गुह्यं न कथयसि तत्कः स्नेहः।

उक्तञ्च–

दहाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति ।
भुङ्क्ते भोजयति चैव षड्विधं प्रीतिलक्षणम् ।।६०।।

ततः पद्मिन्याह–मदीयः पतिरिदं गुह्यं ममाग्रे कथयति न वृत्ते मया शतशः पृष्टोऽपि।

तयोक्तम्–तर्हि त्वदीयं जीवितं रूपं यौवनं सर्वमपि निरर्थकमेव यदिदं नाज्ञायि।

ततः पद्मिनी पतिं पृच्छति–कथं मण्डकप्राप्तिः ?

पतिराह–विधेः प्रसादात्। उक्तञ्च–

द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात् ।
आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः ।।६१।।

किञ्च–

क्षुत्क्षामस्य करण्डपिण्डिततनोर्म्लानेन्द्रियस्य क्षुधा
कृत्वाखुर्विवरं स्वयं निपतितो नक्तं मुखे भोगिनः ।
तृप्तस्तत्पिशितेन सत्वरमसौ तेनैव यातः पथा
स्वस्थास्तिष्ठत दैवमेव हि नृणां वृद्धौ क्षये कारणम् ।।६२।

यदा न कथयति तदानशनं चक्रे।

पतिराह – अस्मिन्कथिते महती हानिः पश्चात्तापश्च भविष्यति एवं बोधितोऽपि सा यावन्नाग्रहं मुञ्चति तदा तेन दैवोपहितचित्तेन कथितम्।

उक्तञ्च –

यस्मै देवाः प्रयच्छन्ति पुरुषाय पराभवम्।
बुद्धिं तस्यापकर्षन्ति न स वेत्त्यात्मनो हितम्।।६३।

तेन च राजन्विक्रमार्कबुद्धिमुक्तेन गुह्यं कीर्तितम्। य हीनपुण्यो बुद्ध्या मुच्यते। उक्तञ्च–

रामो हेममृगं न वेत्ति नहुषो याने युनक्ति द्विजान्

विप्रादेव सवत्सधेनुहरणे जाता मतिश्चार्जुने ।
द्यूते भ्रातृचतुष्टयं च महिषीं धर्मात्मजे दत्तवान्
प्रायः सत्पुरुषोऽप्यनर्थसमये बुद्ध्या परित्यज्यते ।।६४।।

सा च पतिमुखात् श्रुत्वा सखीपुरो जगाद। तया चात्मपतिः कुठारहस्तः प्रेषितो विनायकपार्श्वे। सोऽपि पद्मिनीपतिश्च प्रातस्तत्र जगाम। विनायकोऽपि तौ द्वावपि मयूरबन्धैर्बन्ध्यामास। सोऽपि च पद्मिनीपतिरुक्तः रे त्वदीय एवायमनर्थः। ततस्त्वय्येव दण्डो युज्यते।

ततः सखीपतिर्ययाचे। तान्पञ्च मण्डकान्तस्मै स प्रददौ। तौ द्वावपि स्वं स्वं गृहं जग्मतुः। ततः पत्या पद्मिनी जल्पिता—त्वया ते पञ्चापि मण्डका अस्माकं स्फेटिता एतस्या दापिताः। पश्चात्तापं च कुरुते।

ततस्त्वमपि राजेन्द्र ! मां मा पृच्छ। तव पश्चात्तापो भविष्यति। इदं श्लोकं स्वयमेव विचिन्तय। इति कथयित्वा बालपण्डिता उत्थाय स्वगृहं गता।

इति कथां श्रुत्वा प्रभावति सुप्ता।

## अष्टाविंशतितमा कथा

अन्यदा प्रभावती गमनाय शुकं पप्रच्छ।

शुकः प्राह—

कृशोदरि व्रजाद्य त्वं यदि जानासि भाषितुम् ।
जारसंयुक्तया पूर्वं यथा देविकया कृतम् ।।१७३।।

अस्ति कुहाडाख्यो महाग्रामः तत्र जरसाख्यो कौटुम्बिको महामूर्खः। तद्भार्या देविका पुँश्चली। तां च प्रभाकरो ब्राह्मणः क्षेत्रमध्ये विभीतकवृक्षसमीपे गुप्तस्थाने मुदा रमते। ईदृशं व्यतिकरं जनाच्छ्रुत्वा तत्पतिस्तत्रावलोकनाय स्वयं गतः। तेन च वृक्षारूढेन तत्तथैव दृष्टम्। दृष्ट्वा तत्रस्थेनापि जल्पितम्, धूर्तिके ! बहु-

दिनेभ्योऽद्य सम्प्राप्ता—इत्युक्ता कथमियं भर्तारं प्रत्याययतु।

तयोक्तम्—नाहं जाने त्वमेव कथय।

'यदि न यासि तदा कथयामि'।

तया तथेति प्रतिपन्ने शुकः प्राह—सा च तद्वचः श्रुत्वा तं जा प्रेषयामास पत्या चावतीर्य समागतेन उपालब्धा।

साह—हे प्रभो ! ईदृश एव वृक्षः, अत्रारूढैर्मिथुनं दृश्यते।

तेन पतिना उक्तम्—त्वमारुह्य अवलोकय ।

तया तथा कृतम्। वृक्षारूढया च तया प्रोक्तं कपटेन।

"बहुदिवसेभ्योऽन्यांनारीमभिगमन्दृष्टोऽसि।"

तेन मूर्खेण ज्ञातम्—सत्यमिदम्। स च तां शान्तयित्वा गृ निनाय।

इति कथां श्रुत्वा प्रभावती सुप्ता।

## एकोनत्रिंशत्तमी कथा

अन्येद्युः प्रभावती गमनाय शुकं पृच्छति स्म ।

सोऽप्याह—

व्रज देवि विचारं चेत्कर्तुं जानासि भामिनि।
समं जारेण सम्प्राप्ता सुन्दरीव यथा गृहे ।।१७४।।

'कथमेतत्' ?

सोऽब्रवीत् – अस्ति सीहूली नाम ग्रामः। तत्र महाध वणिक्। तद्भार्या सुन्दरी। तां च मोहनो नाम उपपतिर्नि गृहमागत्य भुङ्क्ते। अन्यदा यावत्सा तथा तिष्ठति तावत्तत्पा समागतः। सा कथं भवतु।

उत्तरम्—सा पतिमागच्छन्तं दृष्ट्वा जारं विवस्त्रं शि कृत्वा मुक्तकेशा गृहान्निर्गत्य दूरस्था पतिमाह—अस्मद्गृहम नग्नभूतं शिक्यारूढं विद्यते। मान्त्रिकानाकारयितुं गच्छेत्युक्ते मूर्खस्तदर्थं जगाम। तदा च तदन्तरे तया उल्मुकं हस्ते कृ







उपपतिर्निष्कासितः ल्मुकेनापि भूतं नष्टम्।

इति कथां श्रुत्वा प्रभावती सुप्ता।

## त्रिंशत्तमी कथा

अन्येद्युः प्रभावत्या पृष्टः शुकः प्राह।

गच्छ देवि विरुद्धं ते गमनं न मतं मम ।
विषमे यदि वेत्सि त्वमुत्तरं मूलदेववत् ।।१७५।।

अस्तीह पृथिव्यां भूतवासं नाम श्मशानम्। तत्र द्वौ पिशाचौ करालोत्तालनामानौ। भार्ये च धूमप्रभामेघप्रभाख्ये, तयोश्च भार्यारामणीयकत्वे विवादः संवृत्तः। अन्यदा च ताभ्यां भार्यासहिताभ्यां मूलदेवो दृष्टो बाहुभ्यां विधृत्य पृष्टः—का अन्योर्मध्याद्रमणीया, अनृतं वदन्तं व्यापादयिष्यावः। तत्कलत्रे विरूपे भीषणे वृद्धे पिशाचिन्यौ। स च यथार्थवादी भक्षितः स्यात् किमुत्तरं कुर्यादिति।

उत्तरम्—तेनोक्तम्—

या यस्य वल्लभा लोके रम्या सा तस्य नापरा ।
गदिते धूर्तराजेन ताभ्यां मुक्तश्च तत्क्षणात् ।।१७६।।

इति कथां श्रुत्वा प्रभावती सुप्ता ।

## एकत्रिंशत्तमी कथा

अन्यदा च प्रभावत्या पृष्टः शुकः प्रोवाच —

यथेष्टं व्रज कल्याणि केलिं कर्त्तुं कृशोदरि ।
शशकस्येव ते बुद्धिरस्ति चेत्सुसहायिनी ।।१७७।।

मधुराख्ये वने पिङ्गलनामा सिंहः। स सत्त्वानि बहूनि हनन्सर्वैः पशुभिर्विचार्य प्रतिदिनमेकैकसत्त्वपरिकल्पनव्यवस्थया निवारितः। अन्यदा शशकस्यैकस्य वारकः सञ्जातः। स च न याति श्वापदैर्भणितोऽपि—'गच्छ त्वमन्यथा पूर्ववत्सर्वाणि भूतानि स

भक्षयिष्यति। स चाद्यप्रभृति तदन्तिके सत्त्वानि न यास्यन्ति' –इत्युक्त्वा बहुकालक्षेपं चकार। मध्याह्नसमये एव च मन्दं मन्दं सिंहस्याग्रे गन्तुं व्यवसितः। तेनापि सहसाक्रान्तः कथं मुच्यते ?

उत्तरम्–शशकः सिंहं प्राह–स्वामिन्नहं शशकचतुष्टयेन सह आगच्छन्मार्गे तव शत्रुणा धृतोऽतो वेलातिक्रमो बभूव।

तेनोक्तम् –स शत्रुः क्वास्ते ?

ततः स शशकेन धूर्तेन वार्टीं नीत्वा तस्यैव प्रतिबिम्बः कूपे दर्शितः। सिंहोऽपि मूर्खस्तं जले दृष्ट्वा कुपितो झम्पामदान्मृतश्च।

बुद्धिर्बलवती भीरुसत्त्वानां न पराक्रमः।
शशकेनाल्पसत्त्वेन हतः सिंहः पराक्रमी ।।१७८।।

उक्तञ्च–

एकं हन्यान्न वा हन्यादिषुर्मुक्तो धनुष्मता ।
सराष्ट्रं सप्रजं हन्ति राजानं मन्त्रिनिश्चयः ।।१७९।।

इति कथां श्रुत्वा प्रभावती सुप्ता ।

## द्वात्रिंशत्तमी कथा

अथान्येद्युः प्रभावती चलिता शुकं पप्रच्छ गमनाय ।

शुकः–

याहि देवि मनो यत्र गन्तुं ते कमलानने ।
राजिनीव विजानासि वक्तुं धूलिविपर्यये ।।१८०।।

अस्ति शान्तिपुरं नाम नगरम्। तत्र माधवः श्रेष्ठी। तस्य मोहिनी भार्या। तयोस्तनयः सोहडाभिधः। तस्य भार्या राजिनीनाम्नी रूपसम्पन्ना चतुरा पुँश्चली। सान्यदा द्रम्ममर्पयित्वा श्वश्र्वाज्ञप्ता 'गोधूमान् हट्टे गृहीत्वागच्छ'।

सा च हट्टे गता। क्रीणत्या चोपपतिर्दृष्टः संज्ञितश्च समीपमाययौ। गोधुमान्मोटायां बद्ध्वा हट्टे मुक्त्वा तेन सार्धं सा ययौ। वणिजापि

गोधूमानुत्सार्य मोटायां धूलिर्बद्धा। सापि तेन सह चिरं स्थित्वा आगत्याकुला मोटामनुत्पादयित्वा गृहं ययौ। तां छोटयित्वा यावत् श्वश्रूः पश्यति कीदृशा गोधूमा इति तावद्धूलिं पश्यति। अत्र किमुत्तरम्।

शुकः—किमिदमिति यदा श्वश्र्वा पृष्टा तदा तयोक्तम्—'मातर्मम हस्ताद्रम्मो हट्टाग्रे भूमौ पतितः। ततो मया धूलिराहृता।

ततः सा श्वश्रूर्द्रम्ममनवलोकमाना विकलीभूता।

इति कथां श्रुत्वा प्रभावती सुप्ता ।

## त्रयस्त्रिंशत्तमी कथा

अथान्येद्युः प्रभावती गमनायोत्सुा शुकं पप्रच्छ।

शुकः प्राह—

को दोषो गम्यतां देवि यदि कर्तुं त्वमीश्वरा ।
विषमे मालिनी यद्वद्रम्भिका पतिसन्निधौ ।।१८१।।

'कथमेतत्' ?

शुकोऽब्रवीत्—अस्ति शङ्खपुरं नाम नगरम्। तत्र शङ्करो नाम मालिकः समृद्धिमान्। तस्य रम्भिका नाम भार्या बहुरतिप्रिया सुभगा सुरूपा बहुभर्तृका च। अन्यदा शङ्करगृहे पितृकार्यमागतम् तस्मिन्दिने तयोपपतयश्चत्वारो निमन्त्रिताः पुष्पाणां विक्रयाय गतया चतुष्पथे ग्रामणीर्वणिक्सूनुस्तलारश्च बलाधिपश्च प्रत्येकं ते ते पृथक्पृथक् आकारिताः परस्परमजानन्तः—मदीयं भवनं प्रति प्रागेव समागन्तव्यमिति।

द्वितीयेऽह्नि मालिके वाटिकां गते वणिक्सूनुः स्नात्वा भुक्त्वा च तया सह रन्तुं समाययौ। वणिजि अर्धस्नाते ग्रामकूटो गृहद्वारं समापतन्दृष्टः। ततः स्नानं कुर्वन्वणिक्तथाभूतो वंशमये कोष्ठे खलियुक्ते क्षिप्तो भययुक्तश्च। ग्रामकूटेऽप्यर्धस्नानते बहिस्तारः समायातः। तं दृष्ट्वा सोऽपि तस्मिन्नेव कोष्ठे क्षिप्त उक्तश्च—यदधः सर्पिणी प्रसूतास्ति।

ततोऽप्यन्तराल एवं स्थातव्यमिति तलारोऽप्यर्धस्नातो बलाधिपं दृष्ट्वा भाण्डसमूहे क्षिप्तः। बलाधिपोऽप्यर्धस्नातो मालिकं दृष्ट्वा तत्रैव क्षिप्तः। ततो मालिको लोकश्च तस्मिन् पितृकार्ये यदृच्छया भोजिताः। एवं कृत्वा तेषां चतुर्णामपि परस्परमलक्षितानां पृथक्पृथक् भोजनं परमान्नामृतं समर्पितम्। वणिजा तु भुञ्जानेन बहु फूत्कृतम्। तदोपरिस्थितेन च सर्पिणीं शङ्कमानेन मूत्रितम्। वणिजा तु घृतमिति ज्ञात्वा भाजनमुत्क्षिप्तम्। उपरिस्थितस्य मुखे लग्नम्। ततः स शंकितः। सोऽपि च लग्नं लग्नमिति वदन्दत्तझम्पो निर्ययौ। अन्येऽपि लग्नाक्षरभयाकुला यावन्निर्गताः शङ्करेण जनैश्च दृष्टाः सविस्मयं खलिखरडिताः।

ततः सा कथं भवतु ?

उत्तरम्—यदा सा पत्या पृष्टा किमिदमिति तदा

तयोक्तम्—

श्रद्धाहीनं कृतं श्राद्धमिदं नूनं त्वया प्रिय ।
अतोऽभुक्त्वा क्षुधाक्रान्ताः पितरस्ते विनिर्गताः ।।१८२।।

ततः स पुनः श्राद्धं चकार। रम्भिकावचनात्तेन निर्गताः।

इति कथां श्रुत्वा प्रभावती सुप्ता ।

## चतुस्त्रिंशत्तमी कथा

अथान्यस्मिन्दिने गमनार्थं प्रभावती शुकं पप्रच्छ।

शुकः प्राह—

याहि देवि गता वेत्सि भङ्गुरम् यदि भाषितुम् ।
कुमार्यै पारडीं दत्वा यथोक्तं शम्भुना पुरा ।।१८३।।

प्रभावत्याह—कथमेतत्।

शुकः प्राह—पुरा कस्मिँश्चिन्नगरे शम्भुनामा विप्रोऽभूत्। द्यूतकृन्नानादेशपरिभ्रमणशीलो मार्गे गच्छन् क्षत्तरक्षिकां सुरूपां बालिकां दृष्ट्वा ताम्बूलं दत्वा सान्त्वयन्निदमुवाच यन्मत्सम्भोगकरणे इमां मदीयां पारडीं गृहाण मया सह रतं कुरु।

सुखाश्रयं तया तथा विहितम्। स च सिद्धे कार्ये तां याचते। कथं लभते ?

उत्तरम्—यावत्तेन याचिता तावत्सा चलिता गृहं प्रति। सोऽपि च पञ्च कणिशानि गृहीत्वा पृष्ठे लग्नः। तेन च ग्रामगतेन फूत्कृतम्—अहो ग्राममुख्याः ! पश्यत। ग्रामेऽस्मिन्महदद्भुतम्। पञ्चकणिशकारणेनानया मदीयं वस्त्रमपहृतम्।

ग्राम्यस्तत्समर्पितम्। तया च न किंचिदुक्तं लज्जया।

इति कथां श्रुत्वा प्रभावती सुप्ता ।

## पञ्चत्रिंशत्तमी कथा

अपरेऽह्नि सा शृङ्गारान्विता शुकं पप्रच्छ।

शुकः प्राह—

गच्छ देवि न ते दोषो यदि तत्र गता सती।
स्वार्थं कर्तुं विजानासि तिलक्रयकरो यथा ।।१८४।।

'कथमेतत् ?'

शुकः प्राह—पुरा कस्मिँश्चिद्ग्रामे शम्बकनामा वणिक्तिलग्राहकः। स च सरग्रामं ययौ। तत्रस्थस्य भाण्डशालिकस्य गृहे गतः। स गृहे नास्ति। तस्य भार्यास्ति परं कुलटा। नेत्रसंज्ञया परस्परं प्रीतिरुत्पन्ना। तत्रैव सा भुक्ता अङ्गुलीयकं दत्वा। सम्बन्धादनतरं स तदंगुलीयकं जिघृक्षति। अनेन विधिना दत्तमंगुलीयकं स कथं गृह्णात्विति प्रश्नः।

शुकः प्राह—तिलग्राहकस्तदलभमानो विपणिस्थं भाण्डशालिकमाह—'देहि मे तिलप्रस्थशतं यत्सत्यंकारितं मया।''

एवमुक्तः स आह—'के तिलाः कश्च वक्ता त्वं सत्यंकारश्च कीदृशः ? तेनोक्तम्—प्रस्थं प्रति द्विकप्रवृद्ध्या त्वद्भार्यया सत्यंकारेऽङ्गुलीयकं गृहीतम्।

ततो रुष्टेन वणिजा भार्यापार्श्वे निजं सुतं प्रेषयित्वा' इति

कथयामास—त्वदीयेनेदृशेन व्यवहारेणास्मद्गृहं वृद्धिमाप्स्यति।

पुत्रोऽप्यङ्गुलीयकमादाय तिलग्राहकस्यार्पयामास। सोऽपि यथागतं तथा ययौ। ततो यदि प्रभवति तवाप्येवं बुद्धिरस्ति तदा गम्यतां नान्यथेति कथां श्रुत्वा प्रभावती सुप्ता।

## एकोनचात्वारिंशत्तमी कथा

अपरेऽह्नि सन्ध्यासमये पुरुषान्तरगमनाय प्रभावती शुकं पृच्छति स्म—हे शुक ! अहं गमिष्यामि।

शुकः प्राह—

व्रज देवि ! वरं यानं त्वं भोक्तुं सुभगं नरम् ।
वक्तुं चेद्विषमे वेत्सि तुलाग्राहीव भामिनि ।।१८९।।

प्रभावती प्राह—'कथमेतत् ?'

कस्तुलाग्राहकः कीर गृहीता च तुला कुतः ।
विषमं च किमायातं कथां कथय शोभनाम् ।।१९०।।

अस्त्यत्र कुण्डिनं नाम नगरम्। तत्र भूधरो नाम वणिक्पुण्यक्षयात्क्षीणधनो जनैस्त्यक्तः।

उक्तञ्च—

विद्वान्धनी धनी दाता धनी साधुर्गुणाग्रणीः ।
सर्वबन्धुर्धनी पूज्यो धनहीनो गतप्रभः ।।१९१।।

यदा तु स तुलामात्रधनोऽभवत्तदान्यवणिग्गृहे तुलां मुक्त्वा देशान्तरं गतः। तत्र धनमर्जयित्वा निजनगरमागत्य तं वणिजं तुलां ययाचे। वणिक्पार्श्वात्तुला न लब्धा। तुलायां तु लुब्धो वणिक्मूर्ख उत्तरं चक्रे यत्त्वदीया तुला मूषिकैर्भक्षितेति श्रुत्वा भूधरस्ततूर्णीं स्थितः। स च एकदा तस्य वेश्मनि भोजनाय गतः क्रीडन्तं बालकं दृष्ट्वा प्रच्छन्नं गृहीत्वा निजगृहं ययौ। बालकपिता च दुःख पूरिताङ्गो रुरोद सकुटुम्बः। तञ्च रुदन्तं दृष्ट्वा प्रतिवेश्मिको जगाद—रे त्वदीयः सुतो भूधरेण गृहीतः।

ततोऽसौ तद्गृहं गत्वा भूधरात्सुतं याचितवान्।

भूधरेणोक्तम्—मित्र ! त्वत्पुत्रो मत्संगे स्नानार्थे नदीतीरे गतस्तत्र श्येनेनापहृतः।

इति श्रुत्वा तेन वणिजा राजकुले गत्वा पुत्रहरणवृत्तान्तो निवेदितः। भूधरोऽपि राजकुलं ययौ। तत्कथय स बालहर्ता कथं मुच्यतामिति—प्रश्नः।

शुकः — यदा भूधरो राजसमक्षं मन्त्रिणा पृष्टस्तदा एवं जगाद—

तुलां लोहमयीं यत्र खादन्ते देव मूषकाः ।
गजं तत्र हरेत् श्येनो दारके कोऽत्र विस्मयः ।।१९२।।

श्रुत्वैतद्वचनं मन्त्रिणोक्तम्—यदायं धूर्तस्तव तुलां समर्पयति तदा दारकोऽपि दातव्यो नान्यथा।

तेन दारकः समर्पितः। तुलाग्राही दण्डितः सन् तुलां समर्पयामास।

इति कथां श्रुत्वा प्रभावती सुप्ता ।

—*****—





The editor Professor **P. Sri Ramachandrudu** is a prolific writer in Sanskrit and in English. Besides being an editor-cum-compiler he has authored many short stories in Sanskrit and a greatly acclaimed book in English on Panditaraja Jagannatha. He is at present Professor Emeritus in Sanskrit and Honorary Director, Sanskrit Academy, Osmania University, Hyderabad.

ISBN 81 7201 512 7

# साहित्यरत्नकोशः

## Treasures of Sanskrit Literature

TITLES PUBLISHED UNDER THE SERIES

**वेदशास्त्रसंग्रहः** (Selections from Vedic and Sastric Texts) Vol I (1966) Ed. Acharya Vishva Bandhu; pp. xxxix, 381; Rs. 15.

**पुराणेतिहाससंग्रहः** (Selections from the *Mahābhārata,* the *Rāmāyaṇa* and the *Purāṇas*) Vol II (1959) Ed. S.K. De and R.C. Hazra; pp. xiv, 353; Rs. 10. (cloth bound) Rs. 7.50 (Popular).

**बौद्धसंग्रहः** (Selections from Buddhist Sanskrit Texts) Vol III (1962) Ed. Nalinaksha Dutt;pp. xxviii, 143; Rs. 10 (cloth bound) Rs. 7.50 (Popular).

**काव्यनाटकसंग्रहः (प्रथमो भागः)** (Selections from Poetry and Drama-Part 1 Poetry) Vol. V (1970) Comp. V.S. Agrawala, Ed. V. Raghavan; pp. xxviii, 306 (Out of Stock)

**काव्यनाटकसंग्रहः (द्वितीयो भागः)** (Selections from Poetry and Drama-Part II-Drama and Supplement to Part I Poetry) Vol V (1977) Comp. V. Raghavan, pp. xviii, 288

**अभिलेखसंग्रहः** (An Anthology of Sanskrit Inscriptions) Vol VI (1964) Comp. & Ed. Bahadur Chand Chhabra; pp. xxiv, 104; Rs. 8.50 (cloth bound) Rs. 7 (Popular).

**सुभाषितसंग्रहः (प्रथमो भागः)** (Selections of *Subhāṣitas* from the *Upaniṣads,* the *Mahābhārata* and the *Purāṇas*) Vol VII Part I (1971) pp. xvi, 348 (Out of Stock)

**सुभाषितसंग्रहः (द्वितीयो भागः)** Vol. VII part II (1982) Ed. V. Raghavan; pp. xxvi, 332; Rs. 30.

**जैनसंग्रहः** (Selections from Jain Prakrit and Sanskrit Texts (1980) Ed. V.M. Kulkarni;pp. xxxvi, 236, Rs. 30.

**वेदाख्यानकल्पद्रुमः** (Selections from Brāhmaṇas, Saṃhitas and Upaniṣads) Vol. ix (1992) Ed. Vidya Niwas Misra, pp xvi, 184; Rs. 70, ISBN 81 7201 201 2